# मानवश्रौतसूत्रम्

उत्तरतउपचारो विहारः १ अन्तराणि यज्ञाङ्गानि कर्तुः २ चत्वारिचत्वारि कर्माणि प्रसंपश्यन्कुर्यादा चतुर्थात्कर्मणः ३ मन्त्रान्तेन कर्मादीँ संनिपातयेत् ४ आदिनोत्तरस्य पूर्वस्यान्तँ विद्यात् ५ यज्ञोपवीती दक्षिणाचारः प्राङ्न्याय्यं कर्मोपाँशु यजुर्वेदेन कुर्यात् ६ दर्शपौर्णमासयोर्धर्माः साधारणाः ७ निर्देशा-द्व्यवतिष्ठेरन् ८ चत्वार ऋत्विजोऽध्वर्युर्होता ब्रह्माग्नीध्रः ९ अनादेशेऽध्वर्युः कुर्यात् १० उपवत्स्वशने भुक्ते गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयति ११

देवा गातुविदो गातुँ वित्त्वा गातुँ यज्ञाय विन्दत ।
मनसस्पतिना देवेन वाताद्यज्ञः प्रयुज्यताम् ॥

इति जपित्वा व्रतोपेतस्य शाखामछैति पर्णशाखाँ शमीशाखाँ वा प्राचीमु-दीचीँ वाहतां बहुशाखां बहुपर्णामशुष्काग्रामसुषिराम् १२ इषे त्वेति छिनत्ति १३ ऊर्जे त्वेत्यनुमार्ष्टि १४ सुभूतायेति संनमयति १५ वायवः स्थेति शाखया वत्सानपाकरोति त्रीन्यजुषा तूष्णीं त्रीन् १६ अपाकृतानामेकँ शाखया तूष्णी-मुपस्पृशति १७ दर्भपिञ्जूलैः सह शाखया देवो वः सविता प्रार्पयत्विति गाः प्रार्पयति १८ आप्यायध्वमघ्न्या देवेभ्या इन्द्राय भागमितीन्द्रयाजिनो ॥ महेन्द्रायेति महेन्द्रयाजिनः १९ शुद्धा अपः सुप्रपाणे पिबन्तीः शतमिन्द्राय शरदो दुहानाः । रुद्रस्य हेतिः परि वो वृणक्तु ॥ इति व्रजन्तीरनुमन्त्रयते २० ध्रुवा अस्मिन्गोपतौ स्यात बह्वीरिति यजमानस्य गृहानभिपर्यावर्तते । यजमानँ वा प्रेक्षमाणो जपति २१ अग्निष्ठेऽनस्यग्न्यगारे वा यजमानस्य पशून्पाहीति प्रत्यगग्राँ शाखामुपकर्षति २२ उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इत्यसिलमादत्ते २३ गोषदसीति गार्हपत्यमुपतिष्ठते २४ उर्वन्तरिक्षँ वीहीति व्रजति २५ प्रत्युष्टँ रक्ष इत्याहवनीये निष्टपति २६ प्रेयमगादिति जपति २७ प्रागुदग्वाभिप्रव्रज्य बर्हिरछिति २८ देवानां परिषूतमसीति दर्भान्प्रस्तराय परिषुवति २९ विष्णोः स्तुप इति दर्भस्तम्बम-भिमृशति ३० अतिसृष्टो गवां भाग इत्येकान्तमतिसृजति ३१ शेषं प्रस्तराय

३२ माधो मोपरि परुस्त ऋध्यासमिति जपति ३३ देवस्य त्वा सवितुः प्रसव इति विशाखानि प्रति लुनाति संनखं मुष्टिम् ३४ पृथिव्याः संपृचस्पाहीति तृणमन्तर्धाय प्रस्तरँ सादयति ३५ अकल्माषान्दर्भाल्लुनाति प्रभूतानप्रधूनयन् ३६ आछेत्ता ते मा रिषमिति जपति ३७ अतस्त्वं बर्हिः शतवल्शँ विरोहेत्यालवानभिमृशति ३८ सहस्रवल्शा वि वयँ रुहेमेत्यात्मानं प्रत्यभिमृशति ३९ अयुपिता योनिरिति शुल्बं प्रतिदधात्ययुग्धातु प्रदक्षिणम् ४० अदित्या रास्नासीति शुल्बमनुलोमं त्रिरनुमार्ष्टि ४१ यथालूनममुतो वा सुसंभृते त्वा संभरामीति शुल्बे बर्हिस्त्रिः संभरति ४२ अयुपिता योनिरिति प्रस्तरम् ४३ इन्द्राण्याः संनहनमित्यन्तौ समायम्य पूषा ते ग्रन्थिमिति प्रदक्षिणमावेष्टयति ४४ स ते मास्थादिति पश्चात्प्राञ्चमुपकर्षति ४५ आपस्त्वामश्विनौ त्वामृषयः सप्त मामृजुः । बर्हिः सूर्यस्य रश्मिभिरुषसां केतुमारभे ॥ इत्यारभते ४६ इन्द्रस्य त्वा बाहुभ्यामुद्यछ इत्युद्यछते ४७ बृहस्पतेर्मूर्ध्ना हरामीति मूर्धन्यादधाति ४८ उर्वन्तरिक्षँ वीहीत्येति ४९ अदित्यास्त्वा पृष्ठे सादयामीति पश्चादपरस्य सादयत्यनोऽधो वा ५० बर्हिरसि देवंगममित्युपर्यादधाति ५१ समूलैर्दर्भैः पालाशं खादिरँ रौहितकँ वाष्टादशदार्विध्मँ संनह्यति । त्रीँश्च परिधीन्यो यज्ञियो वृक्षस्तस्य स्थविष्ठो मध्यमो द्राघीयान्दक्षिणोऽणीयान्ह्रसिष्ठ उत्तरः ५२ उपरीध्ममादधाति ५३ १

चन्द्रादर्शनेऽमावास्यायामिध्माबर्हिः संनह्यापराह्णे पिण्डपितृयज्ञेन चरन्ति प्राग्दक्षिणाचाराः १ प्राचीनाववीत्युत्तरतःपश्चाद्दक्षिणाग्नेः सँस्तीर्य पात्राणि प्रयुनक्ति पवित्रं कृष्णाजिनमुलूखलं मुसलँ शूर्पमुदञ्चीमायवनं दर्वीँ स्फ्यमेकैकं दक्षिणंदक्षिणम् २ दक्षिणतोऽग्निष्ठमारुह्योदञ्च्यामेकपवित्रमवधाय पूरयित्वा बिलं निमार्ष्टि ३ कृष्णाजिने पत्न्यवहन्ति । परापावमविवेचयन्सकृत्फलीकरोति ४ दक्षिणाग्नावुदञ्चीमधिश्रित्य पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रसव्यं पर्यायुवञ्जीवतण्डुलँ श्रपयति ५ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्य दक्षिणत उद्वासयति ६ दक्षिणतःपुरस्ताद्दक्षिणाग्नेस्त्रिषु प्रक्रमेष्वपरिमिते वावकाशे स्फ्येन सकृत्परमुद्धत्यावसिञ्चति ७ अपयन्त्वसुराः पितृरूपा ये रूपाणि प्रतिमुच्याचरन्ति ।

परापुरो निपुरो ये हरन्त्यग्निष्टानस्मात्प्रणुनोत्तु लोकात् ॥ इत्यग्निं प्रणयति ८ अग्रेणोद्धतमवोक्षिते सादयति ९ समूलेष्वन्यानुपसँयम्य त्रिः कर्षूमग्निं च प्रसव्यमुद्धावं त्रिः परिस्तीर्य कर्ष्वामुद्धवानास्तृणाति १० प्रतिपरिक्रम्य सव्यमन्वेकैकमाहरत्यायवनं दर्वीमोदनमाञ्जनमभ्यञ्जनमूर्णास्तुकमुदकुम्भम् ११ एत पितरो मनोजवा आगन्त पितरो मनोजवा इत्यावाहयति १२ परिश्रयेद्यद्यादित्यः सकाशे स्यात् १३ परेतन पितरः सोम्यास इत्युदकुम्भेनाग्निं प्रसव्यं त्रिः परिषिञ्चन्पर्येति १४ अया विष्ठेत्येतया निधाय निधाय त्रिरपरिषिञ्चन्प्रतिपर्येति १५ शुन्धन्तां पितरः शुन्धन्तां पितामहाः शुन्धन्तां प्रपितामहा इति मूलदेशे बर्हिषस्त्रीनुदकाञ्जलीन्निनयति १६ मेक्षणेनोपोअहत्य सोमाय पितृमते स्वधा नम इति जुहोति १७ अग्नये कव्यवाहनाय स्वधा नम इत्यसँसक्तां दक्षिणार्धपूर्वार्धे द्वितीयाँ हुत्वा मेक्षणमन्वध्यस्यति कञ्चुकानि पवित्रं च १८ दर्व्योद्धृत्योद्धवेषु पिण्डान्निदधाति । पितुर्नाम्नासावेतत्ते ये चात्र त्वानु तस्मै ते स्वधेति प्रथमं पितामहस्य नाम्ना स्थवीयाँसं मध्यमं प्रपितामहस्य नाम्ना स्थविष्ठं दक्षिणम् १९ द्वयोः परयोर्नामनी गृह्णन्मूलदेशे लेपं निमार्ष्टि २० लुप्यते जीवत्पितुः पिण्डनिधानं जीवत्पितामहस्य वा । न जीवन्तमतिदद्याद्यदि दद्याद्येभ्य एव पिता दद्यात्तेभ्यो दद्यात् २१ यदि बन्धुनाम न विदितँ स्वधा पितृभ्यः पृथिवीषद्भ्य इति प्रथमं पिण्डं निदध्यात्स्वधा पितृभ्योऽन्तरिक्षसद्भ्य इति द्वितीयँ स्वधा पितृभ्यो दिविषद्भ्य इति तृतीयम् २२ यात्र पितरः स्वधा तया यूयं मादयध्वमिति दक्षिणां दिशमन्वीक्षमाणो जपति २३ येह पितर ऊर्क्तस्यै वयं ज्योग्जीवन्तो भूयास्मेत्युक्त्वावर्तते २४ आ तमितोरास्ते दक्षिणाग्निमन्वीक्षमाणः २५ व्यूष्मसु पिण्डेष्वमीमदन्त पितर इति प्रतिपर्यावर्तते २६ वासस ऊर्णां दशाँ वाभ्युक्ष्य पिण्डदेशे निदधाति २७ लोमोत्तरवयसश्छित्त्वा वाससो वा दशामतो नोऽन्यत्पितरो मा योष्टेति निदध्यात् २८ आङ्क्ष्वासावित्याञ्जनस्य प्रतिपिण्डं लेपं निमार्ष्ट्यभ्यङ्क्ष्वासावित्यभ्यञ्जनस्य २९ मार्जयन्तां पितरो मार्जयन्तां पितामहा मार्जयन्तां प्रपितामहा इति प्रतिपिण्डं त्रीनुदकाञ्जलीन्निनयति ३० आधत्त पितरो गर्भं कुमारं पुष्करस्त्रजम् । यथा पुमान्भवेदिह तथा कृणुतोष्मपाः ॥ इति मध्यमं पिण्डं पत्नी प्राश्नीयात् ३१ अग्नावितरावादध्याद्ब्राह्मणे वा

भक्षयेदप्सु वा गमयेत् ३२ उद्धवाननुप्रहृत्य वीरं नो दत्त पितर इत्युदङ्ङीमवजिघ्रेत् ३३ अप उपस्पृश्य नमो वः पितर इति नमस्करोति ३४ एषा युष्माकं पितर इति दिशमनुदिशतीमा अस्माकमितीतराः ३५ जीवा वो जीवन्त इह सन्तः स्यामेति जपति ३६ परेतन पितरः सोम्यास इति प्रवाहयति ३७ प्रजापते न त्वदित्येतयोपोत्तिष्ठति ३८ अक्षन्नमीमदन्तेति पुनरेति ३९ मनस्वतीर्जपन्नग्ने तमद्येत्येतया गार्हपत्यमुपतिष्ठते ४० अभ्युक्ष्य पात्राणि द्वेद्वे प्रतिपरिहरति ४१ अप्यनाहिताग्निना कार्यः ४२ २

वेदं करोति वत्सज्ञुं प्रसव्यमावेष्ट्य तूलैर्दक्षिणोत्तरिणं । तूलेषु शुल्बं प्रतिनिधाय त्रिरावेष्ट्य संनह्यत्युत्तरमुत्तरं प्रदक्षिणम् १ प्रादेशमात्रे शुल्बात्परिवास्योत्करे मूलानि गमयति मूलानि निदधाति २ वेदं कृत्वा वेदिं करोति पूर्वेद्युरमावास्यायामोत्तरस्मात्परिग्रहात् ३ अन्तर्वेदि शाखायाः पलाशानि विशात्य् मूलतः परिवास्य तस्यान्तर्वेदि न्यस्येत् ४ उपवेषं च कुर्यात्तेन च कपालान्युपदधाति ५ दर्भमयं पवित्रं त्रिगुणरज्ञु शाखायामनुलोममवसृजेद्ग्रन्थिमकुर्वम् ६ एता आचरन्तीर्मधुमद्दुहानाः प्रजावरीर्यशसे विश्वरूपाः । बह्वीर्भवन्तीरुपजायमाना इह व इन्द्रो रमयतु गावः ॥ इह वो महेन्द्रो रमयतु गाव इत्यायतीरनुमन्त्रयते ७ यवाग्वैताँ रात्रीँ यजमानोऽग्निहोत्रं जुहोति । तस्याः पिण्डं निदध्यात् ८ परिस्तृणाति पूर्वमग्निमपरौ च ९ उत्तरतो गार्हपत्यस्य सँस्तीर्णे द्वेद्वे प्रयुनक्ति कुम्भ्यौ शाखापवित्रं निदाने दोहनं प्रोक्षणीम् १० बर्हिषः पवित्रे कुरुते प्रादेशमात्रे समेऽप्रछिन्नप्रान्ते ११ ओषध्या वैष्णवे स्थ इति छिनत्ति १२ विष्णोर्मनसा पूते स्थ इत्यद्भिस्त्रिरनुमार्ष्टि १३ अपः स्रुच्यासिच्योत्तानौ पाणी कृत्वाङ्गुष्ठेनोपमध्यमया चादाय देवो वः सवितोत्पुनात्वित्येतया पच्छोऽप उत्पुनाति १४ शुन्धध्वमिति पात्राणि प्रेक्षति १५ दोहनं निदाने गोदुहे प्रदायोपसृष्टां मे प्रब्रूताद्विहारं च गां चोपसृष्टामन्तरेण मा संचारिषुरिति ब्रूयात् १६ उपसृजामीत्युक्ते पोषाय त्वेति वत्समवसृज्यमानमनुमन्त्रयते । अयक्ष्मा वः प्रजया सँसृजामि रायस्पोषेण बहुला भवन्तीः । इति संगछमानामदित्या रास्नासीति निदीयमानाम् १७ उपसीदामीत्युक्ते ऊर्जं पयः पिन्वमाना घृतं

च जीवा जीवन्तीरुप वः सदेम् ॥ इति जपति १८ वसूनां पवित्रमसीति शाखापवित्रमादत्ते ॥ द्यौरसि पृथिव्यसित्युखाम् १९ मातरिश्वनो घर्म इत्यधिश्रयति । पवित्रमवदधाति २० अन्वारभ्य वाचँ यछति २१ प्राक्सायं पवित्रमादधाति निर्यक्प्रातः २२ उत्सं दुहन्ति कलशं चतुर्विलमिडां धेनुं मधुमतीँ स्वस्तये । तदिन्द्राग्नी पिन्वताँ सूनृतावत्तद्यजमानममृतत्वे दधातु ॥ इति धाराघोषे जपति २३ दुग्ध्वानयति कुम्भ्याम् २४ द्यौश्चेमँ यज्ञं पृथिवी च संदुहातां धाता सोमेन सह वातेन वायुर्यजमानाय द्रविणं दधात्वि-त्यासिच्यमाने जपति २५ कामधुक्ष इति पृछत्यमूमितीतरः २६ सा विश्वायुरस्त्वसाविति गोर्नाम गृह्णाति सा विश्वभूरिति द्वितीयस्याँ सा विश्वकर्मेति तृतीयस्याम् २७ समानं दोहनम् २८ तिसृषु दुग्धासु बहु दुग्धीन्द्राय देवेभ्यो हविरिति त्रिरुक्त्वा वाचँ विसृजते ॥ महेन्द्रायेति वा २९ विसृष्टवागनन्वारभ्य तूष्णीमुत्तरास्तिस्रो दोहयति ३० हुतः स्तोक इति ३ सर्वासु दुग्धासु जपति ३१ संपृच्यध्वमृतावरीरूर्मिणा मधुमत्तमाः । पृञ्चतीः पयसा पयो मन्द्रा धनस्य सातये ॥ इति दोहनसंक्षालनं कुम्भ्यामानयति ३२ दृँह गा दृँह गोपतिं मा वो यज्ञपती रिषदित्युदग्वासयति वर्त्म कुर्वन् ३३ शीतीभूतमग्निहोत्रोच्छेषेण दध्निन्द्राय त्वा भागं सोमेनातनच्मीत्यातनक्ति ॥ महेन्द्रायेति वा ३४ अदस्तमभि विष्णवे त्वेति यवाग्वाः पिण्डमवदधाति ३५ विष्णो हव्यँ रक्षस्वेत्युपर्यादधाति ३६ आपो जागृतेति मोदकेनापिदधाति दारुपात्रेणायस्पात्रेण वा । यदि मृन्मयँ स्यात्तृणं दारु वान्तर्दध्यात् ३७ प्रातर्दोहाय वत्सानपाकरोति ३८ उपसर्जनप्रभृति समानमोद्वासनात् ३९ गार्हपत्ये हवीँषि श्रपयत्याहवनीये जुहोति ४० नाग्निभ्यो व्यावर्तेता-विपरिहरन्कुर्यात् ४१ शुल्बार्थे प्रदक्षिणँ शुल्बँ रज्ज्वर्थे प्रदक्षिणा रज्जुः ४२ प्रोक्षणमुत्पवनँ संमार्जनमिति त्रिः ४३ दर्भैः कुर्याद्वैहारिकाणि वैहारिकाणि ४४ ३

इति मानवसूत्रे प्राक्सोमे प्रथमोऽध्यायः

श्वोभूते पश्चाद्गार्हपत्यस्योदीच उद्धूय सँस्तृणाति १ संततामुलपराजिँ स्तृणाति दक्षिणेन विहारमाहवनीयस्य पूर्वार्धाद्द्वितीयामुत्तरेण विहारमग्रेणाहवनीयं

दक्षिणैरुत्तरानवस्तृणाति २ दक्षिणा वेद्यँसाद्ब्रह्मणे सँस्तृणात्यपरँ यजमानाय पश्चार्धे पत्न्यै ३ उत्तरतः सँस्तीर्णाद्दक्षिणा पवित्रचमसस्फ्यकपालाग्नि-होत्रहवणीशूर्पकृष्णाजिनशम्योलूखलमुसलदृषदुपलवेदकुटरुस्रुवजुहूपभृद्ध्रु वाप्राशित्रहरणेडापात्र्याज्यधानपात्रीसँवपनपात्रीः प्रक्षाल्य सँस्तीर्णे द्वेद्वे प्रयुनक्ति । कुटर्वन्तान्यपराणि ४ खादिरँ स्फ्यस्रुवं पालाशी जुहूराश्वत्थ्यु-पभृद्वैकङ्कती ध्रुवा ५ मूलतोऽरत्निमात्रदण्डाः पाणितलमात्रपुष्करास्त्वचो-बिलाद्व्यङ्गुलखाताश्चतुरङ्गुलोच्छ्रयाः । प्रादेशमात्राणि प्रस्रवणानि ६ स्फ्यो भृष्टिलो । वरणस्य शम्या ७ वेषाय वामिति पाणी प्रक्षाल्य चमसेनापः प्रणयति । काँस्येन ब्रह्मवर्चसकामस्य गोदोहनेन पशुकामस्य मार्त्तिकेन पुष्टिकामस्य प्रतिष्ठाकामस्य वा ८ वानस्पत्योऽसीति चमसमादत्ते बार्हस्प-त्यमसीति काँस्यं पार्थिवमसीति मार्त्तिकं च ९ देवेभ्यः शुन्धस्वेति चमसं प्रक्षालयति देवेभ्यः शुम्भस्वेति काँस्यं मार्त्तिकं च १० उत्तरतो गार्हपत्यस्य पवित्रवति यद्वो रेवती रेवत्यँ यद्वो हविष्या हविष्यम् । यद्व ओजो यच्च नृम्णं तँ व ऊर्मि मधुमन्तम् देवयज्यायै जुष्टं गृह्णामीत्युपबिलं चमसं पूरयति ११ देवीराप इत्यपोऽभिमन्त्रयते १२ ब्रह्मन्नपः प्रणेष्यामि यजमान वाचँ यछेत्युक्त्वा वाचँ यछति १३ को वः प्रणयति स वः प्रणयतु कस्मै वः प्रणयति तस्मै वः प्रणयतु बृहस्पतिर्वः प्रणयत्विति मनसा प्रणयति १४ स्फ्यमुपयामं कृत्वा समं प्राणैर्धारयमाणः को वो युनक्ति स वो युनक्तु कस्मै वो युनक्ति तस्मै वो युनक्तु बृहस्पतिर्वो युनक्त्विति युनक्ति १५ विश्वेभ्यः कामेभ्यो देवयज्यायै प्रोक्षिताः स्थेत्युत्तरतः पूर्वस्य सादयति १६ उलपराज्यावस्तृणाति १७ यजमाने प्राणापानौ दधामीत्यादाय पवित्रे यथायतनँ स्फ्यपवित्रं निधाय सँसीदन्तां दैवीर्विश इति पात्राणि सँसादयति १८ संततामुलपराजि-मपरस्मादध्या पूर्वस्माद्यज्ञस्य संततिरसि यज्ञस्य त्वा संतत्यै स्तृणामीति स्तृणाति १९ वानस्पत्यासीति स्रुचमादत्ते ॥ वर्षवृद्धमसीति शूर्पम् २० उर्वन्तरिक्षँ वीहीति व्रजति २१ प्रत्युष्टँ रक्षः इत्याहवनीये निष्टपति २२ दक्षिणतः पश्चादपरस्याग्निष्ठान्निर्वपति । पात्र्या वा स्फ्यमुपकृष्यानोमन्त्राँस्तु जपेत् २३ धूरसीति धुरमभिमृशत्युत्तरां च २४ उदङ्ङतिक्रम्य देवानामसि वह्नितममित्युत्तरामीषामारभ्य जपति २५ विष्णोः क्रमोऽसीति दक्षिणं चक्रे

पादमादधाति २६ अह्रुतमसि हविर्धानमित्यारोहति २७ उरु वातायेत्यवसारयति २८ मित्रस्य वश्चक्षुषा प्रेक्ष इति हविष्यान्प्रेक्षते व्रीहीन्यवान्वा २९ शूर्पे स्रुचमाधाय स्रुचि पवित्रे यजमान हविर्निर्वप्स्यामीत्युक्त्वा हविर्निर्वपत्यग्न इति प्रवसतः ३० देवस्य वः सवितुः प्रसव इत्यग्निहोत्रहवण्याँ हविष्यान्मुष्टिना त्रिरावपति तूष्णीं चतुर्थम् ३१ एवं द्वितीयमग्नीषोमीयं पौर्णमास्यामैन्द्राग्नममावास्यायामसंनयतः ३२ संनयत इन्द्रँ वा संनयत इन्द्रं महेन्द्रमेकेषामिन्द्रँ यजेत बुभूषन् ३३ सोमयाजिनां महेन्द्रो देवता । सोमयाजिनां गतश्रीरौर्वो गौतमो भारद्वाजस्ते महेन्द्रँ यजेरन् ३४ अथेतरे सँवत्सरमिन्द्रमिष्ट्वाग्नये व्रतपतयेऽष्टाकपालं निरुप्य ते महेन्द्रँ यजेरन् ३५ इदं देवानामिति निरुप्तानभिमृशतीदमु नः सहेति शेषान्यतोऽधि निर्वपति ३६ दृँहन्तां दुर्या इत्यवरोहति ३७ स्वाहा द्यावापृथिवीभ्यामिति जपति ३८ निर्वरुणस्य पाशादिति निःसर्पति ३९ स्वरभिव्यक्शमित्यभिवीक्षतेऽग्निमादित्यँ वा ४० उर्वन्तरिक्षँ वीहीत्येति ४१ अदित्या व उपस्थे सादयामीति पश्चादपरस्य सादयति ४२ १

अनिर्मृष्टायामासिच्य विष्णोर्मनसा पूते स्थ इतिप्रभृतिभिर्व्याख्यातमुत्पवनम् १ उत्पूयाग्नये वो जुष्टान्प्रोक्षामीति यथादेवतँ हविष्यान्प्रोक्षत्यनभिप्रोक्षन्नपरम् २ अग्ने हव्यँ रक्षस्वेत्यग्रेणापरँ हविष्यानुपसादयति ३ यद्वोऽशुद्ध इति पात्राणि प्रोक्षति ४ उत्तानानि पर्यावृत्य प्रोक्ष्य पूर्वाणि प्रतिपर्यावृत्यासंचरे स्रुचं निधायादित्यास्त्वगसीति कृष्णाजिनमादत्ते ग्रीवातः ५ अवधूतँ रक्ष इत्युदक्शसनमुत्करे त्रिरवधूनोति ६ अदित्यास्त्वगसीति पश्चादुत्करस्यास्तृणाति प्रत्यग्ग्रीवमुत्तरलोमम् ७ प्रतीचीं भसदं प्रत्यस्यति ८ न रिक्तमवसृजति ९ पृथुग्रावासीत्युलूखलमादधाति १० अग्नेर्जिह्वासीति हविष्यान्मुष्टिना त्रिरावपति तूष्णीं चतुर्थम् ११ बृहद्ग्रावासीति मुसलमादत्ते १२ हविष्कृता त्रिरवघ्नन्नाह्वयति १३ वाचँ विसृजते यजमानश्च १४ हविष्कृदेहीति ब्राह्मणस्य हविष्कृदागहीति राजन्यस्य हविष्कृदाद्रवेति वैश्यस्य १५ पत्न्यवहन्ति पिनष्टि च १६ आग्नीध्रो दृषदुपलँ समाहन्ति ॥ कुटरुरसीत्यश्मानमादत्त ॥ इषमावदेति पूर्वार्ध ऊर्जमावदेति पश्चार्धे

रायस्पोषमावदेत्युपलामेवं नवकृत्वः संपातयति १७ जाततुषेषु वर्षवृद्ध-मसीति पुरस्तात्प्रत्यक्शूर्पमुपोहति १८ प्रति त्वा वर्षवृद्धँ वेत्त्वित्युद्वपति १९ परापूतँ रक्ष इत्युत्करे निष्पुनाति २० प्रविद्धो रक्षसां भाग इति तुषान्प्रविध्यते २१ पुरोडाशकपाले तुषानोप्येदमहँ रक्षोऽवबाध इदमहं रक्षोऽधमं तमो नयामीत्यधस्तात्कृष्णाजिनस्योपवपति २२ वायुर्व इष ऊर्जे विविनक्त्विति विविनक्ति २३ देवेभ्यः शुन्धध्वमिति त्रिः फलीकरोति २४ आदानात्प्रभृति कृष्णाजिनस्य समानमास्तरणान्न भसदं प्रत्यस्यति २५ न रिक्तमवसृजति ॥ धिषणासि पार्वतीति कृष्णाजिने दृषदमादधाति । धिषणासि पार्वती प्रति त्वा पार्वती वेत्त्विति दृषद्युपलाम् २६ अदित्याः स्कम्भोऽस्सीत्युदक्शीर्ष्णीं शम्यां पश्चादुपकर्षति २७ धान्यमसि धिनुहि देवानिति त्रिरधिवपति २८ प्राणाय त्वेति प्राचीमुपलां प्रोहत्यपानाय त्वेति प्रतीचीं प्रतिकर्षति ॥ व्यानाय त्वेति मध्यदेशे व्यवगृह्णाति २९ दीर्घामनु प्रसृतिमिति संततं प्राञ्चं दीर्घं पिनष्टि ३० मित्रस्य वश्चक्षुषावेक्ष इति पिष्टान्यवेक्षते ३१ देवो वः सविता हिरण्य-पाणिरुपगृह्णात्विति पिष्टान्यवशीर्यमाणान्यनुमन्त्रयते ३२ अणूनि कुरुतादिति प्रेष्यति ३३ धृष्टिरसीत्युपवेषमादत्ते ३४ २

निर्दग्धँ रक्ष इत्यङ्गारमवस्थापयति १ ध्रुवमसि पृथिवी दृँहेति तस्मिन्क-पालमुपधायान्वारभ्यापाग्नेऽग्निमामादं जहीत्यङ्गारं बहिर्भस्म निरस्यति २ अग्ने देवयजनँ वहेत्यन्यमधिकृत्योत्सृजति ३ धरुणमस्यन्तरिक्षं दृँहेति पूर्वं धर्त्रमसि दिवं दृँहेति पूर्वार्धं धर्मासि विश्वा विश्वानि दृँहेति मध्यमाद्दक्षिणं चिदसीति पश्चार्धादुत्तरमध्यर्धं परिचिदसीति पूर्वार्धाद्दक्षिणँ विश्वासु दिक्षु सीदेति पश्चार्धाद्दक्षिणं सजातानस्मै यजमानाय परिवेशयेति पूर्वार्धादुत्तरमध्यर्धम् ४ एवमेकादशकपालस्य समानं त्रयाणामुपधानम् ५ एकमात्रे मध्यमाद्दक्षिणे तथोत्तरे ६ चतुर्थेन मन्त्रेण दक्षिणयोः पूर्वमुपदधाति पञ्चमेनोत्तरयोरपरँ षष्ठेन दक्षिणयोरपरँ सप्तमेनोत्तरयोः पूर्वमुत्तमेन शेषानि कुष्ठासु प्रदक्षिणम् ७ वसूनाँ रुद्राणामित्यङ्गारानभ्यूहति ॥ तप्येथामिति द्वे तप्यस्वेत्येकम् ८ तप्ताभ्यो-ऽधिश्रित्य प्रातर्दोहं दोहयति ९ निष्टप्योप्यमानायां पात्र्यामवधाय पवित्रे देवस्य वः सवितुः प्रसव इति पिष्टानि त्रिः सँवपति तूष्णीं चतुर्थम् १० वाचँ

यछत्याभिवासनात् ११ पिष्टलेपं निधायोत्पूय तप्ता हर्योष्ट्वा वाराभ्या-मुत्पुनामीति पिष्टान्युत्पुनाति १२ वेदोपयामः स्रुवेण प्रणीतानामाहरति समापा ओषधीभिरित्यासिञ्चति तप्ताश्च १३ अद्भ्यः परि प्रजाताः स्थ समद्भिः पृच्य-ध्वमिति तप्ताः परिसारयति १४ सीदन्तु विश इति पिष्टानि संनयति १५ मखस्य शिरोऽसीति पिण्डमभिमृशति १६ पूषा वाँ विश्ववेदा विभजत्विति समौ विभजति १७ अग्नये त्वेति दक्षिणं पुरोडाशमभिमृशति यथादेवत-मुत्तरम् १८ इदमहँ सेनाया अभीत्वर्या मुखमपोहामीति वेदेन कपालेभ्यो भस्मापोहति १९ घर्मोऽसि विश्वायुरित्याधेश्रयत्येवमुत्तरम् २० एकैकं कर्मोभयोः कुर्यात् २१ उरु प्रथस्वेति यावत्कपालं पुरोडाशं कूर्माकृतिं प्रथयति २२ सं ते तन्वा तन्वः पृच्यन्तामिति पिष्टलेपेनाविक्षारयँस्त्रिः परिमार्ष्टि २३ दक्षिणाग्नावाज्यँ विलाप्य गार्हपत्य उपाधिश्रित्य संपूय वेदोपया-मोऽदितिरशनाच्छिन्नपत्रेत्याज्यस्थालीमादत्ते २४ दक्षिणा गार्हपत्यात्पवि-त्रवति पृश्न्याः पयोऽस्यग्रेगुवस्तस्य तेऽक्षीयमाणस्य पिन्वमानस्य पिन्वमानं निर्वपामीत्याज्यस्थाल्याँ पवित्रवति निर्वपति २५ परि वाजपतिरिति हवींषि त्रिः पर्यग्निं करोति २६ देवस्त्वा सविता श्रपयत्वित्युल्मुकेनाभितापयति पि-ष्टलेपं च २७ अग्निष्टे तन्वं मा विनैदिति दर्भैस्त्वचं ग्राहयति २८ न ज्वालानपोहति २९ अग्ने ब्रह्म गृह्णीष्वेति वेदेन साङ्गारं भस्मनाभ्यूहति ३० अविदहन्तः श्रपयतेति प्रेष्यति ३१ वाचँ विसृजते यजमानश्च ३२ ३

पश्चादाहवनीयस्य यजमानमात्रीँ वेदिं मनसा परिमिमीते यथा हवींषि संभवेयुस्तथा तिरश्चयणीयसीं पुरस्तात् १ पूर्वार्धे वेद्या वितृतीयमात्रे प्रागु-दीचीः स्फ्येन तिस्रो लेखा लिखति २ एकताय स्वाहा द्विताय स्वाहा त्रिताय स्वाहेत्येतैरसँस्यन्दयंल्लेखासु पिष्टलेपं निनयति ३ अयँ वेदः पृथिवीमन्व-विन्दद्गुहाहितां निहितां गह्वरेषु । स मह्यं लोकँ यजमानाय विन्दत्वछिद्रँ यज्ञं भूरिरेताः कृणोतु ॥ इति वेदमादत्ते ४ वेदेन वेदिँ विविदुः पृथिवीँ सा पप्रथे पृथिवी पार्थिवाय । गर्भं बिभर्ति भुवनेष्वन्तस्ततो यज्ञस्तायते विश्वदानीम् ॥ इति वेदेन वेदिं प्राचीं त्रिः समुन्मार्ष्टि ५ उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इति स्फ्यमादत्ते ६ इन्द्रस्य बाहुरसीत्योषध्यानुमार्ष्टि । नाग्रं

प्रत्यभिमृशति ७ उत्तरतो लेखानामाग्नीध्रः प्रक्रममात्र उत्करे पाणिकोष्ठं कृत्वोपविशति ८ पृथिव्या वर्मासीति लेखान्ते तृणं तिर्यग्निदधाति ९ पृथिवि देवयजनीति स्फ्येन तिर्यक्छिनत्ति १० व्रजं गछ गोस्थानमिति सतृणान्पाँसूनपादन्ते ११ वर्षतु ते पर्जन्य इति वेदिँ यजमानं च प्रेक्षते १२ बधान देव सवितरिति पाणिकोष्ठे निवपति १३ मा वः शिवा ओषधय इति द्वितीयं द्रप्सस्त इति तृतीयँ । समानमन्यत्तूष्णीं चतुर्थम् १४ स्फ्येन वेदिं परिगृह्णाति वसवस्त्वा परिगृह्णन्त्विति दक्षिणतो रुद्रास्त्वेति पश्चादादित्यास्त्वेस्युत्तरतः १५ अपाररुं पृथिव्या इति खनति द्व्यङ्गलं चतुरङ्गलँ वा १६ उद्धतादाग्नीध्रस्त्रिर्हरति १७ देवस्य सवितुः सवे कर्म कृणवन्तो मानुषाः । मा हिँसीस्त्वमोषधीः शिवाः ॥ इति स्फ्येन मूलानि छिनत्ति । सतृणान्पाँसून्हरति १८

इमां नरः कृणुत वेदिमेतद्देवेभ्यो जुष्टामदित्या उपस्थे ।
इमां देवा अजुषन्त विश्वे रायस्पोषाय यजमानँ विशन्तु ॥

इति करोति मध्ये संनतां प्रागुदक्प्रवणाँ श्लक्ष्णाँ साधुकृतामँ साभ्यामाहवनीयं परिगृह्णाति श्रोणिभ्यां गार्हपत्यमाहार्यपुरीषां पशुकामस्य १९ स्फ्यं प्रक्षालयत्यप्रतिमृशन्नग्रम् २० अवोक्ष्य वेदिं ब्रह्माणमामन्त्र्योत्तरं परिग्राहं परिगृह्णाति सत्यसदसीति दक्षिणत ऋतसदसीति पश्चाद् घर्मसद सीत्युत्तरतः २१ पुरा क्रूरस्येति स्फ्येन वेदिं प्रतीचीमनुमार्ष्टि वर्त्म कुर्वन् २२ पश्चार्धे वेद्या वितृतीयमात्रे तिर्यञ्चँ स्फ्यँ स्तब्ध्वा प्रोक्षणीरासादयेध्माबर्हिरुपसादयः स्रुचः संमृड्ढि पत्नीं संनह्याज्येनोदेहीति सँशास्ति २३ दक्षिणेन प्रोक्षणीर-भ्युदानयत्यग्रमुपनिनीय स्फ्यमुद्यछति २४ वत्र्मनि सादयति प्रोक्षणीरभिपूरयति २५ द्विषतो वधो ऽसीति पुरस्तात्प्रत्यङ्मुखः स्फ्येनोत्करमभिहन्ति २६ अभ्युक्ष्य प्रत्यासादयति २७ उत्तरत आहवनीयस्येध्माबर्हिरुपसादयेद्दक्षिणमिध्ममुत्तरं बर्हिः २८ स्रुवँ संमार्ष्टि स्रुचः प्राशित्रहरणं च २९ ४

प्रत्युष्टँ रक्ष इत्याहवनीये पात्राणि निष्टपति १ वेदप्रलवान्प्रतिविभज्याविभज्य वाभ्याहवं तिरश्चीः स्रुचः संमार्ष्टर्यग्रैरग्राणि मूलैर्दण्डान्संमृज्याभ्युक्ष्याग्नौ प्रतपति २ त्रवोऽस्यनाधृष्टः सपत्नसाह इति स्रुवमादत्त । आयुः प्राणं मा

निर्माजीरिति संमार्ष्टि यथा जुहूं प्राशित्रहरणं च ३ जुहूरस्यनाधृष्टा सपत्नसाहीति जुहूमादत्ते । चक्षुः श्रोत्रं मा निर्माजीरिति प्राचीमन्तरतः प्रतीचीं बाह्यतः संमार्ष्टि ४ उपभृदस्यनाधृष्टा सपत्नसाहीत्युपभृतमादत्ते । वाचं पशून्मा निर्माजीरिति प्रतीचीमन्तरतः प्राचीं बाह्यतः ५ ध्रुवास्यनाधृष्टा सपत्नसाहीति ध्रुवामादत्ते ॥ यज्ञं प्रजां मा निर्माजीरिति सर्वतः प्राचीम् ६ प्राशित्रहरणमस्यनाधृष्टँ सपत्नसाहमिति प्राशित्रहरणमादत्ते ॥ रूपाद्वर्णं मा निर्मृक्षँ वाजि त्वा सपत्नसाहँ संमार्ज्मीति संमार्ष्टि ७ दिवि शिल्पमवततं पृथिव्याः ककुभिः श्रितम् । तेन सहस्रकाण्डेन द्विषन्तं तापयामसि । द्विषन्तस्तप्यन्तां बहु ॥ इति संमार्जनान्यवसृज्याभ्युक्ष्याग्नावध्यस्यति ८ संमृष्टा यथास्थानमुत्तानाः स्रुचः सादयति ९ पत्नि पत्नीलोकोपस्थानं कुर्विति प्रेष्यति ॥ पत्नि पत्न्येष ते लोको नमस्ते अस्तु मा मा हिँसीरिति दक्षिणतःपश्चादपरस्य पत्नीलोकमुपस्थापयति १० अग्ने गृहपत उप मा ह्वयस्व देवानां पत्नीरुप मा ह्वयध्वम् । अदितिरिव त्वा सपुत्रोपनिषदे येयमिन्द्राणीवाविधवा ॥ इत्युपविशति जानुनी प्रभुज्य ११ आशासाना सौमनसं प्रजां पुष्टिमथो भगम् । अग्नेरनुव्रता भूत्वा संनह्ये सुकृताय कम् ॥ इत्यन्तरतो वस्त्रस्य योक्त्रेण पत्नीं संनह्याप उपस्पृश्य वेदोपयामा दब्धेन त्वा चक्षुषावेक्ष इति पत्न्याज्यमवेक्षते १२ तेजोऽसीत्याज्यं गार्हपत्येऽधिश्रयति १३ तेजोऽसि तेजोऽनुप्रेहि वायुष्ट्वान्तरिक्षात्पातु सूर्यो दिव इत्याहवनीयं प्रति हरति १४ अग्निष्टे तेजो मा विनैदित्याहवनीयेऽधिश्रयति १५ इदँ विष्णुर्विचक्रम इत्येतयोत्तरतः प्रोक्षणीनाँ सादयति वेदं च १६ तेजोऽसीत्याज्यँ यजमानो ऽवेक्षत उत्पूतमनुत्पूतँ वा १७ देवस्त्वा सवितोत्पुनात्वित्येतया पच्छ आज्यमुत्पुनाति ॥ देवो वः सवितेति प्रोक्षणीः १८ धामासीति स्रुवेणाज्यानि गृह्णाति चतुर्जुह्वामष्टौ कृत्व उपभृति कनीयः पञ्चकृत्वो ध्रुवायां भूयिष्ठम् १९ आज्यस्थालीँ स्रुवं वेदं च गार्हपत्यान्ते निदधाति २० दर्भमुष्टिमुपादायार्धँ वेदेर्दक्षिणतः प्रक्षिप्य देवीराप इति प्रोक्षणीरुदीरयति २१ प्रोक्षणीरपादाय वेद्यां पदानि लोभयन्ति २२ उत्करे लोभनानि प्रविध्याप उपस्पृश्य विषायेध्ममपादाय परिधीन्ब्रह्माणमामन्त्र्य प्रोक्षति कृष्णोऽस्याखरेष्ठ इतीध्मं वेदिरसि बर्हिषे त्वेति वेदिं बर्हिरसि वेद्यै त्वेति बर्हिः २३ प्रोक्ष्य पश्चार्धे वेद्या वितृतीयमात्रे बर्हिः सादयति २४

पुरस्ताद्ग्रन्थिं निदधाति २५ अग्राणि प्रोक्षणीषुपपाययति २६ स्वाहा पितृभ्यो धर्मपावभ्य इति मूलदेशे बर्हिषः प्रदक्षिणं प्रोक्षणीर्निनयति २७ उदुह्य स्रुचमादाय पवित्रे दक्षिणतः परिक्रम्य पूषा ते ग्रन्थिं विष्यत्विति बर्हिषो ग्रन्थिँ विष्यति २८ ५

विष्णोः स्तुपोऽसीति प्रस्तरमपादत्त १ यजमाने प्राणापानौ दधामीति पवित्रे प्रस्तरे विमृजति २ अग्रेणाहवनीयं पर्याहृत्य प्रस्तरं ब्रह्मणे प्रयछति यजमानाय वा ३ पुष्टिरसि पोषाय त्वा रयिमन्तं त्वा पुष्टिमन्तं गृह्णामीति मुखतः प्रस्तरम् गृह्णाति ४ नोन्मृज्यान्नावमृज्यान्न विधूनुयाद्यदुपतिष्ठेत्तदुपसंगृह्णीयात् ५ विस्त्रँस्य शुल्बं दर्भाणामुपसँयम्य वेदिं दक्षिणार्धे स्तृणाति ६ उरु प्रथस्वेति वेदिँ स्तृणात्यपरमपरमयुग्धातु बहुलमनारोकम् ७ अपरेण वेदिं परिक्रम्य प्रस्तरं धारयन्परिधीन्परिधाति गन्धर्वोऽसीति मध्यममिन्द्रस्य बाहुरसीति दक्षिणं मित्रावरुणौ त्वेत्युत्तरम् ८ अव्यत्यादधत्संदधात्यभिहिततमं दक्षिणं परिधिसंधिं करोति ९ इध्मदार्वादाय नित्यहोतारं त्वेत्याघारसमिधमादधाति वर्षिष्ठे अधि नाक इति द्वितीयाम् १० सूर्यस्त्वा रश्मिभिरित्यादित्यं पुरस्तात्परिदधाति ११ विश्वजनस्य विधृती स्थ इति तृणे तिरश्ची सादयति चतुरङ्गुलमात्रमन्तरा १२ वसूनाँ रुद्राणामिति विधृत्योरुपरि प्रस्तरँ सादयति १३ द्यौरसि जन्मनेति जुहूं प्रस्तरे सादयति १४ न रिक्तमवसृजति । सम मूलैर्दण्डं करोति १५ अन्तरिक्षमसि जन्मनेत्यधस्ताद्विधृत्योरुपभृतं पृथिव्यसि जन्मनेत्युपरिष्टाद्विधृत्योर्ध्रुवामसँसक्ताः स्रुचोऽनूचीः सादयत्यभिहिततमां जुहूम् १६ इदमहँ सेनाया अभीत्वर्या मुखमपोहामीति वेदेन पुरोडा-शयोर्भस्मापोहति १७ वेदोपयाम आज्यस्थाल्याः स्रुवेण आप्यायतां धृतयो-निरग्निर्हव्या नो मन्यताम् । खमङ्क्ष्व त्वचमङ्क्ष्व सुरूपं त्वा वसुविदं पशूनां तेजसाग्नये त्वा जुष्टमभिघारयामीत्याग्नेयं पुरोडाशमभिघारयति यथादेवत-मुत्तरम् १८ स्योनं ते सदनं कृणोमि घृतस्य धारया सुशेवं कल्पयामीति पात्र्यामुपस्तृणाति १९ आर्द्रः पृथुस्नुर्भुवनस्य गोपाः शृत उत्स्नातु जनिता मतीनाम् । इत्युदञ्चमुद्वासयति २० वेदेनापभस्मानं करोत्यनभिघ्नन्पाणिना वेदशिरसा च २१ तस्मिन्सीदामृते प्रतितिष्ठ व्रीहीणां मेधः सुमनस्यमानः ।

गुपस्तीर्णे सादयति ॥ यवानां मेध इति यवानाम् २२ इरा भूतिः पृथिव्या रसो मोत्क्रमीदिति प्रथमापहिते कपाले ऽभिघारयति २३ तृप्तिरसि गायत्रम् छन्दस्तर्पय मा तेजसा ब्रह्मवर्चसेन तृप्तिरसि त्रैष्टुभं छन्दस्तर्पय मेन्द्रियेण वीर्येण तृप्तिरसि जागतं छन्दस्तर्पय मा प्रजया पशुभिरित्यलंकरोति स्वक्तम-निष्काषमपृषन्तमपर्यावर्तयनधस्ताच्चोपानक्ति २४ यस्त आत्मा पशुषु प्रविष्टो दिवो वाभिष्ठामनु यो विचष्टे । आत्मन्वान्सोम घृतवानिहैहि दिवं गछ स्वर्विन्द यजमानाय मह्यम् ॥ इति दोहावलंकरोति २५ अभ्युदाहरति हवींषि २६ ऋषभोऽसि शाक्वर इति दक्षिणतो जुह्वाः पूर्णस्रुवँ सादयत्यग्रेण ध्रुवाँ वेदमुत्तरेण ध्रुवामाज्यस्थालीमपरेण स्रुग्दण्डान्पात्रीं दक्षिणस्याँ वे-दिश्रोणौ सायंदोहमुत्तरस्यां प्रातर्दोहम् २७ वेदिँ स्तृणात्यनधिस्तृणन्नन्तान् २८ पश्चाद्धोत्रे त्रिधातूपस्तृणाति दक्षिणातूलान्मध्ये २९ अप उपस्पृश्य ध्रुवा असदन्नि-त्याज्यानि संमृशति संमृशति ३० ६

इति मानवसूत्रे प्राक्सोमे द्वितीयोऽध्यायः

होतर्यवस्थितेऽनये समिध्यमानायानुब्रूहीत्युक्त्वा प्रणवेप्रणवे समिधमादधाति १ आनुयाजिकीँ शिष्ट्वा नेध्मस्यातिरेचयति २ इध्मसंनहनँ विस्रँस्यैकग्रन्थिँ संमार्गं करोति ३ ओढासु देवतास्वप उपस्पृश्य वेदेनाग्निं त्रिरुपवाजयत्यग्रँ वेद्याः संमृजन् ४ पूर्णस्रुवं ध्रुवायामवनीय तस्योपहत्य वेदोपयाम उत्तरं परिधिसंधिँ स्पर्शयित्वोत्तरार्धेऽभ्याहितस्य प्राचीनं मनसा प्रजापतये स्वाहेति ज्वलति जुहोति ५ संपातेन ध्रुवामाप्याय्य यथास्थानं स्रुवँ वेदं च निदधाति ६ अग्नीत्परिधीँश्चाग्निं च त्रिस्त्रिः संमृड्ढीति प्रेष्यति ७ आग्नीध्रः संमार्गं स्फ्यमुपसँयम्य यथापरिधितमनुलोमं त्रिः संमार्ष्टि ८ आजिं त्वाग्ने सरिष्यन्तँ सनिँ सनिष्यन्तं देवेभ्यो हव्यँ वक्ष्यन्तँ वाजिनं त्वा वाजजित्यायै संमार्ज्म्यग्ने वाजं जयेत्यृते स्फ्यादग्निमुपक्षिपस्त्रिः समुन्मार्ष्टि ९ अपहरति १० उत्तानौ पाणी कृत्वा जुहूपभृतोरग्रे सूयमे मेऽद्य स्तमिति जपति ११ जुह्वेह्यग्निष्ट्वा ह्वयति देवान्यक्ष्यावो देवयज्याया इति जुहूमादत्त ॥ उपभृदेहि देवस्त्वा सविता ह्वयति देवान्यक्ष्यावो देवयज्याया इत्युपभृतम् १२ समादाय स्रुचावग्नाविष्णू विजिहाथामिति दक्षिणातिक्रामति १३ आस्पृष्टँ सव्यं पादमवस्थापय-

त्यन्तर्वेदि दक्षिणँ ॥ विष्णोः स्थामासीति जपति १४ दक्षिणम् परिधिसंधिँ स्पर्शयित्वा दक्षिणार्धेऽभ्याहितस्योर्ध्वो अध्वर इति संततं प्राञ्चं दीर्घ-मृजुमूर्ध्वमविछिन्नमाघारमाघारयति १५ प्रयाजेभ्यः शिष्ट्वा भूयिष्ठमाज्या-हुतीनां जुहोति १६ आघार्यानुप्राणिति १७ पाहि माग्ने दुश्चरितादा मा सुचरिताद्भज । इत्यसँस्पर्शयन्स्रुचावत्याक्रामति १८ सं ज्योतिषा ज्योतिरिरिति जुह्वा ध्रुवां त्रिः समनक्ति । जुह्वाप्याययति ध्रुवाम् १९ यथास्थानँ स्रुचौ सादयति २० उन्नीतँ राय इति ध्रुवायाः स्रुवेणोन्नयति ॥ सुवीराय स्वाहेति जुहूमाप्याययति २१ प्राणेन प्राणः संतत इति ध्रुवायाँ स्रुवं निदधाति २२ समिधः शकलमादायावतिष्ठते २३ प्रकृष्य दक्षिणं पादं बर्हिषस्तृणँ संततमुपोद्यम्य ब्रह्मन्प्रवरायाश्रावयिप्यामीत्युक्त्वो श्रावयेत्याश्रावयति २४ स्फ्यसंमार्गपाणिराग्नीध्रः पश्चादुत्करस्योर्ध्वस्तिष्ठन्नस्तु श्रौषडिति प्रत्याश्रावयति २५ प्रत्याश्रुते ऽग्निर्देवो दैव्यो होता देवान्यक्षद्विद्वाँश्चिकित्वान्मनुष्वद्भरत-वदमुवदमुवदित्यूर्ध्वान्यजमानस्यर्षीन्प्रवृणीत एकं द्वौ त्रीन्पञ्च वा ॥ ब्रह्मण्वदा च वक्षद्ब्राह्मणा अस्य यज्ञस्य प्रावितार इति जपति । होत्रा वियुक्त-स्तस्योपाँशु नाम गृहीत्वा मानुष इत्युच्चैः २६ शकलमग्नावध्यस्यति २७ यद्यब्राह्मणो यजेत पुरोहितस्य प्रवरेण प्रवृणीयात् २८ जुहूमुपभृतो ऽग्रेणाव-दध्यादुद्धरेच्च २९ दक्षिणेन दक्षिणातिक्रामति सव्येनोदक् ३० परिधिसंधी अन्ववहारमासीन उत्तरतो जुहोति स्वाहाकारवतीर्वषट्कारवतीर्दक्षिणतः प्रागुदङ्मुख ऊर्ध्वस्तिष्ठन् ३१ आश्राव्य न विचेष्टेदाहोमात् ३२ समं प्रतिवषट्कारँ वषट्कृते वा जुहोति ३३ मन्द्रेण स्वरेणाज्यभागाभ्यां प्रचरति मध्यमेनानुयाजेभ्य उत्तमेना शँयोः ३४ १

घृतवती अध्वर्य इत्युच्यमाने स्रुचावादाय दक्षिणातिक्रामति १ अभि-क्राममाश्रावं पञ्च प्रयाजान्यजति ॥ समिधो यजेति प्रथमँ यज यजेत्युत्तरान् २ त्रिभिः प्रचर्योपभृतस्य जुह्वामानीय समानत्र जुहोति ३ अत्याक्रम्या-भिघारयति ध्रुवां दक्षिणं पुरोडाशं पुनर्ध्रुवामुपाँशयाजायोत्तरं पुरोडाशँ सायंदोहं प्रातर्दोहमुपभृतमन्ततः ४ स्रुवेणावद्यति चतुः पञ्चकृत्वो जामदग्न्यस्येछन्प-ञ्चावत्तं जामदग्न्यमामन्त्र्य पुर्वीत ५ आज्यभागौ यजत्याग्नेयमुत्तरार्धे सौम्यं

दक्षिणार्धे समावनद्दणया ६ ध्रौवस्यावदाय आप्यायतां ध्रुवा घृतेन यज्ञँ यज्ञं प्रति देवयद्भ्यः । सूर्याया ऊधरदितेरुपस्थ उत्सो भव यजमानस्य धेनुः ॥ इत्यवदायावदायाज्यस्थाल्या ध्रुवाम् प्रत्याप्याययति ७ अग्नयेऽनुब्रूहीत्यनुवाचयति ८ अनुवाक्यायाः प्रणवेन सँस्तुत्याश्रावयति ९ प्रत्याश्रुते ऽग्निँ यजेति प्रेष्यति १० एवँ सौम्येन प्रचरति ११ उपस्तीर्याप उपस्पृश्य दक्षिणस्य मध्यान्मा भैर्मा सँविक्था मा त्वा हिँसिषं भरतमुद्धरेम वनुषन्त्यवदानानि ते प्रत्यवदास्यामि नमस्ते अस्तु मा मा हिँसीरित्यभिपरिगृह्णन्सँहताभ्यामङ्गुलीभ्यामङ्गुष्ठेन चाङ्गुष्ठपर्वमात्राण्यवदानान्यवद्यति मध्यात्पूर्वार्धाद्द्वितीयं । पश्चार्धातृतीयँ यदि पञ्चावदानस्य १२ अवत्तमभिघार्य यदवदानानि ते ऽवद्यन्विलोमाकार्षमात्मनः । आज्येन प्रत्यनज्मि तत्त आप्यायतां पुनः ॥ इति पुरोडाशं प्रत्यभिधारयति १३ अग्नयेऽनुब्रूहीत्यनुवावयति १४ आश्राव्याग्निँ यजेति प्रेष्यति १५ अन्तराज्यभागावाहुतीः प्रागुदीचीरपायातयति १६ ध्रौवस्यावदायोपाँशुयाजावग्नीषोमीयं पौर्णमास्यां वैष्णवममावास्यायामुपाँशु देवते निर्दिशति १७ एवमुत्तरस्यावदाय यथादेवतं प्रचरति १८ संनयत उपस्तीर्य यथावदानँ समवद्यति पुरोडाशस्य दोहयोश्चेन्द्रायानुब्रूहीत्यनुवाचयति महेन्द्रायेति वा १९ सांनाय्यचरुपशुपुरोडाशानां पार्श्वेन जुहुयाद्द्वाणां प्रस्त्रवणेन । व्याख्यातं प्रचरणम् २० ऋषभँ वाजिनँ वयं पूर्णमासँ हवामहे । स नो दोहताँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥ पूर्णमासाय सुराधसे स्वाहेति पौर्णमास्याँ स्त्रुवेण जुहोति । अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना । मा नो दोहताँ सुवीरँ रायस्पोषँ सहस्रिणम् ॥ अमावास्यायै सुराधसे स्वाहेत्यमावास्यायाम् २१ स्विष्टकृते समवद्यत्युत्तरार्धात्मकृद्द्विमात्रं । द्विर्वा यदि पञ्चावदानस्य २२ अवत्तं द्विरभिघार्यं नात ऊर्ध्वँ हवींषि प्रत्यभिघारयति २३ अग्नये स्विष्टकृतेऽनुब्रूहीत्यनुवाचयति २४ आश्राव्य अग्निं स्विष्टकृतँ यजेति प्रेष्यति २५ असँसक्तमुत्तरार्धपूर्वार्धे जुहोति २६ अत्याक्रम्य यथास्थानँ स्त्रुचौ सादयति २७ २

प्राशित्रहरणमुत्तरस्य पश्चात्परिधिसंधेर्व्युह्यौषधीरवोक्षिते सादयति १ तस्मिन्प्राशित्रमवद्यति दक्षिणस्य मध्याद्यवमात्रमंङ्गुष्ठेनोपमध्यमया चादाया-

भिघारयति २ निष्टप्येडापात्रीं तस्यामुपस्तीर्येडायै द्विर्द्विरवद्यति स्थवीयो दैवतेभ्यः ३ दक्षिणस्य भक्षानवद्यति ४ दक्षिणस्य दक्षिणार्धादवदाय पूर्वार्धाद्यजमानभागमणुं दीर्घमाज्यलेपे पर्यस्य वेदे निदधाति । मध्यादि्द्वतीयमैडँ संभिन्दन्नवदानानि ५ ध्रौवस्यावदायानुपूर्वमितरेषाम् ६ इडामभिघार्य प्रत्यङ्ङासीनो होत्रे प्रयछति ७ अन्तरेण होतारमिडां चाध्वर्युर्दक्षिणातिक्रामति ८ परित्रगृह्णाति होताननुसृजन्होतुरङ्गुलिपर्वणी अनक्त्यन्तरमग्रेऽथ बाह्यं ९ होतुः पाणौ द्विर्लेपेनोपस्तृणाति १० अवदानँ होता रन्धयति । तदन्यच्च लेपादुपस्तीर्य लेपादि्द्वरभिघारयति ११ उपहूयमानायामृत्विजोऽन्वारभन्ते यजमानश्च १२ उपहूतां पृथक्पाण्योराग्नीध्रायावद्यति १३ संप्रेष्यति । य उत्तरतस्तान्दक्षिणतः परीतेति ब्रूयाद्ये वा दक्षिणतस्तानुत्तरतः परीतेति १४ उपहूतां प्राश्नन्त्यृत्विजो यजमानश्च १५ होता प्रथमो भक्षयते पृथिव्यास्त्वा दात्रा प्राश्नाम्यन्तरिक्षस्य त्वा दात्रा प्राश्नामि दिवस्त्वा दात्रा प्राश्नामि दिशां त्वा दात्रा प्राश्नामीति प्राश्नात्याग्नीध्रः १६ शाखापवित्रँ विस्त्रँस्य होताग्निहोत्रहवण्यामवधायान्तर्वेदि निदधाति १७ तत्रापोहिष्ठीयं जपन्तो मार्जयन्ते १८ ब्रह्मभागँ स्थवीयाँसँ यजमानभागादवदायाज्यलेपे पर्यस्य वेदे निदधाति १९ दक्षिणं चतुरन्तं कृत्वा बर्हिषि सादयति २० अभिमृष्टं पात्र्यां निदधाति २१ प्राशित्रहरणमग्रेणाहवनीयं पर्याहृत्य ब्रह्मणे प्रयछति २२ वेदेन भागौ पर्याहृत्य ब्रह्मणे प्रयछति यजमानाय च २३ प्रतिपर्याहृत्य यथास्थानँ वेदं निदधाति २४ दक्षिणारनावोदनँ शृतं महान्तमभिघार्यापरेण स्रुग्दण्डानुदञ्चमुद्वासयति । दोहौ पात्रीं च २५ ३

आनुयाजिकीँ समिधमादाय ब्रह्मन्प्रस्थास्यामः समिधमाधायाग्नीत्परिधीँश्चाग्निं च सकृत्सकृत्संमृड्ढीति प्रेष्यति १ आग्नीध्रः संमार्गँ स्फ्यमुपसंयम्य यथापरिधितमनुलोमँ सकृत्संमार्ष्ट्याजिं त्वाग्ने ससृवाँसँ सनिँ ससनिवाँसं देवेभ्यो हव्यमोहिवाँसं वाजिनं त्वा वाजजितँ संमार्ज्म्यग्ने वाजमजैरित्यग्निम् २ यो देवानामसि श्रेष्ठ उग्रस्तन्तिचरो वृषा । मृड त्वमस्मभ्यँ रुद्रैतदस्तु हुतं तव । स्वाहा ॥ इति संमार्गँ विस्त्रँस्याभ्युक्ष्याग्नावध्यस्यति ३ औवभृतं जुह्वामानीयाश्रावं त्रीतनुयजान्यजति ॥ देवान्यजेति प्रथमँ यज यजेत्युत्तरौ

समिधः प्रतीचः ४ पश्चार्धादुत्तमेन प्राञ्चावनुसंभिनत्ति ५ अत्याक्रम्य यथास्थानँ स्रुचौ सादयति ६ यजमानो वाजस्य मा प्रसवेनेति दक्षिणेनोत्तानेन पाणिना जुहूँ सप्रस्तरामुद्गृह्णात्यथा सपत्नानिन्द्रो म इति नीचा सव्येनोपभृतं निगृह्णात्युद्ग्राभश्च निग्राभश्चेति व्युद्गृह्णाति ७ अथा सपत्नानिन्द्राग्नी म इति व्युदूहति प्राचीं जुहूं प्रस्तरात्प्रतीचीमुपभृतं । बहिर्वेदि निरस्यति ८ अभ्युद्य प्रत्यासादयति न जुहुं प्रस्तरे ९ जुह्वानक्ति परिधीन्वसुरसीति मध्यममुपाव-सुरसीति दक्षिणँ विश्वावसुरसीत्युत्तरम् १० मध्यमे स्रुचो ऽग्रँ संधाय स्रुग्दण्डे प्रस्तरस्याग्राण्युपसँयम्याश्रावयति ११ प्रत्याश्रुत इषिता दैव्याहोतारो भद्रवा-च्याग्र प्रेषितो मानुषः सुक्तवाकाय सुक्ता ब्रूहीति प्रेष्यति १२ प्रस्तरमपादत्ते १३ यजमाने प्राणापानौ दधामीति बर्हिषि विधृती प्रत्यवसृजत्या युषे त्वेति तृणँ सँसृजति १४ अप्लुभी रिहाणा व्यन्तु वय इति स्रुक्षु प्रस्तरमनक्तयग्राणि जुह्वां मध्यान्युपभृति मूलानि ध्रुवयाम् १५ तूष्णीं जुह्वामग्राण्यक्त्वा वशा पृश्निर्भूत्वेत्यनतिहरन्प्रस्तरस्याग्राण्यादीपयति १६ आशास्तेऽयँ यजमान इत्युच्यमाने सह शाखया प्रस्तरमनुप्रहरति १७ अग्नीद्गमयेति प्रेष्यति १८ प्रस्तरमाग्नीध्रस्त्रिः पाणिना गमयति १९ अनुप्रहर सँवदस्वेति चाह २० ततो नो वृष्ट्यावतेति तृणमग्नावध्यस्यति २१ प्रतिष्ठासीति पृथिवीमालभते २२ पुनर्यमश्चक्षुरदात्पुनरग्निः पुनर्भगः । पुनर्मे अश्विना युवं चक्षुराधत्तमक्ष्णोः ॥ इति चक्षुषी अभिमृशति २३ अप उपस्पृश्य मध्यमं परिधिमन्वारभ्या गानग्नीदित्याहागन्नित्याग्नीध्रः ॥ श्रावयेत्यध्वर्युः ॥ श्रौषडित्याग्नीध्रः २४ स्वगा दैव्याहोतृभ्यः स्वस्तिर्मानुषेभ्यः शँयोर्बृहीति प्रेष्यति २५ ॥ तञ्शँयोरावृणीमह इत्युच्यमाने मध्यम दक्षिणं चादाय । यंम्परिधिं पर्यधत्था अग्ने देव पणिभिर्वीयमानः । तं त एतमनु जोषं भरामि नेदेष युष्मदपचेतयातै ॥ यज्ञस्य पाथ उपसमितमित्यधस्तात्प्रस्तरस्याक्ष्णयोपकर्षति २६ उपभृतो ऽग्रं जुह्वामाधाय सँस्रावभागाः स्थेति परिधीनभिजुहोति २७ धृताच्यौ स्थो यजमानस्य धुर्यौ पातमिति वेद्यँसयोः स्रुचौ विमुञ्चति । कस्तम्बदेशे वा यतो युञ्जानस्ततो विमुञ्चामीति विमुञ्चति २८ न विमुक्ते बर्हिषि प्रत्यासादयति २९ स्रुवं जुहूं चादायाध्वर्युः प्रत्युपक्रामति बर्हिषस्तृणँ वेदं च होता । आज्यस्थालीमाग्नीध्रः पश्चाद्गार्हपत्यस्य प्राक्कूले तृणे सादयति ३० अन्तरेण

होतारमग्निं चाध्वर्युः प्रत्युपक्रामति ३१ मध्ये होतासीनो ध्वानेन पत्नीः सँयाजयति ३२ ४

वेदोपयामोऽवद्यन्सोमायानुब्रूहीत्यनुवाचयति १ उत्तरार्धे सोमँ यजति दक्षिणार्धे त्वष्टारम् २ परिश्रित्याहवनीयतो देवानां पत्नीर्यजति ३ पुरास्ताद्देवपत्नीनाँ सिनीवालीं पशुकामस्य यजेयुपरिष्टाद्राकाँ वीरकामस्य कुहूं प्रतिष्ठाकामस्य ४ सं पत्नी पत्या सुकृतेषु गछतामिति पत्न्यन्वारम्भँ स्रुवेण जुहोति ५ परिश्रयणमुपोद्धृत्याग्निं गृहपतिँ यजति स्विष्टकृत्स्थाने ६ दशकृत्वोऽवदाय होताननुसृजन्होतुरङ्गुलिपर्वणी अनक्ति बाह्यमग्रेऽथान्तरम् ७ होतुः पाणौ द्विर्लेपेनोपस्तृणाति ८ अवदानँ होता रन्धयति । तदन्यच्च लेपादुपस्तीर्य लेपाद्विद्विरभिघारयति ९ उपहूयमानायां पत्न्यन्वारभत आग्नीध्रश्च १० उपहूतां प्राश्नीतो होताग्नीध्रश्च ११ दक्षिणाग्नाविध्मपरिवासनान्युपस-माधाय चतुर्गृहीत आज्ये फलीकरणान्योप्य या सरस्वती वेशयमनीति जुहोति १२ तस्यां पुनर्गृहीत्वा पिष्टलेपम् द्विरवत्तमभिघार्य उलूखले मुसले यत्कपाल उपलायां दृषदि धारयिष्यति अवप्रुषो विप्रुषः सँसृजामि विश्वे देवा हविरिदं जुषन्तां स्वाहा इति १३ वेदेन निर्मृज्याज्यस्यावदायँ न्द्रोपानस्यकेहमनसो वेशान्कुरु सुमनसः सजातान्स्वाहेति ग्रामकामस्य जुहोति १४ पत्न्यै वेदं प्रयछति ॥ वेदोऽसि वेदो मा आभरेति जपति १५ तृप्ताहं तृप्तस्त्वमिति प्रतिगृह्यात्यु पस्थे पुत्रकामा निदधीत १६ इमँ विष्यामि वरुणस्य पाशँ यज्ञग्रन्थ सविता सत्यधमा धातुश्च योनौ मुकृतस्य लोकेऽरिष्टां मा सह पत्या दधातु ॥ इति योक्त्रपाशँ विषाय सयोक्त्रमञ्जलिं कुरुते १७ समायुषा सं प्रजया समग्ने वर्चसा पुनः सं पत्नी पत्याहं गछे समात्मा तन्वा मम इत्युदकाञ्जलिं निनीय मुखँ विमृष्टे १८ होता वेदँ स्तृणाति गार्हपत्यादधि संततमाहवनीयात् १९ अयाश्चाग्नेऽसीति ध्रौवस्य सकृदवत्तं जुहोति २० सकृद्ध्रुवामाप्याय्य बर्हिषो दर्भमुष्टिमपादायान्तर्वेद्यूर्ध्वस्तिष्ठन्देवा गातुविद इति ध्रुवया संततँ समिष्ट-यजुर्जुहोत्या मन्त्रस्य समापनात्प्राक्स्वाहाकाराद्दर्भमुष्टिमनुप्रहरति २१ यानि घर्मे कपालानीत्येतया कपालानि विमुञ्चति २२ संख्यायोदीचीनान्युद्वासयति ये घर्म इति द्वे यद्घर्म इत्येकम् २३ को वा विमुञ्चतीति प्रणीता मनसा

विमुच्याग्रेणाहवनीयं पयहृत्य पोषाय त्वेत्यन्तर्वेदि निदधाति २४ दिवि शिल्पमवततमित्येतया बर्हिरनुप्रहरति २५ स्तृणीत बर्हिः परिधत्त वेदिं जामिं मा हिँसीरनु या शयाना दर्भैः स्तृणीत हरितैः सुपर्णैर्निष्का ह्येते यजमानस्य ब्रध्नम् ॥ इति होतृषदनैर्वेदिँ संछादयति २६ ब्राह्मणाँस्तर्पयेति प्रेष्यति २७ पौर्णमासीँ सँस्थाप्येन्द्राय वैमृधायैकादशकपालं निर्वपेद्धातृव्यवान्तत्र यथाकामं दद्यात् २८ प्रवृत्तौ विकल्पो नोपक्रम्य विरमेत् २९ अदित्य घृते चरुरमावास्यामिष्टवा पशुकामः पशुकामः ३० ५

इति मानवसूत्रे प्राक्सोमे तृतीयोऽध्यायः पूर्ण

चन्द्रमस्युपवसेत्पौर्णमासीमदर्शनेऽमावास्याम् । पूर्वे वा १ केशश्मश्रु यजमानो वापयते दक्षिणोपक्रमान्केशान् २ सव्योपक्रमान्नखानध्यात्मं कनिष्ठिकातः कारयते । न कक्षौ ३ पत्नी नखाँश्च कारयीत ४ पयस्वती-रोषधयः पयस्वद्वीरुधां पयः अपां पयसो यत्पयस्तेन मामिन्द्र सँसृजस्व ॥ इति पाणी प्रक्षाल्योपवत्स्वशनमश्नीतोऽन्यन्माषेभ्यो माँसाच्च सर्पिष्मत् ५ पौर्णमास्यां भुक्त्वामावास्यायां न सुहितौ स्याताम् ६ ममाग्ने वर्च इत्याहवनीये समिधमादधाति पुरस्तात्प्रत्यङ्मुख ऊर्ध्वस्तिष्ठँस्तू ष्णीमपरयोः ७ हस्ता अवनिज्य दक्षिणतो व्रतमुपैति ८ अग्ने व्रतपते व्रतमालप्स्य इत्याहवनी-यमुपतिष्ठते ॥ सम्राडसि व्रतपा असि व्रतपतिरसीत्यादित्यम् । यद्यस्तमितः स्यादाहवनीयम् ९ वासे प्राश्नीयातामारण्यस्य । यस्य च श्वो यक्ष्यमाणः स्यान्न तस्य सायमश्नीयात् १० व्रतचार्याहवनीयागारेऽधः शयीत गार्हपत्या-गारे पत्नी ११ इयँ वः पात्रमनया वो गृह्णामीति प्रणीतासु गृह्यमाणास्विमां मनसा ध्यायेत् १२ अग्निँ होतारमुप तँ हुव इति निर्वप्स्यमाने स्रुचँ शूर्पं चाभिमृशेत्क्रियमाणे क्रियमाणे १३ यज्ञस्य त्वा प्रमयाभिमयेति वेद्यां परिगृह्यमाणायां जपति १४ पञ्चानां त्वा वातानां धर्त्राय गृह्णामीत्याज्येषु गृह्यमाणेष्वान्तादनुवाकस्य १५ युनज्मि त्वा ब्रह्मणा दैव्येनेति परिधिषु परिधीयमानेषु १६ चतुर्होत्रा विहव्येन च हवीँष्यासन्नान्यभिमृशेत् १७ अग्रेण स्रुचोऽन्तर्वेदि दक्षिणं जान्वाच्याध्यञ्जलौ वेदमादाय वेदोऽसि वेदो मा आभरेति जपति १८ तृप्तो ऽहं तृप्तस्त्वमिति प्रतिगृह्णाति १९ दशहोतारं

जपेत्पुरस्तात्सामिधेनीनाम् २० समिद्धो अग्निराहुतः स्वाहाकृतः पिपर्तु नः इति समिद्धे २१ मनोऽसि प्राजापत्यं मनसा मा भूतेनाविशेति स्रुवेणाघार्यमाणे २२ वागस्यैन्द्री सपत्नक्षयणी वाचा मेन्द्रियेणाविशेति स्रौचे २३ देवाः पितर इति प्रवरे प्रवर्यमाणं प्रागितिकरणात् २४ चतुर्होतारं जपेत्पुरस्तात्प्रयाजानाम् २५ आश्राविते मह्यं देवानिति ब्रूयात्प्रत्याश्रुते मह्यं देवँ यजेत्युक्ते यथाभागं देवताः प्रति मातिष्ठिपन्निति । वषट्कृते स्वर्गे लोक इति २६ प्रयाजेषु वसन्तमृतूनां प्रीणामि स मा प्रीतः प्रीणातु वसन्तस्याहं देवयज्यया तेजस्वान्पयस्वान्भूयासं ॥ ग्रीष्ममृतूनां प्रीणामि स मा प्रीतः प्रीणातु – देवयज्ययौजस्वान्वीर्यवान्भूयासँ ॥ वर्षा ऋतूनां प्रीणामि ता मा प्रीताः प्रीणन्तु वर्षाणामहं देवयज्यया पुष्टिमान्पशुमान्भूयासँ ॥ शरदमृतूनां प्रीणामि सा मा प्रीता प्रीणातु शरदोऽहं देवयज्ययान्नवान्वर्चस्वान्भूयासँ ॥ हेमन्तशिशिरा- वृतूनां प्रीणामि तौ मा प्रीतौ प्रीणीताँ हेमन्तशिशिरयोरहं देवयज्यया सहस्वाँस्तपस्वान्भूयासमित्येकैकेन पर्यायेण पृथक्पृथक्प्रयाजाननुमन्त्रयते २७ प्रयाजानुयाजविवृद्धौ सर्वानभ्यस्येदपि वोपोत्तममुत्तममन्ततः २८ १

अग्निना यज्ञश्चक्षुष्मानग्नेरहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासमित्या- ज्यभागमनुमन्त्रयते ॥ सोमेन यज्ञश्चक्षुष्मान्सोमस्याहं देवयज्यया चक्षुषा चक्षुष्मान्भूयासमिति द्वितीयम् १ पञ्चहोतारं जपेत्पुरस्ताद्धविषाम् २ अग्निरन्नादोऽग्नेरहं देवयज्ययान्नादो भूयासमिति हविराहुतिम् ३ दब्धिर्ना- मास्यदब्धोऽहं भ्रातृव्यं दभेयमित्युपाँशुयाजौ ४ अग्नीषोमौ वृत्रहणावग्नी- षोमयोरहं देवयज्यया वृत्रहा भूयासमित्यग्नीषोमीयम् ५ इन्द्राग्न्योरहं देवयज्ययेन्द्रियवान्वीर्यवान्भूयासमिन्द्रस्याहं देवयज्ययेन्द्रियवान्भूयासं ॥ महेन्द्रस्याहं देवयज्यया जेमानं महिमानं गमेयमिन्द्रस्य वैमृधस्याहं देवयज्ययासपत्नो भूयासँ ॥ सवितुरहं देवयज्यया सवितृप्रसूतो भूयासँ ॥ सरस्वत्या अहं देवयज्यया वाचमन्नाद्यं पुषेयं ॥ पूष्णोऽहं देवयज्यया पुष्टिमान्पशुमान्भूयासमग्नीन्द्रयोरहं देवयज्यया वीर्यवानिन्द्रियवान्भूयासँ ॥ विश्वेषां देवानामहं देवयज्यया प्रजातिं भूमानं गमेयं ॥ द्यावापृथिव्योरहं देवयज्यया प्रजनिषीय प्रजया पशुभिर्वनस्पतेरहं देवयज्ययास्य यज्ञस्यागुर

उदृचमशीयास्य यज्ञस्यागुर उदृचमशीयेत्यनाम्नातेषु ६ अग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्यग्निँ स्विष्टकृतम् ७ अग्निर्मा दुरिष्टात्पातु सविताथशँसाद्यो नो अन्ति शपति तमेतेन जेषमिति प्राशित्रमवदीयमानमनुमन्त्रयते ८ इडायास्तूष्णीम् ९ उपहवे वसीयस्येहि श्रेयस्येहीति जपति ॥ चिदसि मनासि धीरसीत्युच्चैर् घृतेन मा समुक्षतेत्य-न्तमस्मास्विन्द्र इन्द्रियं दधात्विति च १० ब्रध्न पाहीति चतुरन्तमभिमृशति ११ प्रजापतेर्भागोऽस्यूर्जस्वान्पयस्वान्प्राणापानौ मे पाहि समानव्यानौ मे पाह्युदानरूपे मे पाह्यूर्गस्यूर्जं मयि धेह्यक्षितोऽस्यक्षित्यै मा मे क्षेष्ठा अमुत्रामुष्मिंल्लोक इह च प्रजापतिरहं त्वया साक्षादृध्यासमित्यन्वा-हार्यमासन्नमनुमन्त्रयते । तदृत्विग्भ्यो दक्षिणां दद्यात् १२ सं मे भद्राः संनतयः संनमन्तामितीध्मसंनहने हुते १३ सप्तहोतारं जपेत्पुरस्तादनुयाजानाम् १४ बर्हिषोऽहं देवयज्यया प्रजावान्भूयासं नराशँसस्याहं देवयज्ययेन्द्रिय-वान्भूयासमग्निः स्विष्टकृद्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमित्युत्तमम् १५ अग्नेरुज्जितिमनूज्जेषँ सोमस्योज्जितिमनूज्जेषमित्याज्य-भागप्रभृत्या स्विष्टकृतो ऽनुमन्त्रयते ऽन्यदुपाँशुयाजौ सूक्तवाके १६ सा मे सत्याशीर्देवान्गम्यादिति प्रस्तरे प्रह्रियमाणे १७ तत्र यमिछेत्तँ वरँ वृणीते १८ विष्णुः शँयुर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन प्रतिष्ठां गमेयमिति शँयोर्वाके १९ वि ते मुञ्चामि रशनाँ वि रश्मीनिति परिधिषु प्रह्रियमाणेषु २० इष्टो यज्ञो भृगुभिरिति सँस्रावभागेषु २१ अदो मागछत्वदो मागम्यादित्यन्ततो वरान्वृणीते २२ २

सोमस्याहं देवयज्यया विश्वँ रेतो धेषीय त्वष्टुरहं देवयज्यया सर्वाणि रूपाणि पशूनां पुषेयं देवानां पत्नीनामहं देवयज्यया प्रजनिषीय प्रजया पशुभी राकाया अहं देवयज्यया वीरान्विन्देयँ सिनीवाल्या अहं देवयज्यया पशून्विन्देयं जुह्वा अहं देवयज्यया प्रतिष्ठां गमेयमग्निर्गृहपतिर्यज्ञस्य प्रतिष्ठा तस्याहं देवयज्यया यज्ञेन गृहैः प्रतिष्ठां गमेयमित्यग्निं गृहपतिम् १ इडास्माननुवस्तां घृतेन यस्याः पदे पुनते देवयन्तः । वैश्वानरी शक्वरी वावृधानोप यज्ञमस्तु नो वैश्वदेवी ॥ इतीडाम् २ या सरस्वती वेशभगीनेति मुखँ विमृष्टे ३ निर्द्विषन्तं निररातिं

दहेति वेदँ स्तीर्यमाणमनुमन्त्रयते ४ सँ यज्ञपतिराशिषेति यजमानो यजमानभागं प्राश्नाति ५ यदि प्रवसेत्समिष्टयजुषा सह जुहुयात् ६ पश्चाद्वेदेरुपविश्य प्राङ्मुखः सदसि सन्मे भूया इति प्रणीतास्वछिन्नमासिच्यमानमनुमन्त्रयते ७ प्राच्या दिशा देवा ऋत्विजो मार्जयन्तामिति प्रतिदिशँ यथाम्नातम् ८ समुद्रँ वः प्रहिणोमि स्वाँ योनिमभिगछत । अरिष्टा अस्माकँ वीरा मा परासेचि मत्पयः । इति निनीता अनुमन्त्रयते ९ यदप्सु ते सरस्वति गोष्वश्वेषु यद्वसु । तेन मे वाजिनीवति मुखमङ्ग्धि सरस्वति वर्चसा ॥ इति मुखँ विमृष्टे १० दक्षिणाया वेदेः प्राचीनं दक्षिणेन पादेन विष्णुक्रमान्क्रामति ॥ विष्णुः पृथिव्याँ व्यक्रँस्तेति प्रथमँ विष्णुरन्तरिक्षे व्यक्रँस्तेति द्वितीयँ विष्णुर्दिवि व्यक्रँस्तेति तृतीयमुत्तरमुत्तरं भूयाँसम् ११ इदमहममुष्य प्राणं निवेष्टयामीति पार्ष्ण्या प्रदक्षिणमावेष्टयति १२ यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णीमनभिचरन् १३ सव्यमन्वावृत्य तेजोऽसीत्याहवनीयमुपतिष्ठतेऽग्ने गृहपत इति गार्हपत्यम् १४ असा अनु मा तन्विति पुत्रस्य नाम गृह्णात्यमू अनु मा तनुतमिति यदि द्वौ ॥ अमी अनु मा तनुतेति यदि बहवः १५ अतीमोक्षैरग्नीनुपतिष्ठते ॥ ये देवाः यज्ञहनः पृथिव्यामध्यासत इति गार्हपत्यँ ये देवा यज्ञहनो अन्तरिक्षे अध्यासत इति दक्षिणाग्निँ ये देवा यज्ञहनो दिव्यध्यासत इत्याहवनीयम् १६ अग्ने व्रतपते व्रतमचारिषं तत्ते प्रावोचं तदशकं तेनाशकं तेनारात्सं तन्मे ऽजगुप इति समिधोऽग्निष्वादधद्व्रतँ विमुञ्चतिं १७ यज्ञो बभूव स उ वाबभूव स प्रजज्ञे स उ वावृधे पुनः स देवानामधिपतिर्बभूव सो अस्मानधिपतीन्करोतु वयँ स्याम पतयो रयीणाम् ॥ इति पुनरालम्भं जपति १८ गोमं अग्नेऽविमं अश्वी यज्ञ इति प्राङुत्क्रम्य जपति १९ शँय्वन्ते प्राश्नात्यूर्ध्वं वा समिष्टयजुषो यजमानो ब्राह्मणः सांनाय्यस्य साँनाय्यस्य २० ३

इति मानवसूत्रे प्राक्सोमे चतुर्थोऽध्यायः

अग्नीनादधीत वसन्ते ब्राह्मणो ग्रीष्मे राजन्यः शरदि वैश्यः । शिशिरँ सर्वेषाम् १ सोमेन यक्ष्यमाणस्यर्तावनियमो नक्षत्रे च २ फाल्गुन्यां पौर्णमास्यां पुरस्तादेकाहे द्व्यहे वादधीत ३ जातपुत्रो ब्राह्मणः कृत्तिकास्वादधीत ४ रोहिणी फल्गुन्यश्चित्रेत्याम्नातानि ५ मृगशि-रस्यादधीत ६ पुनर्वस्वोः पश्चा

पापीयान्विशाखयोः प्रजातिकामो । ऽनुराधास्वृद्धिकामः । प्रोष्ठपदासु प्रतिष्ठाकामः ७ पौर्णमास्याममावास्यायाँ वादधीत ८ यो अश्वत्थः शमीगर्भ आरुरोह त्वे सचा । तं ते हरामि ब्रह्मणा यज्ञियैः केतुभिः सह ॥ इति शम्यारोहस्याश्वत्थस्यारणी आहरति ९ आयुर्मयि धेह्यायुर्यजमानायेति जपति १० परिवापणँ यथा दर्शपौर्णमासयोः ११ आ-प्लुत्याहते क्षौमे परिधायोपवत्स्वशनमश्नीतः १२ प्राचीनप्रवण उदग्वँश-शालायां प्राचीनं मध्यमाद्वंशादपराह्णे लक्षणं करोति १३ उद्धत्यावोक्ष्य तस्मिन्नौपासनीयं ब्राह्मौदनिकमादधाति शालाग्निं निर्मन्थ्यँ वा १४ प्रागभिहवादृत्विजो वृणीते १५ प्र वेधसे कवये मेध्याय वचो वन्दारु वृषभाय वृष्णे । यतो भयमभयं तन्नो अस्त्वव देवानाँ यजे हेड्यानि । स्वाहा ॥ इत्यभिजुहोति १६ चतुःशरावँ रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो निरुप्य माँसतो ऽवहन्ति १७ निशायां परीन्वीत १८ ब्रह्मौदनं जीवतण्डुलँ श्रपयति १९ घृतेनानुत्पूतेन नवनीतेन वोत्पूतेन शृतमभिघार्योत्तरत उद्वासयति २० पात्र्यामन्यत्र वोद्धृत्य व्युदुह्य प्रभूतँ सर्पिरासिच्याभितो ब्रह्मौदनमृत्विज आर्षेया वृताः पर्युपविशन्ति दक्षिणतो ब्रह्मा पश्चाद्धोतोत्तरत उद्गाता पुरस्तादध्वर्युः २१ पिण्डानादाय सर्पिषि पर्यस्यावसृप्य प्राश्नन्ति २२ तेभ्यो धेनुं ददाति २३ चैत्यस्याश्वत्थस्यार्द्रास्तिस्रः समिधः स्तिभिगवतीः सहपलाशाः प्रादेशमात्रीः सर्पिष्मत्योदने पर्यस्य प्र वो वाजा अभिद्यव इत्येताभिस्तिसृभिः स्वाहाकारान्ताभिरादधाति गायत्रीभिर्ब्राह्मणस्या बोध्यग्निरिति त्रिष्टुब्भी राजन्यस्य जनस्य गोपा इति जगतीभिर्वैश्यस्य २४ अजुह्वत्सँवत्सरमज-स्रमग्निर्मिन्वीत द्वादशरात्रं त्रिरात्रमेकरात्रँ वा २५ नास्याग्निं गृहाद्धरेयुर्नान्यत आहरेयुः २६ न प्रयायात् २७ नानृतँ वदेत् २८ न माँसमश्नीयात् २९ न स्त्रियमुपेयात् ३० श्वोऽग्नीनाधास्यमान उपवसेत्पूर्वां पौर्णमासीमुत्तराममा-वास्यां । नक्षत्रे च ३१ व्रतचारिण ऋत्विजः सह सँवसन्ति ३२ प्रजा अग्ने सँवासयेत्युत्तरपूर्वस्यां दिशि वासे कल्माषमजं वध्नाति ३३ १

शल्कैरग्निमिन्धान उभौ लोकौ सनोम्यहम् उभयोर्लोकयोर्ऋध्नोमि मृत्युं तराम्यहम् ॥ इति शल्कैरग्निमिन्धते १ यजमानायारणी प्रयछति २ मही

विश्पत्नी सदने ऋतस्यार्वाची एतं धरुणे रयीणाम् । अन्तर्वती जन्यं जातवेदसमध्वराणां जनयतं पुरोगाम् ॥ इति प्रतिगृह्णाति ३ ऋत्वियवती स्थोऽग्निरेतसौ रेतो धत्तं पुष्ट्यै प्रजननं ॥ तत्सत्यँ यद्वीरं विभृतो वीरं जनयिष्यतस्ते मत्प्रातः प्रजनयिष्येते ते मा प्रजाते प्रजनयिष्यतः प्रजया पशुभिरिदमहमनृतात्सत्यमुपैमि मानुषाद्दैवं दैवीँ वाचँ यछामीत्युक्त्वा वाचँ यछति ४ दक्षिणाग्नेररणी पत्नी पाणौ कुरुते ५ वाग्यतावरणिपाणी जागृतः ६ उपव्युषं ब्राह्मौदनिके अरणी निष्टपति ७ अयं ते योनिर्ऋत्विय इत्यरण्योऽसमारोपयति ८ अनुगमय्योदुह्य भस्म गार्हपत्याय लक्षणं करोत्युद्धत्यावोक्ष्य दक्षिणतःपुरस्ताद्दक्षिणाग्नेर्विसृतीयमात्रे गार्हपत्यलक्षणस्य नेदीयसि समं प्रति पुरस्तादाहवनीयाय ९ लक्षणानुपूर्वान्संभारान्निवपति १० उत्समुद्रान्मधुमाँ ऊर्मिरागात्साम्राज्याय प्रतरं दधानः । अमी ये मघवानो वयं चेषमूर्जं मधुमत्संभरेम ॥ इत्यपोऽनुपदासुका उपसृजति ११ इयत्यग्र आसीत् । अतो देवी प्रथमाना पृथग्यद्देवैर्न्युप्ता महित्वा ॥ इति वराहविहतं च न्युप्य तूष्णीँ वल्मीकवपां निवपति १२ यददो दिवो यदिदं पृथिव्याः समानँ योनिमभिसंबभूव । तस्य पृष्ठे सीदतु जातवेदाः शिवः प्रजाभ्य इह रयिर्नो अस्तु ॥ इत्यूषान्निवपँश्चन्द्रमसि पृष्णं तदिहेरयेतीमां मनसा ध्यायेत् १३ चन्द्रमग्निं चन्द्ररथँ हरिवृतं वैश्वानरमप्सुषदँ स्वर्विदम् । विगाहं तूर्णिं तविषीभिरावृतं भूर्णिं देवास इह सुश्रियं दधुः ॥ इति सिकता विपेशला निवपति १४ अदृँहथाः शर्कराभिस्त्रिभृष्टिभिरजयो लोकान्प्रदिशश्चतस्रः इति बभ्रूः शर्करा निवपति १५ यं द्विष्यात्तं मनसा ध्यायेत् १६ उदेह्यग्ने अधि मातुः पृथिव्या विश आविश महतः सधस्तात् । आशुं त्वाजौ दधिरे देवयन्तो हव्यवाहं भुवनस्य गोपाम् ॥ इत्याखुकिरिं निवपति १७ तूष्णीं पुष्करपलाशमौदुम्बरँ विकङ्कतँ शमीमश्वत्थं पलाशमशनिहतं च सप्तमम् १८ सँ वः सृजामि हृदयानि वः सँसृष्टं मनो अस्तु वः सँसृष्टः प्राणो अस्तु वः सँसृष्टास्तन्वः सन्तु वः ॥ इति संभारान्सँसृजति १९ आयं गौःपृश्निरक्रमीदिति गार्हपत्यलक्षणे संभारानभिमृशत्यन्तश्चरतीति दक्षिणाग्नेस्त्रिँशद्धामेत्याहवनीयस्य २० आजानेयमश्वं पुरस्तात्प्रत्यङ्मुखमवस्थापयति २१ गार्हपत्यलक्षणस्य पश्चान्मुञ्जावलोनन्यद्वा क्षिप्राग्निं निधाय वृषणो स्थ इति तत्र प्राञ्चावप्रछिन्नप्रान्तौ दर्भावुर्वश्यसीति तयोरुदक्कूला-

मधरारणिं पश्चात्प्रजननां मूलत उत्तरारणिं दशहोत्रावधाय चतुर्होतॄन्यजमानँ वाचयति १ अग्निं नरो दीधितिभिररण्योरित्येतस्याँ साम जायेति प्रेष्यति २ समवहितयोरितो जज्ञ इत्यधिमन्थति ३ त्वेषस्ते धूम ऋण्वतीति धूमे जाते ४ अदर्शि गातुवित्तम इति जाते ५ प्रजापतेष्ट्वा प्राणेनाभिप्राणिमि पूष्णः पोषाय मह्यं दीर्घायुत्वाय शतशारदायेति जातमभिप्राणिति ६ यो नो अग्निः पितर इति हृदयदेशमारभ्य जपति यजमानश्चोपोद्यम्य त्रिः पूर्णयत्पृथिव्या अनामृतँ संबभूव त्वे सचा । तदग्निरग्नये ददत्तस्मिन्नाधीयतामयम् ॥ इति दक्षिणत आसीनो ब्रह्मा सौवर्णँ शकलमाधास्यमाने संभारेषूपास्येत् ८ प्रयछेद्यजमानो द्वेष्याय रजतमविद्यमानेऽपविध्येत् ९ यदन्तरिक्षस्येति दक्षिणाग्नेय द्विव इत्याहवनीयस्य १० दोह्या च ते दुग्धभृच्चेति जपति ११ घर्मः शिर इति यजमानँ वाचयति १२ मयि गृह्णामीति हृदयँ संकल्पयतो ऽध्वर्युर्यजमानश्च १३ भूर्भुवोऽङ्गिरसां त्वा देवानां व्रतेनादध इत्याङ्गिरसस्यादध्या-दँग्नेष्ट्वेत्यन्येषामिन्द्रस्य त्वेति राजन्यस्य मनोष्ट्वेति वैश्यस्या छदि त्वेति सर्वत्रानुषजति १४ उपस्थकृतो भूरिति ज्वलन्तमादधाति १५ वारवन्तीयेन परिगीतमनुसृजति १६ अग्न आयूँषि पवसे ऽग्निर्ऋषिरग्ने पवस्वेत्येताभिराश्व-त्थीस्तिस्रः समिध आदधाति शमीमयीस्तिस्र एकामौदुम्बरीम् १७ अक्ता-नामग्नये स्वाहेत्येकैकामादधाति १८ गार्हपत्येऽग्निप्रणयनान्याधाय १९ ३

या वाजिन्नग्नेरित्यश्वमभिमन्त्रयते १ यदक्रन्द इत्यश्वस्य दक्षिणे कर्णे यजमानो जपति २ संभारशेषमुपयमनीः कृत्वौजसे बलाय त्वेत्यग्निमुद्यछति ३ आग्नीध्राय प्रदायोदङ्मुखो दक्षिणाग्निं मन्थति । भ्रष्टाद्गार्हपत्याद्वा प्रणयेत् ४ भुव इत्यूर्ध्वज्ञूरादधाति ५ वामदेव्येन परिगीतमनुसृजति ६ अग्निप्रण-यनान्यादाय प्राचीमनु प्रदिशं प्रेहि विद्वानित्यश्वप्रथमाः प्राञ्चोऽभिप्रव्रजन्ति ७ प्रणीयमानस्योत्तरतो यजमानो व्रजति ८ दक्षिणतो ब्रह्मा रथँ वर्तयति रथचक्रँ वा ९ नाकोऽसि ब्रध्नोऽसि प्रतिष्ठासंक्रमनतममिति समयार्धे हिरण्यं निधा-यावस्थाप्य यजमानो वरं ददाति १० उत्तरेण लक्षणं परिक्रम्याभ्यस्थाँ विश्वाः पृतना इति दक्षिणेन पादेन पार्श्वतः संभाराणामश्वमाक्रमयत्यपर्यावर्तयन्परि-क्रमयति ११ प्रत्यवनीयाश्वं प्रतिलभ्याग्निप्रणयनानि कुल्फदघ्नमुपनियम्य

जानुदघ्नमुद्गृह्णीयान्नाभिदघ्नमँसदघ्नम् १२ कर्णदघ्नं नात्युद्गृह्य भुवः स्वरिति यथार्षमादधाति ॥ यत्ते शुक्र शुक्रं ज्योतिः शुक्रं धामाजस्रं तेन त्वादध इडायास्त्वा पदे वयमिति च १३ पुरस्तात्प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नुदिते पार्श्वतः पदस्य स्वरित्यादधाति १४ यज्ञायज्ञीयेन परिगीतमनुसृजति १५ सपत्नवतो भ्रातृव्यवतो वा रथचक्रँ विहारे त्रिः परिवर्तयेत् १६ यजमानोऽग्नीनुपतिष्ठते सम्राट्च स्वराट्चेति गार्हपत्यँ विराट्च प्रभूश्चेति दक्षिणाग्निं विभूश्च परिभूश्चेत्याहवनीयम् १७ अग्नीन्परिसमुह्य पर्युक्ष्य परिस्तीर्य दक्षिणाग्नावाज्यँ विलाप्य गार्हपत्य उपाविश्रित्य संपूयैवंभूतस्यार्थान्कुर्वन्ति १८ शमी-मयीस्तिस्रोऽक्ताः समिधः समुद्रादूर्मिरित्येताभिस्तिसृभिः स्वाहाकारान्ताभि-रादधाति ॥ ये अग्नयः समनसा इत्यनक्तामौदुम्बरीम् १९ सप्त ते अग्ने समिध इति पूर्णाहुतिँ ॥ ये अग्नयो दिवो ये पृथिव्या इत्यग्निविपराणयनीयां जुहोति २० अध्वर्यवेऽश्वं ददामीति वाचँ विसृजते यजमानो वरं चापाकरोति २१ ४

दार्शपौर्णमासिकँ विधानमिष्टीनाम् १ विकारानुक्रमिष्यामः २ यथाम्नातं देवता उपलक्षयति शनैः ३ तन्त्र्या आग्न्याधेयिक्यः सद्यस्कालाः सर्वा उपाँशुदेवताः ४ निरुप्याग्नेयमष्टाकपालमुपसाद्य प्राक्प्रोक्षणादग्नेर्मन्व इत्यजँ विमुच्याग्रेणाहवनीयमुद्धत्यावोक्ष्याहवनीयात्सभ्यमादधाति सभ्यात्पूर्वमा-वसथ्यम् ५ उत्तरेणावोक्ष्याधिदेवनाय सँस्तृणाति पूर्वमामन्त्रणाय ६ अधिदेवने ऽहतँ वास उदग्दशमास्तीर्य तस्मिँश्चतुःशतमक्षान्निवपति ७ आर्याः कितवान्पर्युपविशन्ति ८ मध्येऽधिदेवने समुह्याक्षान्हिरण्यं निधाय निषसाद धृतव्रत इत्यभिजुहोति ९ व्युह्याक्षान्राजन्यस्योत नोऽहिर्बुध्न्य इति सभ्ये जुहोति १० यजमानो गां प्रसुवति ११ तस्मै शतमक्षान्प्रयछति । तान्विचिनुयात् १२ तान्कितवान्विजित्य यजमानो गां जेतेति कुरुतेति प्रेष्यति १३ तस्याः परूषि न हिँस्युरङ्गश इव विसर्जयेयुः १४ ताँ रन्धयित्वा ताँ सभासद्भ्य उपहरेत् १५ तया यद्गृह्णीयात्तदृत्विग्भ्यो दक्षिणाकाले दद्याद्रमणीयमत्रैव मन्त्रयेरन् १६ एना रजन्नित्यावसथ्ये जुहोति ॥ प्र नूनं ब्रह्मणस्पतिरित्यामन्त्रणे १७ यजमा-नोऽग्नीनुपतिष्ठते घर्मः शिर इति गार्हपत्यं पश्चात्प्राङ्मुखोऽर्को ज्योतिरि-त्याहवनीयं पुरस्तात्प्रत्यङ्मुखो वातः प्राण इति दक्षिणतो दक्षिणाग्निमुदङ्मुखो

मध्येऽवस्थाय कल्पेतां द्यावापृथिवी ये अग्नयः समनसा इत्यग्नीन् १८ प्रोक्षणेन प्रतिपद्य सिद्धेष्टिः संतिष्ठते १९ ५

सँस्थितायामग्नये पवमानायाष्टाकपालं निर्वपेत् १ त्रिंशन्मानँ हिरण्यं दक्षिणा २ संस्थितायामग्नये पावकायाग्नये शुचयेऽष्टाकपालौ ३ सप्ततिमानँ हिरण्यं दक्षिणा ४ सँस्थितायामाग्नावैष्णवमेकादशकपालँ । विष्णवे शिपिविष्टाय त्र्युद्धौ घृते चरुम् ५ अदित्यै घृते चरुं पशुकामो । ऽग्नीषोमीयमेकादशकपालं ब्राह्मण । आवपनशृतावमेक्षणौ ६ ब्रह्मभागयजमानभागाभ्याँ सहादित्यं चरुं ब्रह्मणे परिहरति ७ दक्षिणाकालेऽजमग्नीधे ददात्युपबर्हणं च सर्वसूत्रमनड्वाहमध्वर्यवे धेनुँ होत्रे । मिथुनौ वत्सतरौ तयोः साण्डो द्विहायनो रथँ युक्तँ शतमानं चेष्ट्यपवर्गेऽध्वर्यवे वसने ८ हुते समिष्टयजुष्यादित्यं चरुं चत्वार ऋत्विजः प्राश्नन्ति । तेभ्यो मुष्करँ वत्सतरं ददाति ९ सोमेनायक्ष्यमाणोऽग्नीनाधाय चतुःशरावं जीवतण्डुलमोदनमृत्विजो भोजयेत् १० आज्यस्येष्टिदेवताभ्यो जुहुयात् ११ सँवत्सरे हवींषि निर्वपति १२ नास्यानश्नन्ब्राह्मणो गृहे वसेत् १३ ऋबीसपक्वस्य नाश्नीयात् १४ या अन्तर्नाव्यापः स्युर्न तासामाचामेत् १५ न क्लिन्नं दार्वभ्यादध्यात् १६ स्वकृत इरिणे नावस्येत् १७ आमन्त्रणं नाहूतो गछेदपराह्ण आमन्त्रणँ व्रजेत् १८ दर्शपौर्णमासावारप्स्यमान आरम्भणीयामिष्टिं निर्वपत्याग्नावैष्णवमेकादशकपालमग्नये भगिनेऽष्टाकपालँ सरस्वत्यै चरुं सरस्वते द्वादशकपालम् १९ प्राक्स्विष्टकृतो द्वादशगृहीतं जुह्वामाधायाकूताय स्वाहाकृतये स्वाहेतिप्रभृतिभिर्द्वादशभिर्व्युद्ग्राहं जयाञ्जुहोति ॥ प्रजापतिः प्रायछदिति त्रयोदशीँ यदि कामयेत मुख्यो ब्रह्मवर्चसी स्यादग्ने बलदेति चतुर्दशीँ यदि कामयेत चित्रमस्यां जनतायाँ स्यामिति चित्रमह तस्यां जनतायां भवति शबलं त्वस्यात्मञ्जायत इति २० मेक्षणेन चरूणाँ स्विष्टकृते समवद्यतीडायै च २१ मिथुनौ गावौ दक्षिणा २२ सूक्तवाके मेक्षणमन्वध्यस्यति २३ पौर्णमास्यामाधाय सोपवसथामारम्भणीयां कृत्वा सद्यस्कालया पौर्णमास्या यजेत २४ अमावास्यायामाधाय नक्षत्रे वा पूर्वां पौर्णमासीमुपोष्यारम्भणीयां कुर्वीतोत्तरामुपोष्य पौर्णमास्या यजेत यजेत २५ ६

इति मानवसूत्रे प्राक्सोमे पञ्चमोऽध्यायः

उद्धराहवनीयमित्युक्त्वा गार्हपत्यादाहवनीयं ज्वलन्तं प्रणयत्यपराह्णे व्युछन्त्यां प्रातः १ वाचा त्वा होत्रा प्राणेनोद्गात्रा चक्षुषाध्वर्युणा मनसा ब्रह्मणा श्रोत्रेणाग्नीध्रेणैतैस्त्वा पञ्चभिर्दैवैर्ऋत्विग्भिरुद्धरामीत्युद्धरति २ उद्ध्रियमाण उद्धर पाप्मनो माँ यदविद्वान्यच्च विद्वाँश्चकार । अह्ना यदेनः कृतमस्ति पापँ सर्वस्मादुद्धृतो मुञ्च तस्मात् ॥ इति हरति ॥ रात्र्या यदेनः इति प्रातः ३ अमृताहुतिममृतायां जुहोम्यग्निं पृथिव्याममृतस्य जित्यै । त्वयाग्ने काममहं जयामि प्रजापतिर्यं प्रथमो जिगायाग्निमग्नौ । स्वाहा ॥ इति सायं निदधाति ॥ सूर्यमग्नाविति प्रातः ४ नक्तँ वा गृह्णीयात् ५ गतश्रीः शुक्रवान्ब्राह्मणो ग्रामणी राजन्यो बहुपुष्टो वैश्यस्तेषां नित्यधृतः ६ महदाहवनीयेऽभ्यादधाति ७ प्रदोषमग्निहोत्रँ होतव्यँ व्युष्टायां प्रातः ८ अग्ने शुन्धस्वेत्याहवनीयं परिमार्ष्ट्यग्ने गृहपते इति गार्हपत्यमग्ने वह्ने इति दक्षिणाग्निम् ९ ऋतसत्याभ्यां त्वा पर्युक्षामीति सायं पर्युक्षति सत्यऋताभ्यां त्वेति प्रातः १० अग्नीन्परि-स्तृणाति ११ पश्चादाहवनीयस्योदगग्रान्दर्भान्स्तृणाति १२ उत्तरतो गार्हपत्यस्य सँस्तीर्णे समिधँ स्रुवमग्निहोत्रहवणीमार्यकृतीमुपसादयति १३ उत्तरतो वत्स-मुपसृजति । प्राङ्मुखीमुपसीदत्यार्यकृत्यां दोहयत्यन्यच्छूद्रादुदङ्मुखीँ वा १४ अपोढं जन्यं भयमपोढाः सेना अभीत्वरीरिति गार्हपत्यादुदीचोऽङ्गारानपोह्य इडायास्पदं घृतवच्चराचरम् जातवेदो हविरिदं जुषस्व ये ग्राम्याः पशवो विश्वरूपास्तेषाँ सप्तानामिह पुष्टिरस्तु ॥ इत्यधिश्रयति १५ उद्भवः स्थ इत्यवेक्षेत १६ उदहं प्रजया पशुभिर्भूयासमित्युल्मुकेनाभितापयति १७ हरस्ते मा विनैषमित्युदविन्दुना समुदन्तं प्रतिनयति १८ विश्वज्योतिरसीति पुनरवदीपयति १९ अन्तरितँ रक्षो अन्तरिता अरातय इति तृणेन त्रिः पर्यग्निं करोति २० उदेहि वेदिं प्रजया वर्धयास्मानुदस्य द्वेषो अभयं नो अस्तु । मा नो हिँसीः शपथो माभिचारः शिवे क्षेत्रे अनमित्रे विराजे ॥ इत्युदगुद्वासयति वर्त्म कुर्वन् २१ प्रत्यूढं जन्यं भयं प्रत्यूढाः सेना अभीत्वरीरित्यङ्गारान्प्रत्यूहति वर्त्म च लोपयति २२ पयसा जुहोति दध्ना यवाग्वाज्येन वा २३ दध्याज्य-योरधिश्रयणं न स्यादभितापनं च २४ निष्टप्तँ रक्षो निष्टप्ता अरातय इति गार्हपत्ये

स्रुक्स्रुवौ निष्टपति २५ स्रुवे समिधमुपसँयम्यो न्नेष्यामीत्युक्त्वोन्नयामीति प्रातर्भूरिडा भुव इडा स्वरिडा जन इडेत्येकैकेनोन्नयत्युत्तरमुत्तरं भूयाँसं पूर्णमुत्तमँ सर्वान्वा समान् २६ इदं देवानामित्युन्नीतमभिमृशतीदमु नः सहेति शेषम् २७ पशून्मे यछेति दर्भेषु सादयति प्राक्तराँ वा २८ दशहोत्राग्निहोत्रमुन्नीतमभिमृशति २९ उपरिष्टात्स्रुग्दण्डे समिधमुपसँयम्योर्वन्तरिक्षँ वीहीति समयाग्निँ हरति ३० स्वाहाग्नये वैश्वानरायेति समयार्धे नियच्छति ३१ वायवे त्वेत्युद्यछति ३२ आयुर्मे यछेति दर्भेषु सादयति ३३ एषा ते अग्ने समित्तया त्वँ वर्धस्व चा च प्यायस्व बर्धिषीमहि च वयमा च प्यायिषीमहि च स्वाहेति समिधमादधाति ३४ प्राणापाने निमिषे ध्यायेत् ३५ द्व्यङ्गुले समिधमभिजुहोति श्येनीं ज्वलन्तीँ वा ३६ भूर्भुवः स्वरग्निहोत्रमग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति सायं जुहोति ॥ भूर्भुवः स्वरग्निहोत्रँ सूर्यो ज्योतिर्ज्योतिः सूर्यः स्वाहेति प्रातः ३७ वर्चो मे यछेति दर्भेषु सादयति ३८ प्रजापते पशून्मे यछेति गार्हपत्यमवेक्षते ३९ प्रजापतये स्वाहेति मनसोत्तरां भूयसीम् ४० शिष्ट्वा भूयिष्ठमनाभो मृड धूर्तेति समयाग्निं त्रिरुदङ्ङुद्दिशति ४१ इषे त्वेत्यवाचीनँ सायमवमाष्टर्यूर्जे त्वेत्यूर्ध्वं दिवोन्मार्ष्टि ४२ प्रजां मे यछेत्युदग्दण्डां निदधाति ४३ ओषधीर्जिन्वेति दर्भेषु लेपं निमार्ष्टि ४४ पितृभ्यः स्वधेति दक्षिणत उत्तानं पाणिं निदधाति ४५ पूषासीत्यङ्गुल्या द्विः प्राश्नात्यस्पर्शयन्दन्तान् ४६ इतरजनेभ्यः स्वाहेति निर्लेढि ॥ गन्धर्वेतरजनेभ्यः स्वाहेति प्रातः ४७ अनिर्मृष्टायामासिच्य सर्पान्पिपीलिकाः प्रीणामि सर्पपिपीलिकाभ्यः स्वाहेति प्रागुदीचीस्त्रिरपो निःसारयति ४८ दर्भैः प्रक्षाल्यासिच्य तूष्णीं त्रिर्निनयति ४९ पूर्णामादाया मृते प्राणं जुहोमि स्वाहेति पश्चादाहवनीयस्योदीचीं निनयति ॥ प्राणममृते प्राणं जुहोमि स्वाहेति प्रातः ५० अग्निहोत्रहवणीं प्रतप्य हस्तमवदधाति हस्तँ वा प्रतप्याग्निहोत्रहवण्यामवधायोद्धृह्योदीचीं निदधाति ५१ स्रुवेणापरयोर्जुहोत्यग्ने गृहपत इति गार्हपत्ये स्रुवार्धँ स्वाहेति शेषमन्तपते अन्वस्य नो देहीति दक्षिणाग्नौ स्रुवार्धँ स्वाहेति शेषमहोमो वापरयोः ५२ यां प्रथमाग्निहोत्राय दुह्यात्सा दक्षिणा पयो वा ५३ राजन्यस्याग्निहोत्रं धार्मुकस्य नित्यं पर्वस्वितरस्य । भक्तं च नित्यं ब्राह्मणाय दद्यात् ५४ १

वाग्यतोऽधिश्रित उन्नीयमाने वा पाणी प्रक्षालयमानो विहव्यस्य चतस्र ऋचो जपति १ दक्षिणतः प्रागुदङ्मुख ऊर्ध्वस्तिष्ठन्नु न्नेष्यामीत्युक्ते भूर्भुवः स्वरोमुन्न-येत्यनुजानाति २ उपविश्याभ्युदाहृतं दशहोत्राभिमृशति प्रथमा-ग्निहोत्रँ व्याहृतिभिश्च ३ सँवत्सरे सँवत्सरे च हुतायां पूर्वस्यामुपोत्थायोपप्रयन्तो अध्वरमिति द्वे निगद्य युवमेतानीत्यग्नीषोमीयया ज्यौत्स्न उपतिष्ठत । ऐन्द्राग्न्या तामिस्रे ऽयमिह प्रथमो धायि धातृभिरिति ४ अग्नीषोमीयायाः पुरस्ताद्विहव्यस्य चतस्र ऋचो जपति ५ अग्नीषोमा इमँ सु म इतिप्रभृत्या समिल्लिङ्गैर्तैस्तिस्रः समिध आदधाति ६ समानमा चित्रावसो स्वस्ति ते पारमशीयेति त्रिः ७ अम्भः स्थाम्भो वो भक्षीयेति वत्समालभते ८ उप त्वाग्ने दिवे दिव इत्यष्टाभिगर्हिपत्यमुपतिष्ठते ९ ऊर्जा वः पश्यामीति गामालभते १० महि त्रीणामवोऽस्त्वित्याहवनीयमुपतिष्ठते ११ निम्रदोऽसीति यथोपदिष्टं ब्राह्मणेन १२ पूषा मा पथिपाः पात्वित्येकैकेनोपतिष्ठते पृथि-वीमन्तरिक्षं दिवं च १३ प्राची दिगग्निर्देवतेति प्रतिदिशँ यथाम्नातं ॥ धर्मो मा धर्मनः पात्विति च यथाम्नातम् १४ उपविश्यान्तराग्नी ज्योतिषे तन्तवे त्वेति जपति १५ सायं पत्नयन्वास्ते न प्रातः १६ श्वोभूते सूर्यपत्नीरुपा-सरन्देवीरुषस आयतीः ता मा यज्ञस्य मातरोऽभिषिञ्चन्तु वर्चसा ॥ वर्चसा द्रविणेन च देवीर्ममभिषिञ्चन्तु द्विषन्तो रध्यन्तां मह्यं मा त्वहं द्विषताँ रधम् ॥ ऋषिरस्म्येकवीरो विराजोऽस्मि नृषासहिः आवल्गोऽस्मि सँवल्गो वज्रो हास्मि सपत्नहा ॥ सपत्नानहनँ रिपून्प्रतिषिक्ता अरातयः प्रतिषिक्ता अरातयोऽरिष्टाः संचरेमहि ॥ अर्वाग्वसुरिति त्रिरुक्त्वा विहव्यस्य चतस्र ऋचो जपति १७ यो यजमानो न श्रेयान्स्यात्स विहव्येनोपतिष्ठेत १८ २

दशावरा रात्रीरुषित्वा सहधनः प्रयास्यन्नाधायानेयान्यनपोह्यान्यपोद्धृत्योर्ध्वँ प्रातराहुतेः सर्वेषु युक्तेष्वमीवहा वास्तोष्पते वास्तोष्पत इत्येते निगद्याहुतिं जुहोति तुभ्यं ता अङ्गिरस्तम विश्वाः सुक्षितयः पृथक् । अग्ने कामाय यमिरे ॥ इति द्वितीयाम् १ प्रवत्स्यन्नयं ते योनिर्ऋत्विय इत्यरण्योः समारोपयति । यदि गतश्रीः सर्वान् २ या ते अग्ने यज्ञिया तनूस्तयेह्यारोहात्मनात्मानमछा वसूनि कुर्वन्नर्या पुरूणि यज्ञो भूत्वा यज्ञमासीद स्वँ योनिः भुव आजायमानः

स्वक्षय एहीत्यात्मनि वा समारोपयति ३ संक्षाप्यावदाह्यान्प्रयाय सहविहारो यायावरः प्रयाति ४ उपावरोह जातवेदः पुनस्त्वं देवेभ्यो हव्या वहतु प्रजानन् आयुः प्रजाँ रयिमस्मासु धेह्यजस्रो दीदिहि नो दुरोणे ॥ इति मन्थिष्यञ्जपति ५ एवमेवाहरहरध्वानमेष्यन्समारोपयत्युपावरोहेति च ६ अग्नीञ्ज्योतिष्मतः कुर्वित्युक्त्वा प्रवत्स्यञ्ज्वलत उपतिष्ठते ॥ ऽहिर्बुध्न्य मन्त्रं मे पाहि तं मे गोपायास्माकं पुनरागमादित्यावसथ्यमुपतिष्ठते सप्रथः सभां मे पाहि तां मे गोपायास्माकं पुनरागमादिति सभ्यं पशून्मे शँस्य पाहीत्याहवनीयं प्रजां मे नर्य पाहीति गार्हपत्यमन्नं बुध्य पाहीति दक्षिणाग्निम् ७ इमान्मे मित्रावरुणौ गृहान्गोपायतँ युवमित्यन्तराग्नी तिष्ठञ्जपति ८ मम नाम प्रथमं जातवेदः पिता माता च दधतुर्न्वग्रे तत्त्वं बिभृहि पुनरा ममैतोस्तवाहमग्ने बिभराणि नाम ॥ इत्याहवनीयमुपतिष्ठते ९ मा प्रगाम पथो वयं मा यज्ञादिन्द्र सोमिनः । मान्तस्थुर्नो अरातयः ॥ इत्यभिप्रव्रज्याग्निसकाशे वाचँ यच्छत्यसकाशे विसृजति १० प्रवसन्होमवेलायां प्रतिदिशमग्नीनुपतिष्ठते ११ विश्वदानीमाभरन्तोऽनातुरेण मनसा । अग्ने मा ते प्रतिवेशा रिषाम ॥ इति प्रत्येत्य समिधावाहरत्यसकाशे वाचँ यछत्यग्निसकाशे विसृजति १२ अग्निँ समाधेहीत्युक्त्वा भस्म त्वा उपतिष्ठते १३ अहिर्बुध्न्य मन्त्रं मेऽजुगुपस्तं मे पुनर्देहीत्यावसथ्यमुइपतिष्ठते सप्रथः सभां मेऽजुगुपस्तां मे पुनर्देहीति सभ्यं पशून्मे शँस्याजुगुप इत्याहवनीयं प्रजां मे नर्याजुगुप इति गार्हपत्यमन्नं मे बुध्याजुगुप इति दक्षिणाग्निम् १४ इमान्मे मित्रावरुणौ गृहाञ्जुगुपतँ युवमित्यन्तराग्नी तिष्ठञ्जपति १५ तव च नाम मम च जातवेदो वाससी इव विवसानौ चरावः ते हि बिभृवो महसे जीवसे च यथायथं नौ तन्नौ जातवेदः ॥ इति समिधोऽग्निष्वादधत्तूष्णीँ सभ्यावसथयोः १६ समिल्लिङ्गैरितरेषूपस्थाय चेन्न प्रवसेत्पुनरेत्योपतिष्ठेत १७ यद्यनुपस्थिताग्निः प्रवासमापद्येत इहैव सँस्तत्र सन्तं त्वाग्ने हृदा वाचा मनसा बिभर्मि तिरो मे यज्ञ आयुर्मा प्रहासीर्वैश्वानरस्य त्वा चक्षुषोपतिष्ठे ॥ इत्युपतिष्ठते १८ ३

पर्वण्याग्रयणं कुर्वीत वसन्ते यवानां शरदि व्रीहीणाम् १ अग्रपाकस्येष्ट्वा नवस्याश्नीयात् २ सिद्धमा निर्वपणात् ३ आग्नेन्द्रान्निर्वपति वैश्वदेवान्द्यावा-

पृथिवीयान् ४ शरदि सोमाय श्यामाकानामन्यस्यां पात्र्याम् ५ नानाबीजानां धर्मं विधास्यामो वषट्कारप्रदानानां चैककपालानां च ६ पृथगभिमर्शनं नानाबीजानाम् ७ मुख्येषु हविष्कृतमाह्वयति ८ आवपनप्रभृति फली-करणान्तमैकैकस्य निष्पवणान्तँ यवानाम् ९ सिद्धमोपधानात् १० आग्नेन्द्राय द्वादशकपालान्युपदधात्येकं द्यावापृथिवीयाय ११ सिद्धमाधिश्रयणात् १२ आग्नेन्द्रमधिश्रित्य वैश्वदेवं चरुमधिश्रयति १३ पवित्रान्तर्हिते पय आनीय तण्डुलानोप्याङ्गुष्ठपर्वमात्रं कूतीपलाशमात्रँ वा द्यावापृथिवीयमधिश्रित्य सौम्यं चरुमधिश्रयति १४ पवित्रान्तर्हितेऽप आनीय तण्डुलानोप्य मेक्षणेन प्रदक्षिणं चरू श्रपयति १५ सिद्धमोद्वासनात् १६ एककपालमन्यस्यां पात्र्या-मलंकुर्वन्नभिपूरयति १७ प्रचरणवेलायां बर्हिषि सादयित्वोपस्तीर्यैककपालँ सकृत्सर्वमवद्यति १८ आशयस्यान्वासिच्य द्विरभिघार्योपाँश्वेककपालेन प्रचर्य वषट्कृते मध्ये पाणिना जुहोत्यृजुं प्रतिष्ठितमाशयेनाभिजुहोति १९ यदि पर्यावर्तेत ब्राह्मणव्याख्यातम् २० प्राविस्वष्टकृतः षडाज्याहुतीर्जुहोति शतायुधाय शतवीर्याय शतोतयेऽभिमातिषाहे शतँ यो नः शरदो नयदिन्द्रो विश्वस्य दुरितस्य पारम् ॥ इमे चत्वारो रजसो विमानेऽन्तरा द्यावापृथिवी वियन्तु पन्थानः तेषामज्यानँ यतमो न आवहात्तस्मै नो देवाः परिदत्त विश्वे ॥ वसन्तो ग्रीष्मो मधुमन्ति वर्षाः शरद्धेमन्तः सुविते दधातु तेषामृतूनाँ शतशारदानां निवात एषामभयाः स्याम ॥ सँवत्सराय परिवत्सरायेदा-वत्सरायानुवत्सरायोद्वत्सराय कृणुता बृहन्नमः तेषाँ वयँ सुमतौ यज्ञियानां ज्योग्जीवा अहताः स्याम ॥ इयँ स्वस्तिः सँवत्सरीया परिवत्सरीयेदावत्सरी-यानुवत्सरीयोद्वत्सरीया सा नः पिपर्त्वहृणीयमानैनाह्नेदमहरशीय ॥ आ नः प्रजां जनयतु प्रजापतिरिति षष्ठी २१ एककपालाशयस्य स्विष्टकृते समवद्यतीडायै च २२ यजमान इडायाः प्राश्नाति २३ एतमु त्यं मधुना सँयुतँ यवँ सरस्वत्या अधि मनावचर्कृषुः इन्द्र आसीत्सीरपतिः शतक्रतुः कीनाशा आसन्मरुतः सुदानवः ॥ इति यवानाम् २४ भद्रान्नः श्रेयः समनैष्ट देवास्त्वयावसेन समशीमहि त्वा स नो मयोभूः पितुराविवेश शिवस्तोकाय तन्वो न एधि ॥ इति व्रीहीणाम् २५ अग्निः प्राश्नातु प्रथमः स हि वेद यथा हविः शिवा अस्मभ्यमोषधीः कृणोतु विश्वचर्षणिः ॥ इति श्यामाकानाँ वसन्ते

वेणुयवानाम् २६ वत्सः प्रथमजो दक्षिणा २७ बुभुक्षन्श्यामाकेनेष्ट्वा बभ्रुं पिङ्गलँ वत्सतरं दद्याद्वसनं च २८ ४

आहितेषु व्यृध्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं निर्वपेत् १ पौर्णमास्यां ज्वलतो विसृजेत् २ अग्न्याधेयेन पुनराधेयँ व्याख्यातम् ३ विकाराननुक्रमिष्यामः ४ यथाम्नातँ वर्षासु शरदि पुनर्वस्वोरनुराधासु वा ५ संभारेषु दर्भानुपोलपान्कुर्यात् ६ परिगीतं परिगीतँ ॥ यत्त्वा क्रुद्धः परोवप मन्युनेति तिसृभिस्त्रिः समिन्द्धे ७ पुनस्त्वादित्या रुद्रा वसवः समिन्धतामिति प्राक्पूर्णाहुतेः षट्संततिहोमाञ्जुहोति ८ आग्नेयमेव पञ्चकपालँ विभक्तीः प्रयाजानुयाजेष्वाग्नेयावाज्यभागौ ९ पुनरूर्जा निवर्त-स्वेति पुरस्तात्प्रयाजानामाहुतिं जुहोति १० दक्षिणाकाले पुनरुत्स्यूतँ वासो देयं पुनर्णवो रथः पुनरुत्सृष्टोऽनड्वान्सौवर्णशातमानिको रुक्मोऽग्न्यावेयिक्यश्च दक्षिणाः ११ सह रय्या निवर्तस्वेत्युपरिष्टादनुयाजानां चतस्र आहुतीर्जुहोति १२ अकामविछिन्ने न समिन्धनीः कुर्यात् १३ सर्वत्रारम्भणीया सर्वत्रारम्भणीया १४ ५

इति मानवसूत्रे प्राक्सोमे षष्ठोऽध्यायः

चातुर्मास्यान्यारप्स्यमानः पूर्वां पौर्णमासीमुपोष्याग्नये वैश्वानराय द्वादशकपालं निर्वपति पार्जन्ये च चरुम् १ अपः प्रणेष्यन्पञ्चहोतारं मनसानुद्रुत्य जुहोति २ धेनुरनड्वाँश्च दक्षिणा ३ सिद्धेष्टिः संतिष्ठते ४ प्राचीनप्रवणे वैश्वदेवेन यजेत फाल्गुन्यां चैत्र्याँ वसन्ते वा ५ नोपवसथे चातुर्मास्येषु केशश्मश्रु यजमानो वापयते ६ व्रतोपेतस्य शाखामाहृत्य वत्सानपाकरोति ७ आप्यायध्वमघ्न्या देवेभ्यो विश्वेभ्यो देवेभ्यो भागमिति गाः प्रार्पयति ८ प्रसूनः प्रस्तरः । त्रेधा संनद्धमिध्माबर्हिर्द्वौ भागौ तूष्णीँ संनह्यासंनद्धं तृतीयं यदेकधा मन्त्रेण संनह्यति तूष्णीमिध्मम् ९ समानं दोहनम् १० तिसृषु दुग्धासु बहु दुग्धि विश्वेभ्यो देवेभ्यो हविरिति त्रिरुक्त्वा वाचँ विसृजते ११ विश्वेभ्यस्त्वा देवेभ्यो भागं सोमेनातन-च्मीत्यातनक्ति १२ सिद्धमा पात्रप्रयोजनात् १३ चरुकपालं प्रयुनक्ति द्वितीयामाज्यस्थालीं पृषदाज्याय स्रुचं चोपभृतोऽनन्तरा १४ सिद्धमा

निर्वपणात् १५ आग्नेयोऽष्टाकपाल इतिप्रभृतीनि पञ्च निर्वपति मरुद्भ्यः स्वतवद्भ्यः सप्तकपालं द्यावापृथिवीयमेककपालम् १६ सिद्धमाधिवपनात् १७ प्रागधिवपनाच्चरव्यानपायातयति १८ अध्युप्य कपालान्युपदधाति १९ प्रातर्दोहं दोहयति २० उत्पूतानां पूष्णे पिष्टान्यपायातयति २१ चरुषु पिष्टभाक्पूषा सर्वत्र २२ अनुपूर्वँ हवीँष्यधिश्रयति २३ मारुतमधिश्रित्य तप्ते प्रातर्दोहे सायं दोहमानीयामिक्षां करोति २४ एतेनाभिक्षा सर्वत्र व्याख्याता २५ आज्यं निरुप्य पृषदाज्याय दधि निर्वपति समानधर्ममाज्येन २६ सिद्धमा स्रुचाँ संमार्जनात् २७ समानँ संमार्जनमुपभृतः पृषदाज्यधान्याश्च २८ सिद्धमाज्यग्रहेभ्यः २९ चतुर्गृहीतान्याज्यानि पृषदाज्यधान्यां द्विरुपस्तीर्य दध्यानीय सकृदभिघारयन्पृषत्करोति ३० सकृदुपस्तीर्य द्विरभिघारयेद्वर्षासु ३१ सिद्धमाज्यानाँ सादनात् ३२ समानँ सादनमुपभृतः पृषदाज्यधान्याश्च ३३ सिद्धमोद्वासनात् ३४ प्रागभिघारणादामिक्षाँ विवाजिनां कृत्वोत्करे वाजिनमासादयति ३५ अलंकृत्यानुपूर्वँ हवीँष्यभ्युदाहरति ३६ सिद्ध-माभिमर्शनात् ३७ प्रागभिमर्शनान्निर्मन्थ्येन प्रचरति ३८ उत्तरस्य पश्चात्परिधि-संधेरग्नेर्जनित्रमसीत्यधिमन्थनँ शकलमवस्थापयति ३९ वृषणौ स्थ इति तत्र प्राञ्चावप्रछिन्नप्रान्तौ दर्भौ निधायोर्वश्यसीति तयोरुदक्तूलामधरारणिं पश्चा-त्प्रजननां मूलत उत्तरारणिमायुरसीत्याज्यस्थाल्या बिले स्नेहयँस्त्रिः समनक्ति ४० पुरूरवा असीति संदधाति ४१ अग्नये मथ्यमानायानुब्रूहीत्यनुवाचयति ४२ गायत्रमसि त्रिष्टुबसि जगदसीति प्रदक्षिणं त्रिरधिमन्थति ४३ अग्नये जातायेति जाते ४४ अग्नये प्रह्रियमाणायेति प्रह्रियमाणे ४५ अग्रेणोत्तरं परिधिमन्ववहृत्यान्वारब्धे यजमाने वाचयन्भवत नः समनसाविति स्वाहा-कारान्तेन प्रहृत्य शकलमग्नावध्यस्यति ४६ अग्ना अग्निश्चरतीति स्रुवेणा-भिजुहोति ४७ पूर्णस्रुवँ सादयित्वा पञ्चहोत्रा चातुर्मास्यान्यभिमर्शयति ४८ १

सिद्धमा प्रयाजेभ्यः १ आश्रावं नव प्रयाजान्यजति २ त्रीन्हुत्वा समानयति त्रीन्हुत्वा समानयति । द्वौ हुत्वा सर्वँ समानीयैकँ हुत्वात्याक्रम्यानुपूर्वँ हवीँष्यभिघारयत्यन्ततः पृषदाज्यं नोपभृतम् ३ सिद्धमा प्रचरणात् ४ उपाँशु

सावित्रैककपालाभ्यां प्रचरति ५ सिद्धमा स्विष्टकृतः ६ प्राविस्वष्टकृतो मधवे स्वाहेतिप्रभृतीनि मासनामानि जुहोति चत्वारि वैश्वदेवे चत्वारि वरुणप्रघासेषु चत्वारि साकमेधेष्वेकँ शुनासीर्ये ७ दक्षिणाकाले वत्सः प्रथमजो दक्षिणा ८ सिद्धमानुयाजेभ्यः ९ पृषदाज्यं जुह्वामानीयाश्रादं नवानुयाजान्यजति १० वाजवत्योपभृता सह पृषदाज्यधानीं निगृह्णाति व्युद्गृह्णाति संप्रगृह्णाति निरस्यति ११ घृताच्यौ स्थो यजमानस्य धुर्यौ पातमिति वेद्यँसयोः स्रुचौ विमुञ्चति १२ स्रुचि चमसे वान्तर्वेद्यूर्ध्वस्तिष्ठन्बर्हिरनुवि-षिञ्चन्वाजिन गृह्णाति १३ वाजिभ्योऽनुब्रूहीत्यनुवाचयति १४ आथाव्य वाजिनो यजेति प्रेष्यति १५ वषट्कृतानुवषट्कृते हुत्वोच्छेषेण दिशः प्रतियजति दिशः स्वाहेति दिक्षु पूर्वार्धादुपक्रम्य प्रदक्षिणं पञ्चमेन मध्ये षष्ठेन पूर्वार्धे १६ शेषँ समधा विभज्यो पहूतोपह्वयस्वेत्युक्त्वोपहूता उपह्वयध्वमिति वा १७ आ मा विशन्त्विन्दव आ गल्दा धमनीनाम् रसेन मे रसं पृण वाजिनो मे यज्ञँ वहानि ॥ इत्यृत्विजः प्राश्नन्ति यजमानश्च । होता प्रथमो भक्षयते १८ सिद्धमा समिष्टयजुषः १९ द्विर्ध्रुवामाप्याय्यैष ते यज्ञो देवा गातुविद इति द्वे समिष्टयजुषी जुहोति २० सँवत्सरीयाँ स्वस्तिमाशास इत्याह यजमानः २१ सिद्धेष्टिः संतिष्ठते २२ सद्यः पौर्णमासीँ संस्थाप्य ऋतमेव परमेष्ठ्यृतं नात्येति किंचन ऋते समुद्र आहितः समुद्रेण पृथिवी दृढा ॥ अग्निस्तिग्मेन शोचिषा तप आक्रान्तमुष्णिहा शिरस्तपस्याहितँ वैश्वानरस्य तेजसि ॥ ऋतेनास्य निवर्तय सत्येन परिवर्तय तपसास्यानुवर्तय शिवेनास्योपवर्तय शग्मेनास्याभिवर्तय ॥ इति त्रिश्येतया शलल्या लौहायसेन क्षुरेण निवर्तयति केशान्वपति श्मश्रूणि २३ तदृतं तत्सत्यं तञ्शकेयं तेन शकेयं तेन राध्यासं तन्मे राध्यतामिति जपति यजमानः २४ चतुरो मासान्न माँसमश्नाति न स्त्रियमुपैति नोपर्यास्ते । जुगुप्सेतानृतात्प्राङ्शेते । मध्वश्नात्यृतौ भार्यामुपैति २५ २

वरुणप्रघासाश्चतुर्षु मामेषु १ वैश्वदेविकँ विधानम् २ पञ्च संचराणाम् ३ मारुत्यै प्रतिप्रस्थाता वत्सानपाकरोत्यध्वर्युर्वारुण्यै ४ पृथगिध्माबर्हिषी संनह्यतः । सकृत्संनद्धं प्रतिप्रस्थाता ५ यथाकालं पृथग्दोहयतः ६ सिद्धमा

पात्रप्रयोजनात् ७ पृथक्पात्राणि प्रयुनक्ति स्रुवपञ्चमाः स्रुचः प्रतिप्रस्थाता द्वे चरुस्थाल्यौ स्फ्यँ वेदं च ८ सिद्धमा निर्वपणात् ९ पञ्च संचराणि निरुप्याध्वर्युरैन्द्राग्नं द्वादशकपालं निर्वपति कायमेककपालम् १० यथाकालमामिक्षे पृथक्संपादयतः ११ सिद्धमाभिवासनात् १२ पिष्टलेपं निधायाग्रेणाहवनीयं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पृष्ठ्याशङ्कुं निहत्य वेदादानप्रभृति वेदिँ विदधाति षट्शयां प्राचीं चतुःशयां पश्चात्त्रिशयां पुरस्तात् १३ पूर्वार्धे वेद्या वितृतीयमात्रेऽरत्निमात्रीं चतुर्दिष्टिमुत्तरवेदिँ विदधाति १४ अग्रेणोत्करं प्रक्रममात्रे वेदेरुद्धत्यावोक्ष्य चात्वालँ शम्यया परिमिमीते तप्तायनी मेऽसीति दक्षिणतो वित्तायनी मेऽसीति पश्चादवतान्मा नाथितमित्युत्तर-तोऽवताद्व्यथितमिति पुरस्तात् १५ अग्ने अङ्गिर इति पुरस्तात्प्रत्यङ्मुखश्चात्वालँ स्पयेनाभिहन्ति १६ आयुना नाम्नेहीति पाँसून्पाणौ कुरुते १७ वसवस्त्वा हरन्त्वितिप्रभृतिभिः प्राङ्मुख उत्तरवेद्यां निवपति ॥ यो द्वितीयस्यामिति द्वितीयँ यस्तृतीयस्यामिति तृतीयँ । समानमन्यत्तूष्णीं चतुर्थम् १८ विदेरग्ने नभो नाम यत्त इति जानुदघ्नमृजुं चतुरस्रं खात्वोत्तरवेद्यां निवपति १९ सिँहीरसि महिषीरसीत्युत्तरवेदिं करोति २० तस्यां मध्ये प्रादेशमात्रीं चतुरस्रां नाभिं करोति २१ देवेभ्यः शुन्धस्वेत्यद्भिरवोक्षते २२ देवेभ्यः शुम्भस्वेति सिकताभिः प्ररोचयति २३ आपो रिप्रं निर्वहतेति नाभेरधि प्रागुदीचीरपो निःसारयति २४ प्रतिप्रस्थाता दक्षिणां वेदिं करोत्योत्तरस्मात्परिग्रहादरत्नि-मात्रमन्तरा २५ समे प्राची भवतो । यथा हवींषि संभवेयुस्तथा तिरश्ची २६ एक उत्करः २७ अपरेणोत्तराँ स्तम्बयजुर्हरति २८ प्रोक्षणीः सँस्कृत्येन्द्र-घोषास्त्वा पुरस्ताद्वसुभिः पान्त्वितिप्रभृतिभिः प्राङ्मुख उत्तरवेदिं प्रोक्षति प्रदक्षिणमुत्तरैरनुपरिक्रामन् २९ प्रतिपरिक्रम्य पितृणां भागधेयीः स्थेति शेषं दक्षिणत उत्तरवेदेर्निनयति ३० हिरण्यमन्तर्धाय पञ्चगृहीतेन नाभिँ व्याघारयति सिँहीरसि सपत्नसाही स्वाहेतिप्रभृतिभिर्दक्षिनेऽँसे सव्यायाँ श्रोणौ दक्षिणायाँ श्रोणौ सव्येऽँसे मध्ये पञ्चमम् ३१ भूतेभ्यस्त्वेत्यूर्ध्वाँ स्रुचमुद्गृह्णाति ३२ आहवनीयेऽग्निप्रणयनानि प्रत्याधत्तः ३३ नाभिं पौतदारवैः परिदधाति ॥ विश्वायुरसीति मध्यमं ध्रुवक्षितिरसीति दक्षिणमच्युतक्षिदसीत्युत्तरम् ३४ अग्नेर्भस्मास्यग्ने पुरीषमसीति संभारान्निवपति पूतदारुगुग्गुलकेरुसुगन्धितेजनँ

वृष्णेरलूनपूर्वस्यान्तराशृङ्गादूर्णास्तुकम् ३५ विभ्राड्बृहत्पिबत्विति संभारानभिमृशति ३६ चात्वालादुपयमनीः कुरुते वेदिपुरीषात्प्रतिप्रस्थाता ३७ अग्नये प्रणीयमानायानुब्रूहीत्यनुवाचयत्यग्निभ्याँ वा ३८ त्रिरनूक्तायामग्निप्रणयनान्युद्यछतः ३९ अध्वर्युराग्नीध्राय प्रदाय यत्ते पावक चकृमा कच्चिदागः पूर्वो यः सन्नपरो भवासि घृतेन त्वं तन्वँ वर्धयस्व मा मा हिँसीरधिगतं पुरस्तात् । स्वाहा ॥ इति शेषे जुहोति ४० अग्निप्रणयनान्यादाय प्राचीमनु दिशम् प्रेहिस् विद्वानिति हरतः ४१ ऊर्णावन्तमित्युच्यमाने यज्ञः प्रत्यु ष्ठात्सुमतौ मतीनाँ यत्रावहन्ति कवयः पुरूणि । दीर्घमायुर्यजमानाय विन्दाथासीदस्व महते सौभगाय ॥ इति संभारेष्वग्निं निदधात्यवोन्द्य प्रतिप्रस्थाता समया दक्षिणस्याः पूर्वार्धे ४२ मनुष्वत्त्वा निधीमहि मनुष्वत्समिधीमहि अग्ने मनुष्वदङ्गिरो देवान्देवायते यजमानाय स्वाहा ॥ इति समिधावादधतः ४३ अग्ने कुलायमसीति दक्षिणत आहवनीयस्योपयमनीर्निवपति ४४ उलपराजिभ्यामाहवनीयौ परिस्तीर्य सप्त ते अग्ने समिध इति पूर्णाहुती जुहुतः ४५ प्रतिप्रस्थाता दक्षिणस्या वेदेरुत्तरस्याः श्रोणेरधि स्फ्येन सकृत्संभिनत्त्योत्तरस्या दक्षिणस्मादँसात् ४६ पृथक्कर्माणि कुरुतः ४७ अध्वर्युः प्रैषानाह ४८ पिष्टलेपौ निनीयोत्तरौ परिग्राहौ परिगृह्णीतः ४९ सिद्धमाज्यग्रहेभ्यः ५० चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति ५१ सिद्धमाज्यानाँ सादनात् ५२ ३

उत्तरतों गार्हपत्यस्य प्रतिप्रस्थातामयवपिष्टानां दध्ना करम्भपात्राणि करोत्येकोद्धीन्यङ्गुष्ठपर्वमात्राणि यावन्तोऽमात्या यजमानस्यैकं चाधिकम् १ शमीपर्णैः पूरयित्वा शूर्पे निदधाति २ मेषं कृत्वा मेषीं करोति यावन्ति पुल्लिङ्गानि शक्येरन्स्त्रीलिङ्गानि मेष्याः प्रतिप्रस्थाता ३ प्रक्षाल्योर्णाः श्लेषयतः ४ परःशतानि परःसहस्राणि चाग्रतः शमीपर्णानि निवपतः ५ विस्राव्यामिक्षे पात्र्योरवधत्तः ६ वारुण्यै निष्काषँ शिष्ट्वा पयस्ययोः करीरसक्तूनावपतः ७ मारुत्यां मेषमवदधाति वारुण्यां मेषीम् ८ आसादयन्तौ विपरिहरत ऐन्द्राग्नषष्ठान्युत्तरस्यां मारुतीं प्रतिप्रस्थाता दक्षिणस्याँ वारुण्येककपालावुत्तरस्यामु भयत्र निर्मथ्यः ९ सिद्धमा संमार्जनात् १० संमृष्ट

उत्तरस्मिन्प्रतिप्रस्थाता गार्हपत्यान्ते पृछति पत्नि कति ते कान्ता यदि मिथ्या वद्त्यसि प्रियतमस्ते संम्स्थास्यतीति । यं निर्दिशेत्तँ वरुणो गृह्णात्विति ब्रूयात् ११ प्रघास्यान्हवामह इति पत्नी १२ करम्भपात्राण्यादायापरेण विहारं दक्षिणातिक्रम्याग्रेण दक्षिणमग्निं पुरस्तात्प्रत्यञ्चाववतिष्ठते शूर्पँ शिरसोरवधाय १३ मो षु ण इन्द्रेति जपति यजमान उत्तरतस्तिष्ठन् १४ यद्ग्रामे यदरण्य इति जुहुतः शूर्पेण करम्भपात्राणि १५ अक्रन्कर्म कर्मकृत इति व्युत्क्रामत १६ संमृष्टेदक्षिणस्मिन्सिद्धमा प्रवरात् १७ अध्वर्युः प्रवृणीते १८ सिद्धमा प्रचरणात् १९ आज्यभागाभ्यां प्रचर्योपास्ते प्रतिप्रस्थाता २० अध्वर्युरैन्द्राग्नषष्ठैः प्रचरति २१ मारुत्यै प्रतिप्रस्थाता संप्रेष्यन्प्रचरति २२ तस्याः पूर्वेणावदानेन सह मेषीमवद्यत्यध्वर्युरुत्तरेण वारुणया मेषम् १३ एककपालेन प्रचर्य मासनामानि जुहोति २४ उभयत्र स्विष्टकृत्समानीयेडाम् २५ मिथुनौ गावौ दक्षिणा २६ सिद्धमा वाजिनात् २७ उभौ वाजिभ्यां प्रचरतः २८ शेषे समानीय भक्षयन्ति २९ सिद्धं पत्नीसँयाजेभ्यः ३० अध्वर्युः पत्नीः सँयाजयत्यूहेन पत्नीँ वेदयोर्वाचयत्यूहेन यजमानोऽनुमन्त्रयते ३१ सिद्धमा समिष्टयजुर्भ्यः ३२ त्रिर्ध्रुवामाप्याय्य यज्ञ यज्ञं गछैष ते यज्ञो देवा गातुविद इति त्रीणि समिष्टयजूँषि जुहोति दक्षिणस्मिन्प्रतिप्रस्थाता ३३ आज्यशेषे समानीय स्रुक्स्रुवावाज्यस्थालीमादत्ते प्रतिप्रस्थाता तुषनिष्क्राषमाग्नीध्रः स्रुचमध्वर्युः ३४ उरुँ हि राजा वरुणश्चकारेति चात्वालात्प्रयन्तो जपन्ति ३५ शतं ते राजन्नित्यपह् परादृश्य तिष्ठन्तो ऽवभथे प्रचरन्ति ३६ स्थावरासु तृणं प्रास्याप्सु जुहोति ३७ अग्नेरनीकमिति चतुर्गृहीतस्य स्रौचमाघारमाघारयति ३८ अपबर्हिषः प्रयाजानुयाजान्यजति ३९ आज्यभागाभ्यां प्रचर्य तुषनिष्का-षस्यावदाय वरुणँ यजति शेषेणाग्नीवरुणौ स्विष्टकृत्स्थाने ४० तदन्ता संतिष्ठते ४१ विचृत्तौ वरुणस्य पाश इत्यपोऽन्ताद्विष्यन्ति ॥ प्रत्यस्तो वरुणस्य पाश इति प्रत्यस्यन्ति ॥ नमो वरुणस्य पाशायेति नमस्कुर्वन्ति ४२ धाम्नो धाम्न इति तिसृभिः परोगोष्ठं मार्जयन्ते ४३ अनपेक्षमाणाः प्रत्यायन्ति ४४ अत एव समिधावाहरन्ति ४५ एधोऽस्येधिषीमहीति समिधमादधाति समिदसि समेधिषीमहीति द्वितीयाम् ४६ अपो अद्यान्वन्वारिषमित्युपतिष्ठन्ते गार्हपत्ये तूष्णीं पत्नी ४७ बर्हिषी अनुप्रहरतः ४८ परिवत्सरीयाँ स्वस्तिमाशास इत्याह

यजमानः ४९ सिद्धेष्टिः संतिष्ठते ५० सद्यः पौरतः ४८ परिवत्सरीयाँ स्वस्तिमाशास इत्याह यजमानः ४९ सिद्धेष्टिः संतिष्ठते ५० सद्यः पौर्णमासीँ सँस्थाप्य यद्धर्मः पर्यावर्तयत्तदन्तात्पृथिव्या अधि । तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ५१ अग्निस्तिग्मेन शोचिषेतिप्रभृति समानम् ५२ ४

साकमेधाश्चतुर्षु मासेषु १ पूर्वां पौर्णमासीमुपोष्याग्नयेऽनीकवते प्रातरष्टाकपालं निर्वपति २ सिद्धेष्टिः संतिष्ठते ३ न बर्हिरनुप्रहरति ४ गृहमेधीये तूष्णीकमाज्यभागाभ्यां । पलाशशाखया सर्वान्वत्सानपाकरोति ५ मरुद्भ्यः सांतपनेभ्यो मध्यंदिने चरुः ६ तद्बर्हिर्यदनीकवतस्य ७ सिद्धेष्टिः संतिष्ठते ८ बर्हिरनुप्रहरति ९ गृहमेधीयायेध्माबर्हिः संनह्यत्यृते प्रस्तरपरिधीन् १० हुते सायमग्निहोत्रे मरुद्भ्यो गृहमेधेभ्यः सर्वासां दुग्ध ओदनँ श्रपयति ११ अपवित्रे दोहयति १२ आज्यं निर्वपति १३ इध्माबर्हिरुपसादयति १४ स्रुक्स्रुवँ संमार्ष्टि १५ पत्नीं मन्त्रेणोपस्थापयति १६ इध्माबर्हिः प्रोक्ष्याहवनीयं परिस्तीर्येध्मदारुभिः परिदधाति १७ शिरोनिष्काषं निदधाति १८ उपस्तीर्य त्रीनोदनानुद्धरति १९ उत्पूतानलंकरोति २० पश्चादाहवनीयस्योदीचो निदधात्याज्यं च २१ इध्ममुपसमाधायाज्यभागाभ्यां प्रचर्य सर्वेषाँ समवदायाभिघार्य मरुद्भ्यो गृहमेधेभ्योऽनुब्रूहीत्यनुवाचयति २२ आश्राव्य मरुतो गृहमेधान्यजेति प्रेष्यति २३ अनिरुक्तं स्विष्टकृत् २४ दक्षिणस्मिन्समवदायेडामुपहूय भक्षयन्ति २५ आज्याभ्यज्य गृहमेधीयस्य सुहिता भवन्ति २६ अपि प्रतिवेशोऽन्य ओदनः । तस्यामात्याः सुहिता भवन्ति २७ सवत्सा गावो वसन्त्यृते ऽभिवान्यायाः २८ पुरा प्रातरग्निहोत्राद्गार्हपत्ये पूर्णा दर्वे देहि म इत्येताभ्यां शिरोनिष्काषस्य पूर्णदर्वमृषभमाहूय रुवति जुहुयात् २९ यद्यृषभो न रुयाद्ब्रह्माणमामन्त्रय् जुहुयात् ३० हुते प्रातरग्निहोत्रे मरुद्भ्य क्रीडेभ्यः साकँ रश्मिभिः सप्तकपाल । उद्यत्सु रश्मिषु प्रचरति ३१ आग्नेयोष्टाकपाल इतिप्रभृतीडेभ्यः न्यष्टौ वैश्वकर्मणान्तानामुत्तरेवेद्यामतिप्रणयेद्यथा वरुणप्रघासेसु ३२ अग्ने वेहोरमिति चतुर्गृहीतस्य् स्रौचमाघारमाघारयति ३३ प्राक्स्विष्टकृतो मासनामानि जुहोति ३४ ऋषभो दक्षिणा ३५ ५

प्राग्दक्षिणाचाराः पितृयज्ञेन चरन्ति १ उपमूलं बर्हिर्दान्त्यन्यत्प्रस्तरात् २ भूय इध्माबर्हिः संनह्यापरौ परिस्तीर्यैकैकं पात्राणि प्रयुनक्त्यन्यत्प्राशित्रहरणात् ३ दक्षिणतःपुरस्ताद्दक्षिणाग्नेः प्रणीताः सादयति ४ दक्षिणाग्नौ निष्टपति ५ दक्षिणतोऽग्निष्ठान्निर्वपति । सोमाय पितृमते षट्कपालं पितृभ्यो बर्हिषद्भ्यो यवान्धानाभ्यः पितृभ्योऽग्निष्वात्तेभ्यो यवान्मन्थाय ६ सिद्धमाधिश्रयणात् ७ भृज्ज्यमानासु पर्यग्नि करोति ८ धानानामितरार्धं मन्थाय पिनष्टि ९ सिद्धमाभिवासनात् १० पिष्टलेपं निधायाग्रेण दक्षिणमग्निं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पुरुषमात्रीं चतुरस्रां दिक्कुष्ठाँ वेदिं करोति ११ अोत्तरस्मात्परिग्राहात्परिश्रयति १२ उत्तरां प्रति श्रोणिं द्वारं करोति १३ दक्षिणाग्नेरेकोल्मुकमभ्युद्द्य मध्ये वेदेर्निधाय तस्मिन्नुपसमाधाय परिसमुह्य पर्युद्द्य पिष्टलेपं निनीयोत्तरं परियाहं परिगृह्णाति १४ सिद्धमाज्यग्रहेन्यः १५ चतुर्गृहीतान्याज्यानि गार्हपत्यान्ते गृह्णाति १६ सिद्धमास्तरणात् १७ उद्धूय बर्हिः स्तृणाति १८ प्रसव्यमुद्धावं त्रिः परिस्तीर्योद्धवात्प्रस्तरं तूष्णीं गृह्णाति १९ अभिवान्यायाः पयसोऽर्धपात्रे प्रसव्यमिक्षुशलाकया मन्थमायौति शलाकास्थं । न शलाकामुद्धरति २० अलंकृत्यैकैकमभ्युदानयत्युदकुम्भमाज्यानि हवींषि तथापराणि यज्ञाङ्गानि २१ सिद्धमा समिन्धनात् २२ एका सामिधेनी । तस्यास्तृतीये प्रणवे सकृदिध्ममादधाति २३ सिद्धमा प्रवरात् २४ न प्रवृणीते २५ अपबर्हिषः प्रयाजानुयाजान्यजति २६ आज्यभागाभ्यां प्रचर्य विस्त्रँस्य यज्ञोपवीतानि प्राचीनाववीतानि कुर्वन्ति २७ विपरिक्रामन्त्यृत्विजो यथास्थानँ । होताग्रेणातिप्रणीतं परिक्रम्योपविशत्युत्तरतो ब्रह्माग्रेण होतारमध्वर्युरपरेण २८ आग्नीध्रो विपरिहरति हवींषि २९ यथास्थानं जुहूर्मध्य उपभृद्ध्रुवा दक्षिणा । यथास्थान पुरोडाशो मध्ये धाना मन्थो दक्षिणतः ३० पञ्चकृत्वोऽवद्यति । षट्कृत्वो जामदग्न्यस्य ३१ अपरेण स्रुग्दण्डानुदङ्ङतिक्रम्य सोमाय पितृमते ऽनु स्वधेत्यनुवाचयत्यौँ स्वधेत्याश्रावयत्यस्तु स्वधेति प्रत्याश्रावयति ३२ प्रत्याश्रुते सोमं पितृमन्तँ स्वधेति प्रेष्यति ३३ स्वधा नम इत्युक्ते दक्षिणा तिष्ठन्मध्ये जुहोति ३४ एवं धानाभिः प्रचरत्येवं मन्येन ३५ अग्नये कव्यवाहनाय स्विष्टकृते समवद्यति द्विस्त्रिर्यदि पञ्चावदानस्य ३६ असँसक्तां दक्षिणार्धपूर्वार्धे जुहोति ३७ प्रतिपरिक्रम्य

विस्त्रँस्य प्राचीनाववीतानि यज्ञोपवीतानि कुर्वन्ति ३८ प्रतिपरिक्रामन्त्यृत्विजः । प्रतिपरिहरति हवींषि ३९ मन्थे हविःशेषमवदायेडामुपहूय न भक्षयन्ते ४० समिधा प्रतिपद्य द्वावनुयाजौ यजति देवौ यजेति प्रथमँ यजेत्युत्तमम् ४१ सर्वाः स्रुचः संप्रगृह्णाति ४२ दाक्षिणाग्निकौ होमौ हुत्वा कपालानि विमुञ्चति ४३ उदकाञ्जलिप्रभृति सिद्धँ यथा पिण्डपितृयज्ञेऽन्यद्धोमात् ४४ उदकुम्भस्योदकार्यान्कुर्वन्ति ४५ संनीयेडाँ स्रक्तिषु पिण्डान्निदधात्यूर्ध्वं प्रपितामहात्त्रीनन्वाचक्षाणोऽमुतोऽर्वाचः ४६ उत्तरस्याँ वेदिश्रोणौ लेपं निमार्ष्टि ४७ अत्र पितरो मादयध्वमिति परिश्रितान्निष्क्रामन्ति ४८ सुसंदृशं त्वा वयमित्याहवनीयमुपतिष्ठन्ते । मन्त्रान्ते प्रणवेन ताम्यन्ते ॥ यदन्तरिक्षमिति गार्हपत्यम् ४९ अमीमदन्त पितर इति परिश्रितं प्रविशन्ति ५० ऊर्णास्तुकप्रभृति सिद्धँ यथा पिण्डपितृयज्ञे ५१ परेतन पितरः सोम्यास इत्युदकुम्भेनाग्निं प्रसव्यं त्रिः परिषिञ्चन्पर्येति ५२ निधाय निधाय त्रिरपरिषिञ्चन्प्रतिपर्येति ५३ पिण्डानग्नौ प्रहृत्य वेदिं प्रयोषति ५४ अक्षन्नमीमदन्तेतिप्रभृति समानम् ५५ ६

उत्तरतो गार्हपत्यस्यैककपालाञ्श्रपयति यावन्ति करम्भपात्राणि १ तूष्णीमभिघार्योदीच उद्वासयति २ दक्षिणाग्नेरेकोल्मुकं धूपायत्पराचीनँ हरन्त्यनपेक्षमाणाः प्रागुदीच्यां दिशि मूतेनैककपालान् ३ आखुं ते रुद्र पशुं करोमीत्याखुकिरा एकमुपवपति ४ उल्मुकं चतुष्पथे निधाय तस्मिन्नुपसमाधाय परिसमुह्य पर्युक्ष्य परिस्तीर्य मध्यमपर्णे सर्वेषाँ समवदायाभिघार्यैष ते रुद्र भाग इति जुहोति ५ पृथगादायावाम्ब रुद्रमदिमहीति तिसृभिस्त्रिः परियन्ति पतिकामा च ६ उर्वारुकमिव बन्धनाम्मृत्योर्मुक्षीय मामृतादिति जपन्ति ॥ मृत्योर्मुक्षीय मा पत्युरिति पतिकामा ७ तानूर्ध्वानुदस्योदस्य भगोऽसि भगस्य लप्सीयेति प्रतिलभन्ते ८ तान्यजमानाय समावपन्ति पतिकामायै च ९ तान्मूते कृत्वा रुद्रैष ते भाग इति वृक्ष आसचति १० धाम्नो धाम्न इति तद्व्याख्यातम् ११ आदित्यं घृते चरुं निर्वपेत् १२ पुनरेत्य गृहेष्विदावत्सरीयाँ स्वस्तिमाशास इत्याह यजमानः १३ सिद्धेष्टिः संतिष्ठते १४ सद्यः पौर्णमासीँ सँस्थाप्य यो अस्याः पृथिव्या अधि त्वचि

निवर्तयत्योषधीः तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे १५ अग्निस्तिग्मेन शोचिषेतिप्रभृति समानम् १६ ७

शुनासीर्यं चतुर्षु मासेषु सद्यश्चतुरहे मासि वा १ वैश्वदेवेन व्याख्यातम् २ आग्नेयोऽष्टाकपाल इतिप्रभृतीन्यष्टौ सौर्य एककपाल इत्यन्तानि ३ प्राक्स्विष्टकृतो मासनामानि जुहोति ४ सीरं द्वादशयोगं दक्षिणोष्टारो वानड्वान् ५ अनुवत्सरीयोद्वत्सरीये स्वस्तिमाशास इत्याह यजमानः ६ सिद्धेष्टिः संतिष्ठते ७ सद्यः पौर्णमासीँ सँस्थाप्य यने मासा अर्धमासा ऋतवः परिवत्सराः येनैते प्रजापतेरीजानस्य निवर्तयन् तेनाहमस्य ब्रह्मणा निवर्तयामि जीवसे ८ अग्निस्तिरमेन शोचिषेतिप्रभृति समानमन्यद्व्रतेभ्यः ९ निखिलं केशश्मश्रु यजमानो वापयते १० पर्वरायनन्तरा सोमेन यजेत पशुना वा ११ अथ पञ्चसाँवत्सरिकाणि १२ तन्त्रँ वैश्वानरपार्जन्याः १३ प्रसिद्धः प्रथमः सँवत्सरः । तस्यान्ते या पूर्वा पौर्णमासी ताँ शुनासीर्यायोपवसति योत्तरा ताँ वैश्वदेवाय १४ प्रसिद्धो द्वितीयः सँवत्सरः १५ तथा तृतीयो । मासमुत्सृज्य वैश्वदेवेन यजेत १६ प्रसिद्धश्चतुर्थः सँवत्सरः १७ तथा पञ्चमः । तस्य साकमेधेभ्योऽधि शुनासीर्यं पञ्चसु मासेषु मासेषु १८ ८

इति मानवसूत्रे प्राक्सोमे सप्तमोऽध्यायः

ऐन्द्राग्नेन पशुना यक्ष्यमाणो वाग्घोता दीक्षा पत्न्यापोऽध्वर्युर्वातोऽभिगरः प्राणो हविर्मनो ब्रह्मा तपसि जुहोमि स्वाहेति षड्ढोतारं मनसानुद्रुत्य जुहोति १ आग्नावैष्णवमेकादशकपालं निर्वपति । पूर्णाहुतिँ वा २ उरु विष्णो विक्रमस्वेत्याहवनीये हुत्वा यूपमछैति पालाशं खादिरँ रौहितकँ वा । बैल्वं ब्रह्मवर्चसकामस्य ३ अयूप्यानतिक्रम्यात्यन्यानगां नान्यानुपागामिति यूपं जोषयते बहुशाखं बहुपर्णमशुष्काग्रमसुषिरमनधिशाख्यमृजुमूर्ध्वशल्क-मुपरिष्टादुपावनतं प्रागुदञ्चं प्रहाणं प्राञ्चं प्रत्यञ्चँ वा ४ विष्णवे त्वेत्याज्येन पर्यनक्त्यल्कसमरे शल्कसमरे वा ५ ओषधे त्रायस्वैनमिति दक्षिणस्मि-न्यूपान्ते दर्भमन्तर्दधाति ६ स्वधिते मैनँ हिँसीरिति परशुना प्रहरति ७ प्रथमोत्पतितँ शल्कमवयछति ८ तक्षाछिनत्त्यनक्षसङ्गँ स्थाणुमुच्छिँषति ९

यं त्वामयमिति प्राञ्चं प्रहापयति १० दिवमग्रेण मा हिँसीरिति पतन्तमनुमन्त्रयते ११ वनस्पते शतवल्शो विरोहेत्याव्रश्चने जुहोति १२ सहस्रवल्शा वि वयँ रुहेमेत्यात्मानं प्रत्यभिमृशति १३ अष्टाश्रिं गोपुछं करोत्यस्थूलमनणुमतष्टमूलम् १४ पञ्चारत्निप्रभृत्याम्नातं प्रमाणम् १५ यूपस्य स्वरुं कुर्याच्चषालं च पृथुमात्रमष्टाश्रि सँसक्तमध्यम् १६ अश्रिभिरश्रीः संपाद्याङ्गुलिमात्रमूर्ध्वँ चषालाद्यूषस्य स्वरुं कुर्यात् १७ व्रतोपेतस्येध्माबर्हिः संनह्यत्याश्ववालः प्रस्तरो विधृती च कार्ष्मर्यमयाः परिधयो । विँशतिदार्विध्मम् १८ वेदिं करोति यथोत्तराँ वारुणप्रघासिकीं १९ निःसारणान्तां कृत्वा वसन्ति २० श्वोभूते पाणी प्रक्षाल्य विहारं परिस्तीर्य पाशुकानि पात्राणि प्रयुनत्त्यभ्रिं प्रथमोत्पतितं प्लक्षशाखाँ वपाश्रपण्यौ रशने शूलं मैत्रावरुणदण्डमवदानश्रपणीँ स्वरुँ स्वधितिं च २१ उत्तरवेदेः प्रोक्षणप्रभृति सिद्धमा पूर्णाहुतेः २२ पृषदाज्यवन्ति पात्राणि प्रयुनक्ति २३ सँसाद्योलपराजिँ स्तृणाति २४ यजुरुत्पूताभिः पात्राणि प्रोक्ष्य दध्याज्यं निरुप्य पर्यग्निं करोति २५ उत्तरं परिग्राहं परिगृह्णाति २६ सिद्धमाज्यग्रहेभ्यः २७ चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति २८ सिद्धमाज्यानाँ सादनात् २९ १

उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते १ अभ्रिरसि नारिरसीत्यभिमन्त्रयते २ इदमहँ रक्षसो ग्रीवा अपिकृन्तामीत्यग्रेणाहवनीयँ यूपावटं परिलिखतीदमहँ यो मे समान इति द्वितीयँ योऽसमान इति तृतीयँ समानमन्यत्तूष्णीं चतुर्थम् ३ तस्यार्धमन्तर्वेद्यर्धं बहिर्बेद्युपरसंमितं खनति ४ यूपं प्रक्षाल्य तीर्थेनान्ववहृत्याग्रेण यूपावटँ सँस्तीर्णे प्राञ्चं निदधाति । मूले प्रथमोत्पतितं मध्ये स्वरुँ रशनानग्रे चषालम् ५ अप्सु यवानोप्य यूपं प्रोक्षति ॥ पृथिव्यै त्वेति मूलमन्तरिक्षाय त्वेति मध्यं दिवे त्वेत्यग्रम् ६ शुन्धन्तां लोकाः पितृषदना इति यूपावटमवसिञ्चति ७ यवोऽसीति यवानावपति ८ पितृषदनं त्वा लोकमवस्तृणामीति दर्भैरवस्तृणाति ९ स्वावेशोऽसीति प्रथमोत्पतितँ शल्कमवदधाति १० घृतेन द्यावापृथिवी आपृणेत्यभिजुहोति ११ आज्यस्थालीँ स्रुवं चादाय यूपायाज्यमानायानुब्रूहीत्यनुवाचयति १२ देवस्त्वा सविता मध्वानक्त्विति यजमानः स्वक्तमनक्तयग्रादध्या मूलादि-

न्द्रस्य चषालमसीति चषालम् १३ सुपिप्पला ओषधीस्कृधीति प्रतिमुञ्चति १४ अक्तं नावसृजेदा परिव्ययाणात् १५ यूपायोच्छ्रियमाणायानुब्रूही-त्यनुवाचयति १६ दिवमग्रेणोत्तभानेत्युच्छ्रयति १७ ता ते धामानीत्यवदधाति १८ विष्णोः कर्माणि पश्यतेति पश्चादुपस्थँ समँ स्थापयत्यग्निमभिमुखा-मग्निष्ठाम् १९ ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामीति पाँसुभिः पर्यूहति २० ब्रह्म दृँह क्षत्रं दृँहेति यजमानो मैत्रावरुणदण्डेन प्रदक्षिणं संमृशति २१ अपोऽनुपरिषिञ्चति २२ दर्भानाँ रशने द्विगुणा द्विव्यायामा त्रिगुणा त्रिव्यायामा २३ तद्विष्णोः परमं पदमिति त्रिवृता स्वरुणा च यूपमूर्ध्वं त्रिः समुन्मार्ष्टि २४ यूपाय परिवीयमाणायानुब्रूहीत्यनुवाचयति २५ परिवीरसीति नाभिदघ्ने त्रिवृता त्रिः परिव्ययत्युत्तरमुत्तरं प्रदक्षिणम् २६ प्रादेशमात्रे समस्याणीयाँसँ स्थवीयस्युपकर्षति २७ ऊर्ध्वामुदुह्य रशनां दिवः सानूपेषेत्युत्तरतोऽग्निष्ठाया उत्तमे गुणे स्वरुमुपकर्षति २८ स्नातमानयेति प्रेष्यति २९ अजमप्रतिषिद्धँ रोहितं द्विरूपं कालालं पीवानँ समाङ्गं पन्नदं तीर्थेन प्रपाद्य पुरस्तात्प्रत्य-ङ्मुखमवस्थापयति ३० २

प्रजापतेर्जायमानाः प्रजा जाताश्च या इमाः ता अस्मै प्रतिवेदय चिकि-त्वाननुमन्यताम् ॥ इमं पशुं पशुपते तेऽद्य बध्नाम्यग्ने सुकृतस्य मध्ये अनुमन्यस्व सुयजा यजे हि जुष्टं देवेभ्य इतमस्तु हव्यम् ॥ इत्यौपाकरणौ जुहोति १ इषे त्वेति दर्भावादत्ते ॥ उपावीरसीति हरिणीं प्लक्षशाखां पलाशवतीम् २ उपो देवान्दैवीर्विश इति दर्भाभ्याँ शाखया चोपस्पृश्योपाकृत्य पञ्च जुहोति प्रजानन्तः प्रतिगृह्णन्तु पूर्वे प्राणमङ्गेभ्योऽधि निश्चरन्तम् हुतो याहि पथिभिर्देवयानैरोषधीषु प्रतितिष्ठा शरीरैः ॥ ये बध्यमानम् ॥ य आरण्याः पशवो विश्वरूपा विरूपाः सन्तो बहुधैकरूपाः वायुष्टं अग्रे प्रमुमोक्तु देवः प्रजापतिः प्रजया सँरराणः ॥ येषामीशे पशुपतिः पशूनां चतुष्पाद उत ये द्विपादः निष्क्रीतास्ते यज्ञियं भागँ यन्तु रायस्पोषा यजमानँ सचन्ताम् ॥ प्रमुञ्चमाना भुवनस्य रेतो गातुं धत्त यजमानाय देवाः उपाकृतँ शशमानँ सधस्थाज्जीवं देवानामप्येतु पाथः ॥ इति हुत्वा निर्मन्थेन प्रचरति । स व्याख्यातः ३ देवस्य त्वा सवितुः प्रसव इति रशनामादत्ते ४ दक्षिणं बाहुं

परिहृत्योर्ध्वमुन्मृज्यर्तस्य त्वा देवहविः पाशेनेति यथादेवतमन्त्रणया शिर-
स्युपदधाति ५ धर्षा मानुष इत्युत्तरतो यूपे रशनयावाङ्गिनयुनक्ति ६
अद्भ्यस्त्वौषधीभ्य इति प्रोक्षति ७ अनु त्वा माता मन्यतामित्यनुमानयति ८
अपां पेरुरसीत्यप उपपाययति ९ स्वात्तँ सद्धविरित्युरः प्रोक्षन्सर्वतः प्रोक्षति
१० पूर्णस्रुवँ सादयित्वा सिद्धमाघारात् ११ श्रौचमाघारमाघार्य जुह्वा पशुम-
नक्ति सं ते वायुरिति प्राणदेशे सँ यजत्ररङ्गानीति ककुब्देशे सँ यज्ञपतिराशिषेति
भसदि १२ सिद्धमा प्रवरात् १३ प्रवृते मैत्रावरुणायौदुम्बरमास्यदघ्नं दण्डं
मित्रावरुणयोस्त्वा बाहुभ्यां प्रयछामीति प्रयछति १४ सिद्धमा प्रयाजेभ्यः १५
आश्रावमेकादश प्रयाजान्यजति १६ समिद्धः प्रेष्येति प्रथम प्रेष्य प्रेष्येत्युत्तरान्
१७ चतुर्थेचतुर्थे समानीयैकादशाय शिष्ट्वात्याक्रम्य संगृह्य स्वरुँ स्वधितिं
जुह्वामवत्वा घृतेनाक्तौ पशूँस्त्रायेथामित्यन्तराशृङ्गे स्वरुणा पशुम-
नवत्यस्पृशन्स्वधितिना १८ अक्तया शृतस्यावद्यत्यनक्तया विशसति १९
उत्तरतश्चात्वालस्य शामित्राय लक्षणं करोति २० उद्धत्यावोक्ष्य पर्यग्नये
क्रियमाणायानुब्रूहीत्यनुवाचयति २१ आहवनीयादुत्मुकेन पशुमाहवनीयँ
यूपमाज्यानि चात्वालँ शामित्रलक्षणे निधायनिधाय त्रिः पर्यग्निं करोति २२
उल्मुकमाग्नीध्राय प्रदाय ये बध्यमानं य आरण्याः प्रमुञ्चमाना इति तिस्र
आहुतीर्जुहोति २३ यूपात्प्रमुच्य पशुमन्वारभ्याश्रावयति २४ प्रत्याश्रुत
उपप्रेष्य होतर्हव्या देवेभ्य इति प्रेष्यति २५ कार्ष्मर्यस्य वपाश्रपण्यावेकशृङ्गा
द्विशृङ्गा च । ताभ्याँ यजमानो रेवति प्रेधेति पशुमन्वारभते २६ उरो
अन्तरिक्षेत्युदञ्चं प्रक्रमयति २७ उल्मुकमाग्नीध्रोऽग्रतो हृत्वा शामित्रलक्षणे
निदधाति २८ दक्षिणतःपश्चाच्छामित्रस्य समस्य तन्वा भवेत्यौपाकरणं दर्भं
न्यस्यति २९ तस्मिञ्शमिता प्रत्यक्शिरसमुदक्पादमन्तरेवोष्माणँ संज्ञपयति
३० नाना प्राणो यजमानस्य पशुना यज्ञो देबेभिः सह देवयानः सम्यगायुर्यज्ञँ
यज्ञपतौ धाः ॥ इत्युत्रत्वावर्तते ३१ स्वर्विदसीति संज्ञप्यमाने यजमानो जपति
३२ इह प्रजा विश्वरूपा रमन्तामित्यवेक्षमाणाः पृषदाज्यमाशासते यावत्प-
शुसंज्ञपनात् ३३ यत्पशुर्मायुमकृतोरो वा पद्भिराहते अग्निर्नस्तस्मादेनसो
विश्वान्मुञ्चत्वँहसः ॥ इति संज्ञप्तहोमं जुहोति ३४ शमितार उपेतनेति जपति
३५ अदितिः पाशानित्युन्मुञ्चति रशनां पशोः ३६ यो नो द्वेष्टयधरः स

पद्यतामित्यभिचरतः स्तम्बं दारु वापिदध्यात्तूष्णीमनभिचरतः ३७ एकशृङ्ग्या चात्वाले रशनां प्रविध्यति ३८ ३

नमस्त आतानेति पत्नीमादित्यमुपस्थापयति १ अनर्वा प्रेहीत्यभ्युदानयति २ देवीराप इति चात्वाले पत्न्यपोऽभिमन्त्रयते ३ वाचमस्य मा हिँसीः प्राणमस्य मा हिँसीरिति यथालिङ्गमङ्गानि प्रक्षालयति पल्यासिञ्चति ॥ यत्ते क्रूरमिति कण्ठम् ४ गात्राण्यस्य मा हिँसीश्चरित्रानस्य मा हिँसीरिति यथालिङ्गमङ्गानि संमृशति ५ शमद्भ्य इत्यपाँ स्तोकान्भूमिगताननुमन्त्रयते ६ ओषधे त्रायस्वेनमित्यौपाकरणं दर्भमग्रेण नाभेः पार्श्वतो निदधाति ७ स्वधिते मैनँ हिँसीरिति स्वधि तिना तिर्यगाछिनत्ति ८ त्वचं चाग्रमुपनियम्य मूलमाशसनेऽक्त्वा पृथिव्यै त्वा रक्षसां भागोऽसीति देक्षिणापरमवान्तरदेशं न्यस्यति ९ इदमहँ रक्षोऽवबाध इदमहँ रक्षोऽधमं तमो नयामीति पाष्ण्या न्यधितिष्ठते १० इषे त्वेति वपामुत्खिदति ११ ऊर्जे त्वेत्येकशृङ्ग्या तनिष्ठ उपतृणत्ति १२ देवेभ्यः शुन्धस्वेत्यद्भिरवोक्षते १३ देवेभ्यः शुम्भस्वेति स्वधितिना वपां प्रत्यूहति १४ घृतेन द्यावापृथिवी प्रोर्णुवातामिति द्विशृङ्गां क्प्रछादयति १५ अमुष्मै त्वेति यथादेवतँ वपामुत्कृन्तति १६ मुष्टिना शमिता वपोद्धरणँ संगृह्यासीता वपाया होमात् १७ नमः सूर्यस्य संदृश इत्यादित्यमुपतिष्ठते १८ उर्वन्तरिक्षँ वीहीति समया पशुँ वपाँ हरति १९ प्रत्युष्टँ रक्ष इति शामित्रे निष्टपति २० उल्मुकमाग्नीध्रोऽग्रतो हृत्वाहवनीये प्रत्यवसृजति २१ अन्तराग्निँ यूपं च हरति २२ दक्षिणतः प्रतिप्रस्थातासीनो वपाँ श्रपयति २३ वायोः स्तोकानामिति दर्भाग्रमुपास्यति २४ त्वामु ते दधिरे देवयन्तो हव्यवाहँ शृतंकर्तारमुत यज्ञियं च अग्निः सुदक्षः सुतनुर्ह भूत्वा देवेभ्यो हव्या वह जातवेदः ॥ इति वपामभिजुहोति २५ स्तोकेभ्योऽनुब्रूहीत्यनुवाचयति २६ श्येनीँ शृताँ सुपिप्पला ओषधीस्कृधीति दक्षिणतो बर्हिषि सादयति २७ प्रयुता द्वेषाँसीति वपाश्रपण्यौ प्रवृहति २८ स्वाहाकृतिभ्यः प्रेष्येत्युत्तमेन प्रयाजेन प्रचर्यात्याक्रम्याभिघारयति ध्रुवां पृषदाज्यँ वपां नोपभृतम् २९ कृताकृतावाज्यभागौ ३० आग्नेयेन प्रचर्यापरेण स्रुग्दण्डान्दक्षिणातिक्रम्य सौम्येन प्रचरति ३१ अत एव तिष्ठन्नुपस्तीर्यावद्यति हिरण्यशकलँ वपाँ हिरण्यशकलं ततोऽभिघारयति

३२ इन्द्राग्निभ्यां छागस्य वपाया मेदसोऽनुब्रूहीत्यनुवाचयति ३३ आश्रा- व्येन्द्राग्निभ्यां छागस्य वपाया मेदसः प्रेष्येति प्रचरति ३४ स्वाहा देवेभ्य इति पुरस्ताद्वपाया जुहुयाद्विश्वेभ्यो देवेभ्यः स्वाहेत्युपरिष्टात् ३५ जातवेदो वपया गछ देवाँस्त्वँ हि होता प्रथमो बभूव घृतस्याग्ने तन्वा संभव सत्याः सन्तु यजमानस्य कामाः । स्वाहा इति प्रतिनिगद्य वषट्कृते वपां जुहोति ३६ अत्याक्रम्य यथादेवतमाशसने पशुमभिघारयति ३७ स्वाहोर्ध्वनभस- मिति वपाश्रपण्यौ प्रहरति प्राचीमेकशृङ्गां प्रतीचीं द्विशृङ्गाम् ३८ संपा- तेनाभिजुहोति ३९ इदमापः प्रवहत यत्किंचिद्दुरितं मयि यद्वाहमभिदुद्रोह यद्वा शेप उतानृतम् ॥ इति चात्वाले मार्जयित्वा ब्राह्मणाँस्तर्पयेति त्रेष्यति ४० ऊवध्यं गर्ते प्रविध्यति ४१ गुदमपर्यावर्तयन्नवदानानि श्रपयति । सव्यदक्षिणानि प्रज्ञातानि । शूले हृदयम् ४२ ४

स्रुचँ शूर्पं चादायाध्वर्युः प्रत्युपक्रामति १ व्रीहीणां पशुपुरोडाशमनुनिर्वपति समानदेवतं पशुनैकादशकपालं द्वादशकपालँ वा २ न पात्राणि प्रोक्षति । नाज्यं निर्वपति ३ पश्चादुत्तरवेदेर्व्युह्यौषधीः पिष्टलेपं निनयति ४ अलंकृत्य जुहूपभृतोरवदायेन्दाग्निभ्यां पुरोडाशस्यानुब्रूहीत्यनुवाचयति ५ आश्राव्ये- न्द्राग्निभ्यां पुरोडाशस्य प्रेष्येति प्रचरति ६ औपभृतं जुह्वामानीयाग्नये पुरोडाशस्यानुब्रूह्यग्नये पुरोडाशस्य प्रेष्येति प्रचरति ७ आग्नीध्रभागमपा- यात्येडायै पुरोडाशं प्रत्यभिघारयति ८ दाक्षिणाग्निकौ होमौ हुत्वा कपालानि विमुञ्चति ९ शृतेष्ववदानेषु प्रतिप्रस्थाता पृषदाज्यस्य स्रुवेणोपहत्य वेदोप- यामः शृतँ हविः शमिता इति पृछति ॥ शृतमिति प्रत्याह । समयार्धे द्वितीयं प्राप्य तृतीयम् १० स्वाहोष्मणोऽव्यथिष इत्यूस्माणमनुमन्त्रयते ११ हृदय- मवदानेषु कृत्वा शूलं निदधात्थस्पृशन्प्रतिषिद्धानि १२ उत्तरतः परिक्रम्य जुष्टं देवेभ्य इति यथादेवतं पशुमभिघारयति १३ विवाजिनानि कृत्वान्तराग्निँ यूपं च हरति १४ दक्षिणतः प्रतिप्रस्थाता पञ्चहोत्रा बर्हिष्युपसादयति १५ उपस्तृणाति जुह्वामुपभृतीडापात्र्याँ वसाहोमहवन्याम् १६ जुह्वाँ हिरण्य- शकलमवधाय मनोतायै हविषोऽवदीयमानस्यानुब्रूहीत्यनुवाचयति १७ उत्सादतोऽङ्गानां प्लक्षशाखाया अधि स्वधितिना द्विर्द्विरवद्यति हृदया-

जिह्वायाः क्रोडात्सव्यात्कपिललाटात्पार्श्वयोर्यक्नो वृक्कयोर्दक्षिणस्याः श्रोणेः पूर्वार्धाद्गुदं त्रेधा विभज्य तस्याणीयसः १८ उपभृति व्यङ्गाणां स्विष्टकृते समवद्यति दक्षिणस्य कपिललाटस्य पूर्वार्धाद्गुदस्य मध्यात्सव्यायाः श्रोणेः पश्चार्धात् १९ अनस्थीनां दैवतानामिडामवदाय यूषेणोपसिञ्चति २० अपामोषधीनाँ रस इति स्वधितिना यूषामायौति २१ तस्मिन्मेदः पर्यस्यति २२ त्रेधावद्यति जुह्वामुपभृतीडापात्र्याम् २३ वसाहोमहवन्याँ रेडसीति वसाहोमं गृहीत्वा पार्श्वेनापिदधाति २४ जुह्वाँ हिरण्यशकलमवधाया-भिघारयति द्विरुपभृतम् २५ इन्द्राग्निभ्यां छागस्य हविषोऽनुब्रूहीत्यनुवाचयति २६ आश्रान्येन्द्राग्निभ्यां छागस्य हविषः प्रेष्येत प्रचरति २७ अर्धर्चे याज्यायाः प्रतिप्रस्थाता घृतं घृतपावानः पिबतेति वसाहोमं जुहोति २८ दैवतैः प्रचर्य वसाहोमशेषेण दिशः प्रतियजति यथा वाजिनेन । वनस्पतिं पृषदाज्यस्य २९ सकृदवदाय वनस्पतयेऽनुब्रूहीत्यनुवाचयति ३० आश्राव्य वनस्पतये प्रेष्येति प्रचरति ३१ औपभृतं जुह्वामानीयाग्नये स्विष्टकृतेऽनुब्रूहीत्यनुवाचयति ३२ आश्राव्याग्नये स्विष्टकृते प्रेष्येति प्रचरति ३३ ऐन्द्रः प्राण इत्यव-दानशेषमिडां च संमृशति ३४ उपहूयमानायामध्यूध्नीँ होत्रे हरन्ति वनिष्ठुमग्नीधे ३५ भक्षयित्वा मार्जयन्ते ३६ वरो दक्षिणा ३७ ५

आनुयाजिकीँ समिधमादायाग्नीदौपयजानङ्गारानाहरोपयष्टरुपसीद ब्रह्मन्प्र-स्थास्यामः समिधमाधायाग्नीत्परिधीँश्चाग्निं च सकृत्सकृत्संमृड्ढीति प्रेष्यति १ शामित्रादङ्गारानाग्नीध्रोऽग्रतो होतुरन्तर्वेदि निवपति । यथा प्रेषितं च संमार्ष्टि २ सिद्धमानुयाजेभ्यः ३ पृषदाज्यं जुह्वामानीयाश्रावमेकादशानुयाजान्यजति ४ देवेभ्यः प्रेष्येति प्रथमं प्रेष्य प्रेष्येत्युत्तरान् ५ असंभिन्दन्गुदस्य प्रतिप्रस्थाता स्थविमतोऽवदाय समुद्रं गछ स्वाहेतिप्रभृतिभिर्वषट्कारे वषट्कारे जुहोति ६ मनो हार्दिँ यछेति हृदयदेशमारभ्य जपति ७ ओषधीभ्यस्त्वेति दर्भेषु लेपं निमार्ष्टि ८ अत्याक्रम्य संगृह्य स्वरुं जुह्वामनक्तयधस्तात्त्रिरुपरिष्टाच्च ९ जुह्वाँ स्वरुमवधाय दिवं ते धूमो गछत्विति जुहोति १० ऊर्ध्वँ स्वरुहो-मात्प्रागनुदेशाद्यूपो नोपस्पृश्यः ११ सिद्धमा सूक्तवाकात् १२ सूक्ता प्रेष्येति संप्रैषः १३ सिद्धं पत्नीसँयाजेभ्यः १४ जाघन्या पत्नीः सँयाजयति १५

उत्तानाया देवानां पत्नीभ्योऽवद्यत्यग्नये गृहपतये नीच्या उत्तानाया इडाम् १६ सिद्धमा समिष्टयजुर्भ्यः १७ त्रीणि समिष्टयजूँषि जुहोति १८ शूलेनावभृथँ यन्ति प्राञ्चो दक्षिणा वा १९ शुगसि तमभिशोच यो अस्मान्द्वेष्टि यं च वयं द्विष्म इत्यार्द्रेणानूदकेन खनति २० धाम्नो धाम्न इति तद्व्याख्यातम् २१ आशासानः सौमनसं प्रजां पुष्टिमथो भगम् स्वगाकारकृतो मह्यँ यजमानाय तिष्ठतु ॥ एष ते वायो नमः स्वरुभ्यो बृहद्भ्यो मारुतेभ्यः सन्नान्मा-वगामपश्चाद्दघ्वान्नं भूयासमित्यनुदिशति यूपँ यजमानः २२ वेदिं पर्योषति २३ षट्सुषट्सु मासेषु पशुना यजेत सँवत्सरेसँवत्सरे वा २४ नैनमनीजानँ सँवत्सरोऽतीयात् । यद्यतीयान्न माँसमश्नीयादा पशुबन्धात् २५ नाति-प्रणीतेषु प्रणीता स्यादन्यत्र वचनात् २६ विष्णुक्रमप्रभृति समानँ याजमानँ याजमानम् २७ ६

इति मानवसूत्रे प्राक्सोमेऽष्टमोऽध्यायः

इति मानवसूत्रे प्रथमः पञ्चभागः प्राक्सोमाख्यः समाप्तः

अग्निष्टोमेन वसन्ते यजेत १ आम्नातानि देवयजनानि २ प्राचीनप्रवणं नित्यार्थम् ३ ऋत्विजो वृणीते महतो यून आर्षेयानादित्योऽध्वर्युः स मे ऽध्वर्युरध्वर्यो त्वं मे ऽध्वर्युरसीत्यध्वर्युं ॥ चन्द्रमा ब्रह्मा स मे ब्रह्मा ब्रह्मँस्त्वं ने ब्रह्मासीति ब्रह्माणमग्निर्होता स मे होता होतस्त्वं मे होतासीति होतारं ॥ पर्जन्य उद्गाता स म उद्गातोद्गातस्त्वं म उद्गातासीत्युद्गातारं ॥ दिशो होत्राशँसिन्यस्ता मे होत्राशँसिन्यो होत्राशँसिन्यो यूयं मे होत्राशँसिन्यः स्थेति द्वादश होतृकान् ४ महो मेऽवोच इति वृता जपन्ति ५ एदमगन्म देवयजनं पृथिव्या यत्र देवासो अजुषन्त विश्वे ऋक्सामाभ्याँ संतरन्तो यजुर्भी रायस्पोषेण समिषा मदेम ॥ इति समूलं देवयजनमध्यवस्यति ६ तत्र प्राचीनवँशं कुर्वन्त्युद्यतं पुरस्तान्नियतं पश्चात् ७ तनुमिश्रेण परिश्रयन्ति ८ परि-श्रयन्तोऽतिरोकान्कुर्वन्ति ९ दिक्षु द्वाराणि कुर्वन्ति द्विशयानि सांकाशनानि १० पूर्वया द्वारा प्रविश्य क्रतुनिर्देशं कृत्वा तस्मिन्नग्नीन्विहरति ११ इदं दास्यामीति निर्देशः १२ दैक्षमशनमश्नीतो दध्ना मधुमिश्रेण यजमानः पत्नी च १३ अमावास्यायां दीक्षेत यथा वा पर्वणि सुत्या स्यात् १४ सप्तहोतारँ

मनसानुद्रुत्य विधेनामन्निति ग्रहेण जुहोति १५ दीक्षणीयां निर्वपत्याग्ना-वैष्णवमेकादशकपालं घृते वा चरुम् १६ अपः प्रणेष्यन्नग्निर्यजुर्भिरितिप्रभृतीनि द्वादश संभारयजूँषि तेषां चत्वारिचत्वारि निगद्य जुहोति १७ पत्नीसँयाजान्ता दीक्षणीया संतिष्ठते १८ तस्यां म्रदीयान्स्वरो दार्शपौर्णमासिकान्म्र-दीयान्प्रायणीयायां म्रदीयानातिथ्यायां ध्वानेनोपसदः । सर्वा उपाँशुदेवताः १९ सँवृत्य द्वाराणि प्रचरति २० उत्तरतः पृष्ठ्यादेशस्य परिश्रित्यापो देवीरित्यभ्युन्दति २१ ओषधे त्रायस्वैनमिति दक्षिणस्मिन्केशान्ते दर्भम-न्तर्दधाति २२ स्वधिते मैनँ हिँसीरिति क्षुरेणाभिनिदधाति २३ देव-श्रुदिमान्प्रवप इति प्रवपते २४ स्वस्त्युत्तरं अशीयेति यजमानो जपति २५ केशश्मश्रु यजमानो वापयते २६ दतो धावते २७ लोमानि सँहाय नखान्कारयते । न कक्षौ २८ पत्नी नखाँश्च कारयीत २९ तीर्थेनावगाह्य सावकासु हिरण्यवर्णाः शुचय इति स्थावरासु स्नात्वानूपम्रक्षमाचम्यो दिदाभ्यः शुचिरा पूत एमीत्युत्क्रामति ३० विष्णोः शर्मासीति क्षौममाछादयते ३१ ऊर्जे त्वेति नीवीं कुरुते ३२ दैक्षं पत्नी तूष्णीम् ३३ स्नात्वा प्राचीनमातृकं क्षौमं पत्न्याछादयते ३४ महीनां पयोऽसीति दर्भपिञ्जूलाभ्यां नवनीतमायौति ३५ वर्चोधा असीत्यनुलोमं त्रिरभ्यङ्क्ते मुखमग्रे ऽथ शिरः । स्वभ्यक्तो भवत्या पादाभ्याम् ३६ शेषेण पत्न्यभ्यङ्क्ते ३७ चतुसृभिर्दर्भेषीकाभिः शरेषीकाभिर्वा समुञ्जाभिः सतूलाभिरित्येकैकया त्रैककुभस्याञ्जनस्य संनिष्कृष्य वृत्रस्यासि कनीनिकेति दक्षिणमक्षि त्रिराङ्क्तेऽन्ययान्ययानिषेवयन्सव्यं च ३८ शेषेण पत्न्याङ्क्ते ३९ दर्भपिञ्जूलैस्त्रिः पावयत्येकविँशत्या त्रेधा विभज्य चित्पति-स्त्वेत्यूर्ध्वँ वाचस्पतिस्त्वेत्यवाञ्चं देवस्त्वा सवितेत्यूर्ध्वमछिद्रेण पवित्रेणेति सर्वत्रानुषजति ४० तस्य ते पवित्रपते पवित्रेणेति यजमानो जपति ४१ न प्राणानतिपावयेत् ४२ यं द्विष्यात्तमक्षणया पावयेत् ४३ पूर्वया द्वारा यजमानं प्रपाद्योत्तरेणाहवनीयं परिक्रम्य पश्चादाहवनीयस्योपवेशयति ४४ प्रतिप्र-स्थाता तूष्णीं पत्नीं पावयित्वापरया द्वारा प्रपाद्य दक्षिणतःपश्चादपरस्य पत्नीलोकमुपस्थाप्योपवेशयति ४५ १

आकूत्यै प्रयुज इति स्रुवेणाधीतयजूँषि जुहोति ॥ आपो देवीरिति स्रुचा

पञ्चमीम् । षष्ठीं द्वादशगृहीतां पूर्णाहुतिँ विश्वो देवस्य नेतुरिति निगद्य जुहोति १ पश्चादाहवनीयस्य कृष्णाजिने माँसतः समस्य प्राग्ग्रीवे लोमतः सँस्तृणाति २ यद्येकँ स्याद्दक्षिणं कृष्णाजिनपादं माँसतः समस्य प्रतिषीव्येत् ३ ऋृवसामयोः शिल्पे स्थ इति कृष्णशुक्ले राजी संमृशति ४ विष्णोः शर्मासीति भसत्त आरोहति ५ सूर्याग्नी द्यावापृथिवी इति प्राञ्जलिर्जपति ६ जालमुभयतःपाशं पत्न्याः शिरस्यामुच्य सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्याम्यद्भिरोषधीभिः सं त्वा नह्यामि प्रजया घनेन सा दीक्षिता सनवो वाचमस्मात् ॥ इति प्रतिप्रस्थाता योक्त्रेण पत्नीँ संनह्यति ७ मेखलां दीक्षितो मौञ्जीं पृथ्वीं त्रिगुणाँ समस्तामुदक्पाशामुर्गसीत्याबध्नाति ८ उच्यर्तिं ग्रन्थिं करोति ९ अयुग्मवलीं कृष्णविषाणामादायेन्द्रस्य योनिरसीति विषाणाम-नुमन्त्रयते १० कृषिँ सुसस्यामुत्कृष इति विषाणया बहिर्वेदि प्राचीमुद्धन्ति ११ विषाणे विष्येति सिच्याबध्नाति १२ तया कण्डूयते कृषिँ सुसस्यामुत्कृष इत्यङ्गानि सुपिप्पला ओषधीस्कृधीति शिरः १३ वानस्पत्येन शङ्कुना पत्नी कण्डूयेत १४ औदुम्बरमास्यदघ्नं दण्डमग्रेणाहवनीयं पर्याहृत्य बृहन्नसि वानस्पत्य इति यजमानाय प्रयछति १५ सूपस्था असि वानस्पत्य ऊर्जो मा पाह्योदृचमिति प्रतिगृह्णाति १६ नक्षत्राणां मातीकाशादित्युतरान्तेन प्रोर्णुते १७ आ वो देवास ईमह इति जपति १८ नापछादयेदा क्रयात् १९ स्वाहा यज्ञं मनस इतिप्रभृतिभिरङ्गुली द्वे द्वे निभुजन्मुष्टी कुरुते । वाचँ यछति २० तूष्णीं पत्नी मुष्टी कृत्वा वाचँ यछति २१ लोमतः कृष्णाजिनमाछादयेत । यदि द्वे विषूची प्रतिमुच्य २२ अग्रेण प्राग्वँशं दीक्षितमन्वारब्धमावेदयति ॥ दीक्षितोऽयमसाविति नाम गृह्णात्यामुष्यायण इति गोत्रममुष्य पुत्र इति पितुर्नाम्नामुष्य पौत्र इति पितामहस्यामुष्य नप्तेति प्रपितामहस्य ॥ स इन्द्राग्निभ्यां दीक्षां प्राह मित्रावरुणाभ्यां दीक्षां प्राह विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो दीक्षां प्राहेति २३ एवमुच्चैस्त्रिरावेदयति २४ एष्ट्रीः स्थेति तिस्रोऽन्यस्य पाणेरङ्गुलीरुत्सृजति तिस्रोऽन्यस्य २५ तूष्णीं पत्नी २६ नक्षत्राणां सकाशादिति नक्षत्रं दृष्ट्वा वाचँ विसृजते ॥ व्रतं चरत याः पशूनामित्युदिते २७ मङ्गल्यमुक्त्वा पत्नी वाचँ विसृजते २८ न प्रत्यक्ष-नाम्नाचक्षीत ॥ चनसिनेत्यर्हता सह संभाषमाणो ब्रूयाद्विचक्षणेतीतरैः २९

दीक्षितसंचरः । उत्तरेणाहवनीयमपरेण वेदिं दक्षिणातिक्रम्य दक्षिणत आहवनीयस्योदङ्मुख उपविशत्येष संचरः ३० लोमतः कृष्णाजिनस्य शय्यासनमाछादनं च ३१ प्रतिषिद्धं निष्ठीवनँ हसनमववर्षणं दन्ताविष्करण-ममेध्यदर्शनमपांगाहनँ होमोऽनृतं च ३२ आरात्प्राग्वँशादुदयास्तमया-वभ्याश्रावणं च न स्यात् ३३ नक्तं मूत्रपुरीषे कुर्याद्यदि दिवा छायायाम् ३४ यदि हसेदपिधाय मुखम् ३५ उन्दतीरोजो धत्त बलं धत्त मा मे दीक्षां मा तपो निर्वधिष्टेत्यववृष्टो जपेददब्धं चक्षुररिष्टं मनः सूर्यो ज्योतिषाँ श्रेष्ठो दीक्षेन्मा मा हासीत्सतपेत्यमेध्यं दृष्ट्वा ३६ अदीक्षितवादं चेद्ब्रूयात्त्वमग्ने व्रतपा असीति जपेत् ३७ अकाले वाचँ विसृज्य वैष्णवीमाग्नावैष्णवीँ सारस्वतीं बार्हस्प-त्यामित्येता निगद्य वाचँ यछति ३८ वाग्विसर्जनात्प्रागेकदुग्धे व्रते दोहयति ३९ पयो ब्राह्मणस्य व्रतँ यवागू राजन्यस्यामिक्षा वैश्यस्योपसत्सु पयः सर्वेषाम् ४० तूष्णीमग्निहोत्रोपचारं गार्हपत्ये व्रतँ श्रपयति दक्षिणाग्नौ पत्न्यै । शृतं गार्हपत्ये पश्चादाहवनीयस्योपसादयति ४१ २

याग्निहोत्रस्य स्कन्नस्य प्रायश्चित्तिः सा व्रतस्य १ अतिनीय सायमशनँ व्रतँ व्रतयत्युपोदयँ वातिनीय प्रातरशनमुपास्तमयँ वा २ नादीक्षितो व्रतयन्तं पश्येत् ३ अग्नीञ्ज्योतिष्मतः कुरु व्रतमुपेहि व्रत्येत्युक्त्वा दीक्षितसंचरे-णातिहृत्य दक्षिणत आहवनीयस्य काँस्ये चमसे वा व्रतं प्रयछति ४ दैवीं धियं मनामह इति पाणी प्रक्षालयते ५ ये देवा मनुजाता मनोयुज इति व्रतयति ६ शिवाः पीता भवतेति नाभिदेशमारभ्य जपति ७ पश्चार्धे पत्नी व्रतयति ८ उपोदयँ व्रतप्रदो वाचँ यमयति दीक्षित वाचँ यछ पत्नि वाचँ यछेत्युपास्तमयं च ९ दक्षिणत आहवनीयस्योदङ्मुखोऽपर्यावर्तमानः प्राक्शिराः शयीत १० कामो हविषां मन्दिष्ठस्त्वमग्ने व्रतपा असीति स्वप्स्यञ्जपेत्पुनर्मनस्त्वमग्ने व्रतपा असीति प्रबुध्यन् ११ दीक्षितो भृतिँ वन्वीत १२ पूषा सनीनामिति याचकान्व्रजतोऽनुमन्त्रयते ॥ देवः सवितेति प्रत्यागतान् १३ प्रवत्स्यन्नयं ते योनिर्ऋत्विय इत्यरण्योः समारोपयति । यदि गतश्रीः सर्वान् १४ भद्रादभि श्रेयः प्रेहि बृहस्पतिः पुरएता ते अस्तु अथेमवस्य वर आ पृथिव्या आरे शत्रून्कृणुहि सर्ववीरः ॥ इति प्रयात्यरणिभ्याँ सह रथाङ्गेन च १५ देवीरापो

अपां नपादित्यपोऽवगाहमान आ पाराल्लोष्ट मृद्नीयात् १६ यदि नावा तरेदन्येन वाछिन्नं तन्तुं पृथिव्या अनुगषमित्या पाराल्लोष्टं मृद्नीयात् १७ उदयास्तमयौ विहारान्ते स्यात् १८ अपरिमिता दीक्षास्तासां प्रथमां जागर्ति । तिस्र उपसदो ऽपरिमिता वा त्रिरभ्यासास्तासां प्रथमां जागर्ति श्वःसुत्येति च १९ दीक्षाभ्य ऊर्ध्वं प्रायणीयं निर्वपत्यदित्यै पयसि चरुम् २० सिद्धमा संशासनात् २१ न दीक्षितस्य पत्नीँ संनह्यति २२ पत्नीं मन्त्रेणोपस्थापयति २३ नाज्यभागौ यजति २४ ध्रौवस्यावदाय पथ्याँ स्वस्तिं पूर्वार्धे यजत्यग्निं दक्षिणार्धे सोमं पश्चार्धे सवितारमुत्तरार्धे । चरोरदितिं मध्ये २५ स्विष्टकृता प्रचरति । ध्रौवस्यावदाय चरोरवद्यति द्विरभिघारयति २६ शँय्वन्ता संतिष्ठते २७ चरुनिष्काषं मेक्षणमुदयनीयाय निदधाति २८ आज्यप्रेकं ध्रुवाया-श्चतुर्गृहीतं गृह्णाति २९ आम्नाता राजक्रयण्यधिकर्णी षोडशिनि ३० अग्रेण प्राग्वँशमभिपरिगृह्य पुरस्तात्प्रत्यङ्मुखीमवस्थापयति ३१ हिरण्यं बद्ध्वा दर्भेणोच्यर्ति मियं ते शुक्र तनूरिति चतुर्गृहीतेऽवदधाति ३२ राजक्रयणीं प्रेक्षमाणो जूरसीति जुहोति ३३ तस्यां पुनर्गृहीत्वा शुक्रमसि चन्द्रमसीति हिरण्यमुद्धरति ३४ चिदसि मनासि धीरसीति राजक्रयणीँ सँस्तौति ३५ अनु त्वा माता मन्यतामित्यनुमानयति ३६ रुद्रस्त्वावर्तयत्विति प्रदक्षिणमा-वर्तयति । प्राचीं प्रक्रमयति ३७ वस्व्यसीतिप्रभृतिभिः षट्पदान्यनुनिष्क्रा-मति दक्षिणस्य पूर्वपदस्य ३८ तूष्णीँ सप्तमं पदमभिपरिगृह्य बृहस्पतिष्ट्वा सुम्ने रम्णात्वित्यभिमृशति ३९ तस्मिन्हिरण्यं निधाय पृथिव्यास्त्वा मूर्धन्नाजि-घर्मीत्यभिजुहोति ४० स्फ्येन पदं परिलिख्य विषाणयानुपरिलिखति ४१ यावद्धूतं पदँ समुद्धृत्यास्मे रमस्वेति चरुस्थाल्यां पदँ सँवपति ४२ उन्नम्भयेति खातेऽपो निनयति ४३ तव राय इति यजमानाय पदं प्रयछत्यननुसृजँस्तव तव राय इति यजमानोऽध्वर्यवेऽननुसृजन् ४४ मा रायस्पोषेणेत्यारभ्य जपति यजमानः ४५ गृहेषु पदं निदधाति ४६ उत्तरेण लक्षणं परिक्रम्य त्वष्ट्रिम-न्तस्त्वेति पत्नीँ राजक्रयण्या समीक्षयते ४७ तछदिष्केणानसा राजानमछयन्ति ४८ सूर्यस्य चक्षुरारुहमित्यनुव्रजतोऽध्वर्युर्यजमानश्च ४९ अनुनयन्ति राज-क्रयणीम् ५० उत्तरवेद्यन्ते परिश्रित उपरवाणाँ वा सोमविक्रयी कुत्सः शूद्रो वा रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतो राजानं निवपति ५१ दक्षिणतः

प्राङ्मुखमनो विमुञ्चति ५२ शुन्ध सोममापन्नं निरस्येति सोमविक्रयिणं प्रेष्यति ५३ नाध्वर्युः सोमँ विचिनुयादिति प्रतिषिद्धँ विचयनं प्रेक्षणं च ५४ ३

उपमध्यमायाँ हिरण्यमाबध्यास्माकोऽसीति परिश्रितं प्रविशन्ति १ शुक्रस्ते ग्रह इति सहिरण्येन पाणिनाभिमृशति २ प्राग्दशे क्षौमे राजानं मिमीत ऋज्वीभिरङ्गुलीभिरङ्गुष्ठेन चोपसँयम्य कनिष्ठिकाप्रभृतिभिरेकैकया कनिष्ठि-कातोऽभि त्यं देवँ सवितारमिति पञ्चकृत्वस्तूष्णीँ पञ्चकृत्वो । यया प्रथमं न तया पञ्चमं तयैवोत्तमम् ३ प्रजाभ्यस्त्वेति भूयाँसमभ्यूहति ४ प्रजास्त्वानुप्राणन्त्विति क्षौम उष्णीषेणोपनह्यति लाङ्गलबन्धम् ५ एष ते गायत्रो भाग इति मे सोमाय ब्रूतादेष ते त्रैष्टुभो भाग इति मे सोमाय ब्रूतादेष ते जागतो भाग इति मे सोमाय ब्रूतादेष त आनुष्टुभो भाग इति मे सोमाय ब्रूतादेष ते पाङ्क्तो भाग इति मे सोमाय ब्रूताच्छन्दोमानाँ साम्राज्यं गछेदिति मे सोमाय ब्रूतादिति यजमानो राजानमुपतिष्ठते ६ उदकुम्भे सोमविक्रयी राजानमादधाति ७ सोमविक्रयिन्सोमं ते क्रीणानीत्यामन्त्रयते ॥ क्रीणीहीति प्रत्याह ८ कलया ते क्रीणानीति यथाम्नातमेकैकेन पणते ॥ भूयो वा अतः सोमो राजार्हतीति प्रत्याह ९ इयं गौस्तया ते क्रीणानीति तस्या रूपं तस्या वर्ण तस्या आत्मा तस्याः प्रजास्तस्याः पय इति ॥ यथाम्नातँ सोमक्रयणा-नपाकरीति ॥ शुक्रं ते शुक्र शुक्रेणेति हिरण्यं तपसस्तनूरसीत्यजां प्रत्याछिद्य सोमक्रयणात्सु वाङ्नभ्राडित्यनुदिशति ११ सोमविक्रयिणे किंचिद्दद्यात् १२ कृष्णाशुक्लयोरूर्णास्तुकयोरस्मे ज्योतिरिति शुक्लाँ यजमानाय प्रयछति । तां पवित्रस्य नाभिं कुर्यात् १३ इदमहँ सर्पाणां दन्दशूकानां ग्रीवा उपग्रथ्नामीति कृष्णाया ग्रन्थिं कृत्वा सोमविक्रयिणि तम इति तमभिन्यस्येत् १४ स्वजा असीति राजानमादत्ते १५ आह्रियमाणे यजमानोऽपावृत्योपविशति १६ मित्रो न एहीति जपति १७ वस्त्रान्तमुत्कृष्येन्द्रस्योरुमाविशेति दक्षिणस्मिन्नूरा-वासादयति १८ उदायुषेत्यादायोत्तिष्ठति १९ उर्वन्तरिक्षँ वीहीत्यनो ऽभिप्रव्रज्य पूर्वार्धे नीडेऽदित्यास्त्वगसीति कृष्णाजिनमास्तृणाति २० अदित्याः सद आसीदेति तस्मिन्राजानमासादयति २१ अस्तभ्नाद् द्यामित्यन उपतिष्ठते २२ वनेषु व्यन्तरिक्षमित्यनो वाससा पर्यणिह्यति २३ धूरसीति

धुरमभिमृशत्युत्तरां च २४ उदङ्ङतिक्रम्य वारुणमसीत्युत्तरामीषामारभ्य जपति २५ वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्नोति २६ उस्रावेतं धूर्वाहौ युज्येथा-मनश्रू अवीरहणौ ब्रह्मचोदनौ यज्ञस्यायुः प्रतिरस्तौ स्वस्ति यजमानस्य गृहान्गछतमिति धुर्यावुपाजते २७ वरुणस्य स्कम्भोऽसीति युनक्त्ये वमुत्तरम् २८ दक्षिणं छदिरन्तमारभ्य सोमाय क्रीताय प्रोह्यमाणायानुब्रूहीत्यनुवाचयति २९ त्रिरनूक्ताग्राँ सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति ३० प्रच्यवस्व भुवनस्पत इति प्राङभिप्रयाय प्रदक्षिणमावर्तयति ३१ पूर्वः परेत्य महदाहव-नीयेऽभ्यादधाति ३२ अग्रेण प्राग्वँशं कर्णगृहीतमजमग्नीषोमीयं कालालं पीवानमवस्थापयंति ३३ आसन्दीमुदृह्णात्युखदघ्नपादामरत्निमात्रां मुञ्जैर्व्युता-मौदुम्बरीम् ३४ नमो मित्रस्येत्योह्यमाने यजमानो जपति ३५ अग्रेण प्राग्वँशँ वारुणमसीत्युदङ्मुखमनोऽवस्थापयति ३६ वरुणस्त्वोत्तभ्नात्वित्युपस्तभ्नोति ३७ वरुणस्य स्कम्भसर्जनमसीति दक्षिणाँ शम्यामुत्कर्षति ३८ विचृत्तो वरुणस्य पाश इति योक्त्रपाशँ विष्यति ३९ प्रत्यस्तो वरुनस्य पाश इति प्रत्यस्यति ४० नमो वरुनस्य पाशायेति नमस्करोति ४१ ४

आतिथ्यायेध्माबर्हिः संनह्यति यथा पशुबन्धे १ सिद्धमा निर्वपणात् २ पत्न्यवधारयेद्यस्मान्निर्वपेत् ३ सावित्रादिभिरग्नेस्तनूरसीतिप्रभृतिभिः पञ्चकृत्वो निर्वपति । वैष्णवं नवकपालम् ४ सिद्धमा हविष्कृतः ५ हविष्कृता वाचँ विसृज्योत्तरमनड्वाहँ विमुञ्चति । तमध्वर्यवे ददात्यनश्च ६ दीक्षि-तसंचरेणातिहृत्य दक्षिणत आहवनीयस्य वारुणमसीत्यासन्दीमवस्थापयति ७ वरुणोऽसि धृतव्रत इति राजानमुपावहरति सव्यामीषां प्रति सार्धं कृष्णा-जिनेन च ८ दीक्षितसंचरेणातिहृत्य दक्षिणत आहवनीयस्य वरुणस्य ऋृतसदनमासीदेत्यासन्द्याँ राजानमासादयति ९ वरुनाय त्वेति वाससा प्रछादयति १० शूर्पादानप्रभृति सिद्धमाज्यग्रहेभ्यः ११ चतुर्गृहीतान्याज्यानि १२ सिद्धमाभिमर्शनात् १३ प्रागभिमर्शनान्निर्मन्त्येन प्रचरति १४ संभार-यजुर्भिरभिमर्शयति १५ सिद्धमा प्रवरात् १६ प्रवृतेऽननुयाजासु संमार्गं विस्रँस्याभ्युक्ष्य व्रजे परेगोष्ठे वोदस्यति १७ समानयनवेलायामौपभृतं जुह्वाँ सर्वमानीय नोपभृतं प्रत्यभिघारयति १८ स्विष्टकृता प्रचर्यं स्रुचौ विमुच्य

बहिर्वेदि निरस्यति १९ न प्राशित्रमवद्यति न यजमानभागम् २० इडान्ता संतिष्ठत इडान्ता संतिष्ठते २१ ५

इति मानवसूत्रेऽग्निष्टोमे प्रथमोऽध्यायः

तानूनप्त्रं गृह्णाति काँस्ये चमसे वा १ आपतये त्वा गृह्णामि परिपतये त्वा गृह्णामि तनूनप्त्रे त्वा गृह्णामि शक्मने शाक्वराय शक्मना ओजिष्ठाय त्वा गृह्णामीत्येतैर्ध्रौवं चतुरानयति २ पश्चादा-हवनीयस्य तानूनप्त्रमुपयन्त्यृत्विजो यजमानश्च ३ युगपत्समवमृश्याना-धृष्टमसीति जपन्ति यो नस्तन्तपादिति च ४ प्रजापतौ त्वा मनसि जुहोमि स्वाहेति यजमानस्त्रिरवजिघ्रति ५ अवान्तरदीक्षामुपैति ६ अग्ने व्रतपते या मम तनूरेषा सा त्वयीति समिधमादधात्यग्ने व्रतपते या तव तनूरियँ सा मयीति जपति ७ सह नौ व्रतपत इति मेखलाँ समायम्य साधीयोऽङ्गुलीर्न्यञ्चति । तूष्णीं पत्नी योक्त्रँ समायम्य साधीयो न्यञ्चति ८ गार्हपत्ये मदन्तीरधिश्रित्य तप्तस्योदकार्थान्कुर्वन्ति ९ यत्राज्येभ्यो ऽधि राजानमुपचरेयुः प्रक्षालयेरन्पा-णीन्राज्ञो वाध्याज्यानि १० अग्नीन्मदन्त्यापा इत्यध्वर्युरावेदयति ॥ मदन्ति देवीरमृता ऋतावृध इत्याग्नीध्रः ॥ ताभिराद्रवेत्यध्वर्युः ११ ब्रह्मा राजानँ विस्त्रँस्य हिरण्यमवदधात्याप्यायनायाँशुरंशुष्टे देव सोमेत्यारभ्य जपन्त्यृ-त्विजो यजमानश्च १२ प्रस्तरे पाणीन्निधाय निह्नवते नीचः सव्यानुत्ता-नान्दक्षिणान्नीचो दक्षिणानुत्तानान्सव्यानापराह्णिक्यामेष्टा राया एष्टा वामानीति जपन्ति १३ प्रवर्ग्येण प्रचर्योपसदा प्रचरन्ति यदि प्रवृञ्जन्ति १४ सकृत्स्तीर्णं बर्हिरातिथ्यायामुपसत्सु चान्यत्प्रस्तरात् १५ दशदार्विध्मँ संनह्यति १६ पा-त्राणि प्रयुनक्ति स्रुवतृतीये स्रुचावाज्यस्थालीँ स्फ्यँ वेदं च १७ सिद्धमा सँसादनात् १८ यजुरुत्पूताभिः पात्राणि प्रोक्ष्याज्यं निरुप्य पर्यग्निं करोति १९ स्तीर्णं बर्हिः शयाः परिधयः २० बर्हिषोऽधि स्तम्बयजुर्हरति २१ प्रोक्षणीरा-सादयेध्ममुपसादय स्रुचौ संमृड्ढ्याज्येनोदेहीति सँशास्ति २२ दक्षिणतः प्रोक्षणीष्वकृत्स्नसँस्थानां प्रणीता अपवर्जयति २३ सिद्धमाज्यग्रहेभ्यः २४ अष्टौ कृत्वो जुह्वां गृह्णाति चतुरुपभृति २५ इध्मं प्रोध्य मूलदेशे बर्हिषः प्रदक्षिणं प्रोक्षणीर्निनयति २६ इध्मदार्वादाय विधृत्योः प्रस्तरँ सादयति २७ आज्यानि

सादयति स्रुवतृतीये स्रुचावाज्यस्थालीँ स्फ्यँ वेदं च २८ सिद्धमा समिन्धनात् २९ त्रिरिध्ममादधाति ३० सिद्धमा संप्रैषात् ३१ अग्निमग्नीत्त्रिः संमृड्ढि सीद होतरिति प्रेष्यति ३२ लुप्यते स्रौचः प्रवरश्च ३३ घृतवती अध्वयं इत्युच्यमाने स्रुचावादाय दक्षिणातिक्रम्य यथादेवतमनुवाचयति ३४ अग्निं पूर्वार्धे यजति मध्ये सोममौ पभृतं जुह्वाँ सर्वमानीय विष्णुं पश्चार्धे ३५ स्रुचौ विमुच्य बहिर्वेदि निरस्यति ३६ राजानमाप्याय्य निह्नुवते ३७ ब्रह्मा राजानमुप-नह्यति ३८ प्रस्तरँ विधृती आदाय स्रुवेगोपसदो जुहोति ॥ या ते अग्नेऽयाशयेति प्रथमेऽहनि या ते अग्ने रजाशयेति मध्यमे या ते अग्ने हराशयेत्युत्तमे ॥ तनूर्वर्षिष्ठेति सर्वत्रानुषजति ३९ समयाहवनीयं प्रस्तर-मतिहरन्सुब्रह्मण्य सुब्रह्मण्यामाह्वयाग्नीद्देवपत्नीर्व्याचक्ष्वेति प्रेष्यति ४० गार्हपत्यान्ते देवपत्नीराग्नीध्रो व्याचष्टे ॥ वाग्वायोः पत्नी पथ्या पूष्णः पत्नीति सर्वत्रानुषजति ४१ पूर्वाह्णे प्रवर्ग्योपसद्भ्यां प्रचरत्यपराह्णे च ४२ अन्तरोपसदो व्रतयतो यथाकालँ सायम् ४३ एवं त्र्यहमुपसद्भिश्चरन्ति ४४ तानूनप्त्रँ व्रते प्रयछति ४५ या ते अग्ने रुद्रिया तनूरिति व्रतयति ४६ तप्तव्रतौ भवतः ४७ व्रत्य वाचँ यछ पत्नि वाचँ यछेति यथाकालँ व्रतप्रदो वाचँ यमयति ४८ चतुःस्तने प्रथमेऽहनि त्रिस्तनद्विस्तने मध्यम एकस्तन उत्तमे ४९ उपसद्वृद्धौ स्तनव्यूहौ विवर्धयेतौपसदाँश्च होमान् ५० मध्यमायामुपसदि पूर्वाह्णिकीं कृत्वा यूपमछैति ५१ अग्रेण प्राग्वँशं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पृष्ठ्याशङ्कुं निहत्य वेदादानप्रभृति वेदिँ विदधाति । षट्त्रिँशत्प्रक्रमा प्राचीत्याम्नातं प्रमाणम् ५२ उपरवदेशात्स्तम्बयजुर्हरति ५३ दशपदामुत्तर-वेदिं निःसाराणान्तां कुर्वीत ५४ उत्तमायामुउपसदि पूर्वाह्णिकीं कृत्वा शाखामछैति ५५ १

अर्धव्रते प्रदाय सद्यः कुर्यादापराह्णिकीम् १ उत्साद्य घर्मपात्राण्यग्नोषोमी-यायौपसदं बर्हिः शुल्बप्रभृतिना कल्पेन संनह्यति २ इध्मे क्परिधीनुपसंनह्यति ३ उत्तरवेदेः प्रोक्षणप्रभृति सिद्धमा पूर्णाहुतेः ४ वेद्यां पदानि लोभयन्ते यावन्तो दक्षिणतस्तावन्त उत्तरतः ५ अव्यतिक्रामन्तः पृष्ठ्यां पराञ्चोऽभ्यव-सर्पन्ति ६ उत्करे लोभनानि इप्रविध्यन्ति ७ नाप्रोक्षितामाक्रामन्ति ८ उत्तरं

परिग्राहँ परिगृह्य प्रत्यवमृज्याग्रेण पृष्ठ्याशङ्कुं तिर्यञ्चँ स्फ्यँ स्तब्ध्वा प्रोक्षणीरासादयेध्माबर्हिरुपसादय स्रुचः समृङ्ख्याज्येनोदेहीति सँशास्ति ९ दक्षिणतः प्रोक्षणीरासाद्योत्तरमिध्माबर्हिरुपसादयति १० उदीरणप्रभृति सिद्धमा बर्हिषः प्रोक्षणात् ११ इध्माबर्हिर्निधाय संततामुलपराजिँ स्तृणाति पृष्ठ्याशङ्कोरध्योत्तरवेदेः १२ हविर्धानयोः प्रथमकृतान्ग्रन्थीन्विस्रँस्य प्रक्षाल्याभ्यज्याभिनह्याभितः पृष्ठ्यामरत्निमात्रेऽवस्थापयन्ति बहिर्वेदि चक्राण्यन्तर्वेद्युपस्तम्भनानि १३ युञ्जते मन उत युञ्जते धिय इति शालामुखीये जुहोति १४ हविर्धानयोर्दक्षिणेऽक्षुधुरौ राजक्रयणीपदार्धेन देवश्रुतौ देवेष्वाघोषेथामिति पत्न्युपानक्ति त्रिरन्यां त्रिरन्यां प्राचीमनिवर्तयन्ती १५ हविर्धानाभ्यां प्रवर्त्यमानाभ्यामनुब्रूहीत्यनुवाचयति १६ त्रिरनूक्तायामप जन्यं भयं नुदेति सछदिष्के प्रवर्तयन्ति १७ उदृह्णन्तोऽवरावरमन्तर्वेद्यवस्थाप्य ये धुरावुपाञ्जन्ति तयोर्वर्त्मनि वेदिसंधौ हिरण्यं निधायाभिजुहोती दँ विष्णुर्विचक्रम इति दक्षिणस्मिन्निरावती धेनुमतीत्युतरस्मिन् १८ उदृह्णन्तोऽनुव्रजन्ति १९ यद्यक्ष उत्त्वेदे- त्सु वागावद देव दुर्यानिति जपेत् २० पश्चादुत्तरवेदेस्त्रिषु प्रक्रमेष्वत्र रमेथाँ वर्ष्मन्पृथिव्या अधीति नभ्यस्थेऽवस्थाप्य परिदधाति २१ वैष्णवमसीत्युत्तरामीषामारभ्य जपति २२ विष्णुस्त्वोतभ्नात्वित्युपस्तभ्नोत्ये वमुत्तरम् २३ हविर्धानयोरीषे दक्षिणे मेथ्यावुपनिहन्ति दिवो विष्ण इति दक्षिणाँ विष्णोर्नु कमित्युत्तराम् २४ ईषे मेथ्योर्निबध्नाति ग्रन्थिमकुर्वन् २५ आ वामुपस्थमद्रुहेति प्राचीनवँशँ हविर्धानं मिनोति २६ विष्णोः पृष्ठमसीति मध्ये छदिरादधाति । पश्चात्प्रथीयः २७ पूर्वाध छदिरन्तेष्वँसदघ्नीँश्चितस्त्रः स्थूणा निहत्योदञ्चँ वँशमवदधात्येवं पश्चाद्धसीयनीषु २८ तेजन्यां मध्ये दर्भाणाँ वरसं करोति २९ दर्भान्प्रत्युपकर्षँ रज्ज्वानुपरिहारँ समस्य तेजन्यन्तौ विष्णो रराटमसीति पूर्वार्धे वँशेऽभ्यादधाति ३० परिश्रित्य दक्षिणस्मिन्वँशान्ते तेजन्यां दर्भानाघाय विष्णोः शिप्रे स्थ इत्यन्तौ व्यवास्यति ३१ विष्णोः स्यूरसीति प्रवयति ३२ विष्णोर्ध्रुवोऽसीति प्रथमं ग्रन्थं करोति ३३ आन्तात्प्रतिषीव्येत् ३४ अपरँ वँशं प्रतिषीव्य द्वार्याः प्रतिषीव्यति ३५ ऊर्ध्वाः शम्या उत्कृप्य संबध्नाति ३६ वैष्नवमसि विष्णवे त्वेति संमितमभिमन्त्र्या हवनीयाद्यजमानः प्राचस्त्रीन्प्रक्रमान्प्रक्रम्य प्र

तद्विष्णुरिति जपति ३७ दक्षिणस्य हविर्धानस्य पश्चादुपस्तम्भनस्य द्विप्रादेशं चतुरस्रं विधाय ३८ २

उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते १ अभ्रिरसि नारिरसीत्यभिमन्त्रयते २ इदमहँ रक्षसो ग्रीवा अपिकृन्तामीति दक्षिणस्मा-दँसादभिप्रदक्षिणं प्रादेशमात्रान्कुष्ठासूपरवान्परिलिखति यथायूपावटं बाहु-मात्रान्खनति ३ औपरवाणां पाँसूनामग्रेणोपस्तम्भनं बाहूमात्रं चतुरस्रं खरं करोति ४ अवोक्ष्य सिकताभिः प्ररोचयति ५ बृहन्नसि बृहद्राय इत्यनुपूर्वं खनति ६ सम्राडसीति प्रथममुद्वपति स्वराडसीति द्वितीयँ विराडसीति तृतीयँ सत्राडसीति चतुर्थम् ७ बृहन्नसि बृहद्राय इत्यधस्तात्संतृद्य सर्वराडसीति सर्वानुद्वपति ८ उदुप्तानुत्करे प्रविध्यति ९ संमृश इत्युपरवान्संमृशति १० अनुमृशतः पूर्वयोर्दक्षिणमन्वध्वर्युरपरयोरुत्तरँ यजमानः ॥ किमत्रेति पृछति भद्रमित्यध्वर्युस्तन्नौ सहेति यजमान । उत्तरमन्वध्वर्युर्दक्षिणयोरपरँ यजमानः ॥ किमत्रेति पृछति भद्रमित्यध्वर्युस्तन्म इत्याह यजमानः ११ उत्तरतः सदो-हविर्धानयोः समयार्धे चतुःस्थूणं दक्षिणाद्वारं प्राग्वंशमाग्नीध्रं मिनोति । तस्यार्धमन्तर्वेद्यर्धं बहिर्वेदि १२ उपरस्माद्वेद्यन्तात्त्रिषु प्रक्रमेष्वपरिमिते वावकाशे सदो विदधाति नवारत्नि प्राचीनं त्रिनवं तिर्यक्तस्य मध्ये दक्षिणतः पृष्ठ्यायाः प्रक्रममात्र औदुम्बर्यै गर्तं खनति यथायूपावटँ समानमा स्तरणात् १३ यजमानमात्रीमौदुम्बरीमुच्छ्रीयमाणामुद्गातान्वारभते १४ उञ्श्रयस्व वन-स्पत इत्युच्छ्रयति १५ नितानस्त्वा मारुतो निहन्त्विति प्राक्कर्णीमवदधाति १६ ब्रह्मवनिं त्वा क्षत्रवनिं पर्यूहामीति पाँसुभिः पर्यूहति १७ ब्रह्म दृँह क्षत्रं दृँहेति यजमानो दीक्षितदण्डेन प्रदक्षिणँ संमृशति १८ अपोऽनुपरिषिञ्चति १९ अन्तरा कर्णौ हिरण्यं निधाय घृतेन द्यावापृथिवी आपृणेत्यभिजुहोति २० आ मूलादवस्त्रावयति २१ उदग्वँशँ मदोऽन्तर्मायु मिनोति २२ औदुम्बरी वर्षिष्ठा स्थूणानाँ ह्रसीयस्योऽन्या अन्त्या ह्रसिष्ठाः २३ नव छदीँष्यग्निष्टोम उदक्कूलानि पञ्चदशोक्थ्ये सप्तदशातिरात्र एकविँशतिः सत्राहीनयोरेकादश षोडशिनि वाजपेये च २४ विश्वजनस्य छायासीत्यौदुम्बर्यां मध्यमं छदि-रादधाति । पूर्वमाधायापरमादधाति । दक्षिणैरभिनिदधात्युत्तराण्युपकर्षति

२५ परि त्वा गिर्वणो गिर इति परिश्रयति २६ मध्यमापरयोः संधाविन्द्राय त्वेत्यारभ्य जपति २७ इन्द्रस्य स्यूरसीति प्रवयति २८ इन्द्रस्य ध्रुवोऽसीति प्रथमं ग्रन्थिं करोति २९ आन्तात्प्रनिषिच्येत् ३० अपरान्संधीन्प्रतिषीव्य द्वार्याः प्रतिपीव्यति ३१ ऐन्द्रमसीन्द्राय त्वेति संमितमभिमन्त्र्य प्रोक्षणीः सँस्कृत्य रक्षोघ्नो वो वलगघ्नः प्रोक्षामि वैष्णवानित्युपरवान्प्रोक्षति ३२ रक्षोहणं त्वा वलगहनमवसिञ्चामीत्यद्भिरेकैकमवसिञ्चति ३३ रक्षोहणं त्वा वलगहनमवस्तृणामीति दर्भैरेकैकमवस्तृणाति ३४ औदुम्बरेऽधिषवणफलके समोपवृक्णे पश्चात्पुरस्तात्प्रधिप्रकारे बाहुमात्रं । द्व्यङ्गुलम् पश्चादसँहतम् ३५ अतिहृत्यान्तरेणोपे रक्षोघ्नी वाँ वलगघ्नी उपदधामीत्युपरवेषुपदधाति ३६ रक्षोघ्नी वाँ वलगघ्नी पर्यूहामीति पाँसुभिः पर्यूहति ३७ अधिविचयनस्य चर्मणोऽधिषवणं करोति ३८ अतिहृत्यान्तरेणोषे रक्षोहणं त्वा वलगहनमास्तृणामीत्यधिषवणफलकयोरास्तीर्य लोमतः कुष्ठाः संबध्नाति ३९ ३

दक्षिणत आग्नीध्रस्याग्नीध्रीयाय लक्षणं करोति १ उद्धत्यावोक्ष्य चात्वालात्पाँसून्निवपति २ व्युह्यावोक्ष्य सिकताभिः प्ररोचयति ३ एवं धिष्ण्यान्निवपति षडन्तःसदसः । पृष्ठ्यादेशे होत्रीयं बाहुमात्रे पश्चाद्द्वारस्य दक्षिणं मैत्रावरुणीयँ यथैनयोः समयार्ध औदुम्बरी भविष्यत्युदीच इतरान्बाहुमात्रान्तरान्ब्राह्मणाछँस्यं पोत्रीयं नेष्ट्रीयमछावाक्यम् ४ यावति होत्रीयादाग्नीध्रीयस्तावति दक्षिणतःपुरस्तान्मार्जालीयः ५ दक्षिणतश्चात्वालस्यान्तर्वेद्यास्तावाय सँस्तृणाति ६ उत्तरतश्चात्वालस्य शामित्राय लक्षणं करोति ७ उद्धत्यावोक्ष्यानुपरिक्रामन्तौ धिष्ण्यानुपतिष्ठेतेऽध्वर्युर्यजमानश्च विभूरसि प्रवाहण इतिप्रभृतिभिर्यथान्युप्तँ सम्राडसीतिप्रभृतिभिराहवनीयमास्तावमन्तर्वेदि तिष्ठन्तौ चात्वालँ शामित्रँ सद औदुम्बरीं ब्रह्मलोकमुत्तरेणाग्नीध्रीयं परिक्रम्य शालामुखीयं गार्हपत्यं दक्षिणाग्निँ ॥ रौद्रेणानीकेनेति सर्वत्रानुषजति ८ तीर्थमन्तरा चात्वालमाग्नीध्रं च ९ न धिष्ण्यान्व्यवेयात् । अध्वर्युश्चेत्प्रत्यङ्धिष्ण्यानतिक्रामेदैन्द्रीं निगदेत् १० अन्तराग्नीध्रमाग्नीध्रीयं च प्राग्वँशाय संचरः ११ वेदिँ स्तृणन्ति यथापदलोभा धातुशो धुन्वन्तो वा नपछादयन्तो धिष्ण्यान्खरोपरवोत्तरवेदिं च १२ अर्धव्रते प्रदायोत्तरत आहव-

नीयस्येध्माबर्हिरुपसादयति १३ पाणी प्रक्षालयतेऽध्वर्युर्यजमानश्च १४ शालामुखीयेऽग्निप्रणयनोन्याधाय प्राग्वँशे पाशुकानि पात्राणि प्रयुनक्ति स्रुवाद्दक्षिणाँ स्रुचं प्रचरणीं । तस्याः प्रथमं तूष्णीँ संमार्जनम् १५ सिद्धमाज्यग्रहेभ्यः १६ चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति १७ ब्रह्मण उपस्थे राजानमादधाति यजमानाय वा १८ प्रैतु ब्रह्मणः पत्नी वेदिँ वर्णेन सिदत्विति दीक्षितसंचरेण पत्नीमभ्युदानीयाथाहमनुगामिनी स्वे लोके विश इहेति पश्चाद्यजमानस्योपवेशयति १९ चतुर्गृहीतं गृहीत्वाग्नीषोमाभ्यां प्रणीयमानाभ्यामनुब्रूहीत्यनुवाचयति २० त्रिरनूक्तायामग्निप्रणयनान्युद्यछति २१ अध्वर्युराग्नीध्राय प्रदाय प्राग्दशेन वाससामात्यान्यजमानं च प्रछादयन्ति २२ पुमाँसो यजमानमन्वारभन्ते स्त्रियः पत्नीम् २३ उपसँयम्य दशाँ स्रुग्दण्डे त्वँ सोम तनूकृद्भ्य इति जुहोति ॥ जुषाणो अप्तुरिति द्वितीयाम् २४ एषोऽत ऊर्ध्वं गार्हपत्यो भवति । तस्य शीतभस्मनि पदार्धमुपवपति २५ अग्निमग्रतो नयन्ति । यस्योपस्थे सोऽनन्तरा राजानमनु पश्चादाज्यान्यासन्दीं ग्राववा-यव्यानि द्रोणकलशमजं चाग्नीषोमीयमनुनयन्ति २६ उत्तरेण सदो यन्ति २७ आग्नीध्रीये धिष्ण्येऽग्निं निधायाग्ने नयेत्यभिजुहोति २८ आग्नीध्रे यज्ञपात्राणि सादयत्यासन्दीं ग्राववायव्यानि द्रोणकलशमजं च बध्नाति २९ ब्रह्मा राजानमादाय पश्चाद्धविर्धानयोरवतिष्ठते ३० आज्यैरुत्तरवेद्यन्त उरु विष्णो विक्रमस्वेत्याहवनीये हुत्वाग्राण्युपपाय्य पश्चादुत्तरवेदेरेकवृद्बर्हिः स्तृणाति ३१ सिद्धमाज्यानाँ सादनात् ३२ एवा वन्दस्वेति पूर्वया द्वारा यजमानः प्रपद्यते । ऽपरयाध्वर्यू राजानमतिहरति ३३ उर्वन्तरिक्षं वीहीति दक्षिणमनोऽभिप्रव्रज्य पूर्वार्धे नीडेऽदित्यास्त्वगसीति कृष्णाजिनमास्तृणाति ३४ अदित्याः सद आसीदेति तस्मिन्राजानमासादयति ३५ देव सवितरेष ते सोम इति जपत्ये तत्त्वं देव सोमेति यजमानः ३६ इदमहं मनुष्यानित्युक्त्वावर्तते ३७ नमो देवेभ्य इति नमस्करोति ३८ निर्वरुणस्य पाशादिति निःसर्पति ३९ स्वरभि-व्यक्शमित्यभिवीक्षतेऽग्निमादित्यँ वा ४० अग्ने व्रतपते या तव तनूर्मय्यभूदेषा सा त्वयीति समिधमादधाति ४१ अग्ने व्रतपते या मम तनूस्त्वय्यभूदियँ सा मयोति जपति ४२ पुनर्नौ व्रतपत इति व्रतानि विसृजते ४३ कृष्णाजिन आसात । यजुषा कण्डूयेत । हविष्यं पत्नी प्राश्नीयाद्धविरुच्छिष्टँ यजमानः

४४ अग्रेण हविर्धानेऽपरेण स्रुग्दण्डान्दक्षिणातिक्रम्यापरो ब्रह्मण उपविशत्येष संचरः ४५ ४

षड्ढोता पाशुक्यारम्भणीया दक्षिणादानं पराङ्गभूतेषु निवर्तेत १ दीक्षितस्य चेत्प्राक्क्रयाद्यूपमछैयात् २ स्रुवमरणी चादाय यूपस्यान्तेऽग्निं मथित्वा यूपाहुतिं जुहुयात् ३ क्रीते चेदाहवनीये हुत्वा यूपावटप्रभृति सिद्धमोपाकरणात् ४ अग्नीषोमीयमजमुपाकरोति ५ सिद्धमा प्रवरात् ६ प्रवृते मैत्रावरुणाय दीक्षितदण्डम् प्रयछति ७ सिद्धमा वपाया होमात् ८ हुतायाँ वपायां चात्वाले मार्जयित्वा सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति । पितापुत्रीयाँ सुब्रह्मण्यामाह्वयति ९ नाग्नीषोमीये हृदयशूलं करोति न सवनीये १० न स्वरुमनुप्रहरति ११ नान्तरापो देवयजनं च पन्था व्यवेयात् १२ प्रागस्तमयान्निष्क्रम्य वसतीवरीर्गृह्णाति १३ वहन्तीनां प्रतीपस्तिष्ठन्हविष्मतीरिमा आप इति प्रतीपं कलशमुपमारयति छायातपयोः संधावपिधाय दर्भैः पाणिना वा १४ अग्नेर्वोऽपन्नगृहस्य सदसि सादयामीति पश्चाच्छालामुखीयस्य सादयति १५ यद्यस्तमितः स्यात्सोमयाजिनः कुम्भादृह्णीयात् १६ सोमयाजिनं चेन्न विन्देद्धिरण्यँ हस्ते स्यादग्निमुपरिष्टाद्धारयेयुरथ गृह्णीयात् १७ यद्दक्षिणास्वदास्यन्स्यात्तस्याध्वर्यवे वरं दद्यात् १८ पशुपुरोडाशप्रभृति सिद्धमा पश्विडायाः १९ दक्षिणेन हविर्धानमार्जालीयमैत्रावरुणीयानामतिहृत्य होत्रे पश्विडां प्रयछति २० सिद्धमोपयड्भ्यः २१ शामित्रीयादङ्गारानाग्नीध्रो होत्रीये निवपति २२ इडापथेन गुदजाघनी हरति २३ सिद्धमा सँस्रावभागेभ्यः २४ सर्वाः स्रुचः संप्रगृह्णाति २५ नक्तं पत्नीसँयाजान्तः संतिष्ठते २६ पाशुबन्धिकमिध्माबर्हिः संनह्यति २७ या यजमानस्य व्रतधुक्तामाशिरे दुहन्ति या पत्न्यास्तां मैत्रावरुण्यै पयस्यायै या प्रवर्ग्यस्य तां दधिघर्माय २८ पयाँसि विशिष्य निदध्याद्दधि दधिग्रहाय । शृतशीतं मैत्रावरुणाय । हिरण्यशकलौ शुक्राय । सक्तून्मन्थिने । तप्तातङ्क्यशीतातङ्क्ये दधिनी आदित्यग्रहाय । धाना हारियोजनाय २९ आग्नीध्रे यज्ञपात्राणि वासयति । तस्मिन्यजमानो जाग्रदुपवसति प्राग्वँशे पत्नी ३० निशायाँ वसतीवरीः परिहरति । नादीक्षितमभिपरिहरेयुः ३१ अन्तर्वेदि

तिष्ठेद्यजमानः पत्नी च ३२ पूर्वया द्वारा प्रविश्य वसतीवरीर्गृह्णाति ३३ अपरेण विहारं दक्षिणातिक्रम्य पूर्वया द्वारा निःसृत्य दक्षिणेन सदोमार्जालीयहविर्धानं गत्वेन्द्राग्न्योर्भागधेयीः स्थेति दक्षिणस्यामुत्तरवेदिश्रोणौ सादयति । यथेतं प्रत्येत्य पूर्वया द्वारा निःसृत्योत्तरेण सदआग्नीध्रीयहविर्धानं गत्वा मित्रावरुणयोर्भागधेयीः स्थेत्युत्तरस्यामुत्तरवेदिश्रोणौ सादयति विश्वेषां देवानामित्याग्नीध्रे ॥ सुम्नायुव इति सर्वत्रानुषजति ३४ सुब्रह्मण्य सुब्रह्मण्यामाह्वयेति प्रेष्यति । पितापुत्रीयाँ सुब्रह्मण्यामाह्वयत्याह्वयति ३५ ५

इति मानवसूत्रेऽग्निष्टोमे द्वितीयोऽध्यायः

उपतिष्ठते व्युछन्त्यामैन्द्र्या सद आग्नेय्याग्नीध्रँ वैष्णव्या हविर्धानम् १ आसन्यान्मा मन्त्रात्पाहि पुरा कस्याश्चिदभिशस्त्या इत्यानीध्रीये जुहोति २ उत्तरत आहवनीयस्येध्याबर्हिरुपसादयति ३ पाणी प्रक्षालयतेऽध्वर्युः प्रतिप्रस्थाता च ४ पश्चादाग्नीध्रीयस्य पाशुकानि पात्राणि प्रयुनक्ति प्राग्वँशेऽपराणि । स्रुवाद्दक्षिणाँ स्रुचँ प्रचरणीं तस्याः प्रथमं तूष्णीँ संमार्जनम् ५ अग्ने त्वं पारयेत्येतया स्रुच उपतिष्ठते ६ सिद्धमाज्यग्रहेभ्यः ७ यथा पूर्वेद्युराग्नीध्रीये तु स्रुचाँ संमार्जनमाज्यानां ग्रहणं च ८ उत्तरवेद्यन्त आज्यान्यभुदाहरन्ति ९ उदीरणप्रभृति सिद्धमा स्तरणात् १० बर्हिष इतरार्धँ सप्रस्तरं दक्षिणतःपुरस्तात्खरस्य स्तीर्त्वा तस्मिन्स्रुचः सादयति ११ युनज्मि ते पृथिवी ज्योतिषा सहेति ध्रुवामभिमृशति युनज्मि वायुमन्तरिक्षेण तेन सहेत्युपभृतँ युनज्मि वाचँ सह दिवा सह सूर्येण तेन सहेति जुहूँ युनज्मि तिस्रो विवृतः सूर्यस्य त इति सर्वाः १२ वायव्यान्यूर्ध्वपात्राणि प्रादेशमात्राणि संसक्तमध्यानि तृतीयोदुप्तानि १३ को वो युनक्ति स वो युनक्त्विवति खरे पात्राणि प्रयुनक्ति । दक्षिणस्मिन्नँसे दधिग्रहपात्रमौदुम्बरं चतुःस्रक्त्युत्तरस्मिन्नुपाँश्वन्तर्यामयो दक्षिणमुपाँशुपात्रं तयोर्मध्य उपांशुसवनं ग्रावाणम् १४ अपराणि द्विदेवत्यपात्राणि परिस्रगैन्द्रवायवस्याजागलं मैत्रावरुणस्य विकर्णमाश्विनस्य । दक्षिणोत्तरे शुक्रामन्थिनोर्बैल्वँ शुक्रस्य दक्षिणँ वैकङ्कतमुत्तरं मन्थिन । आश्वत्थे ऋतुपात्रे अश्वशफबुध्ने यथा स्रुगुभयतोमुखे तयोर्दक्षिणमध्वर्युपात्रमुत्तरं प्रतिप्रस्थातुर्दक्षिणस्याँ श्रोणावाग्रायणस्थालीमुत्तरस्यामुक्थ्यस्थालीमुक्थ्यपात्रं

च त्रिभृष्ठ्यश्वशफबुध्नमग्रेणोपस्तम्भनमादित्यस्थालीमादित्यपात्रं चाष्टाभृष्टि । खादिरँ षोडशिपात्रं चतुःस्रक्ति १५ वायवायाहि दर्शतेमे सोमा अरंकृताः । तेषां पाहि श्रुधी हवम् ॥ इति वायव्यान्युपतिष्ठते १६ उत्तरस्य हविर्धानस्याग्रेणोपस्तम्भनं ध्रुवस्थालीम् १७ दक्षिणस्य हविर्धानस्य पश्चादक्षँ सत्सरुं द्रोणकलशं । तस्मिन्नवदधाति परिप्लवाँ स्रुचमदण्डिकां । दशाक्पवित्रे च शुक्लानामूर्णानाममात्योते यजमानस्या रत्निमात्रं पवित्रं प्रादेशमात्री दशा १८ उत्तरस्याधस्तात्सवनीयकलशान्प्रयुनक्ति स्थविष्ठं प्रातःसवतिकं पश्चार्धं पूर्वं माध्यंदिनीयं पूर्वार्धं तार्तीयसवनिकमग्निष्टोमे ह्रसिष्ठमुक्थ्यादूर्ध्व ँ वषिष्ठं । नीड आधवनीयं । प्रघुरे पूतभृतम् १९ दक्षिणस्यावालम्बे दश चमसान्नैयग्रोधान्रौहितकान्वा नानालक्षणान्त्सरुमतः २० रक्षोघ्नो वो वलगघ्नः सँसादयामि वैष्णवानित्यधिषवणे पञ्च ग्राव्णः प्रयुनक्ति तेषामुपलः स्थविष्ठो मध्येऽभिमुखानितरान् २१ वाससा राजानमतिहृत्यान्तरेणेषे हृदे त्वा मनसे त्वेति ग्रावसूपावहरति २२ सप्तहोत्रा यजमानोऽभिमृशति २३ व्युष्टायां पुरा वाचः प्रवदितोः प्रातरनुवाकमुपाकरोति २४ १

देवेभ्यः प्रातर्यावभ्योऽनुब्रूहि ब्रह्मन्वाचँ यछ सुब्रह्मण्य सुब्रह्मण्यामाह्वय प्रतिप्रस्थातः सवनीयान्निर्वपस्वेति प्रेष्यति १ प्राग्वँशे प्रतिप्रस्थातां सवनीयान्निर्वपतीन्द्राय हरिवते यवान्धानाभ्य इन्द्राय पूषन्वते करम्भायेन्द्राय सरस्वतीवते भारतीवते परिवापायेन्द्राय व्रीहीन्पुरोडाशाय २ अष्टाकपालः प्रातःमवनिक एकादशकपालो माध्यंदिनीयो द्वादशकपालस्तार्तीयसवनिकः ३ एकदुग्ध आमिक्षां करोति । नोत्तरयोः सवनयोः पयस्या ४ सिद्धमाधिश्रयणात् ५ भृज्यमानासु पर्यग्निं करोति ६ धानानां द्विभागं पिनष्टि ७ अभूदुषा रुशत्पशुरित्युच्यमाने शृणोत्वग्निः समिधा हवं म इति प्रचरण्या जुहोति ८ तस्यां पुनर्गृहीत्वा प इष्य होतर्मैत्रावरुणस्य चमसाध्वर्य आद्रवैकधनिन एत नेष्टः पत्नीमभ्युदानय प्रतिप्रस्थातर्वसतीवरीणाँ होतृचमसं पूरयित्वा दक्षिणेन होतारमभिप्रयम्य चात्वालान्ते प्रत्युपास्वेति प्रेष्यति ९ यथाप्रेषितं चात्वालमभ्युदायन्ति १० एकधनिन इति सवनीयकलशानाँ संप्रैष

११ प्रतिप्रस्थाता वसतीवरीणां होतृचमसं पूरयित्वा दक्षिणेन होतारमभिप्रयम्य चात्वालान्ते काङ्क्षति १२ एह्युदेह्यग्निष्टे अग्रं नयताँ वायुष्टे मध्यं नयताँ रुद्रावसृष्टा युवा नामासि नमस्ते अस्तु मा मा हिँसीरिति नेष्टा पत्नीमभ्युदानयति पान्नेजनपाणिनीम् १३ यत्र होतुः प्रातरनुवाकमनुब्रुवत उपशृणुयात्तदपोऽध्वर्युर्वहतीनां गृह्णीयात् १४ यदि दूरे स्युश्चात्वालान्ते गृह्णीयात् १५ अप्सु तृणं प्रास्य देवीरापो अपां नपादित्यभिजुहोति १६ कार्ष्यसीति दर्भैराहुतिमपप्लावयति १७ मैत्रावरुणचमसे दर्भानन्तर्धाय समुद्रस्य वोऽक्षित्या उन्नय इति प्रतीपं चमसमुपमारयति १८ एवमनुपूर्वँ सवनीयकलशान् १९ तूष्णीं पान्नेजनँ वसूनाँ रुद्राणामित्यभिमन्त्र्य पत्न्यै प्रयछति २० अधि चात्वालं मैत्रावरुणचमसीयानाँ होतृचमसीयास्ववनयति होतृचमसीयानां मैत्रावरुणचमसीयासु २१ यथाधुरं धुरो धूर्भिः कल्पन्तामिति प्रचरण्या चमसौ समनक्ति २२ अपरया द्वारा पत्नी सदः प्रविश्य वसवो रुद्रा आदित्या इति पश्चान्नेष्ट्रीयस्य सादयति पान्नेजनम् २३ हविर्धानमभ्युदानयन्त्यग्रतो मैत्रावरुनचमसीया होतृचमसीया वसतीवरीरनुपूर्वँ सवनीयफलशान् २४ अवेरपोऽध्वर्याउ इति चेद्धोता पृछेदुतेमनन्नमुरुतेमं पश्येति प्रतिब्रूयात् २५ प्रचरण्याग्निष्टोमे यमग्ने पृत्सु मर्त्यमिति ऋतुकरणिं जुहोति २६ एतेनोक्थ्ये परिधिमञ्ज्यादेतेन षोडशिनि रराटीं द्रोणकलशँ वोपस्पृशेत् २७ हविर्धाने प्रचरणीमाधाय प्रधुरे वैतञ्जपन्हविर्धानं प्रपद्येतातिरात्रे वाजपेयेऽप्तोर्याम्णि २८ औदुम्बरे पवित्रवत्युपयामगृहीतोऽसि प्रजापतये त्वेति दधिग्रहं गृह्णाति २९ असन्नो हूयते ३० दक्षिणेन होतुर्गछति ३१ उत्तरेणाभिप्रयम्य ग्रहं दक्षिणं परिधिसंधिं प्रत्यवस्थाय येन प्रजा अधिद्रा इत्यभिजुहोति ३२ तिस्रो जिह्वस्येत्युपतिष्ठते ३३ प्रतिपरिक्रम्य यथास्थानं पात्रँ सादयति ३४ उदुह्याधवनीयं मैत्रावरुणचमसीया अवनीय प्रातःसवनिकमवनयति ३५ उत्तरस्य हविर्धानस्य दक्षिणस्या अक्षधुरोऽधस्ताद्वसतीवरीः सादयत्युत्तरौ सवनीयकलशौ । दक्षिणस्योत्तरस्या अधस्ताद्धोतृचमसंम् सादयित्वा तस्मिन्निग्राभ्याः स्थेति यजमानँ वाचयति ३६ २

देवस्य त्वा सवितुः प्रसव इत्युपाँशुसवनमादत्ते १ ग्रावासीत्यभिमन्त्र्य वाचँ

यछति २ विस्रँस्य राजानमिन्द्राय त्वा सृषुत्तममिति सहिरगयेन पाणि-नाभिमृशति ३ उपाँशुसवनमुपले निधाय तस्मिन्राजानँ सर्वं मिमीत इन्द्राय त्वाभिमातिघ्न इतिप्रभृतिभिः पञ्चकृत्वो यथा क्रये ४ श्वात्राः स्थ वृत्रतुर इति होतृचमसादुपसृज्य यत्ते सोम दिवि ज्योतिरित्यभिमर्शनेन सतनुं करोति ५ प्रतिप्रस्थाताल्पीयोऽर्षँ राज्ञो वाससोद्धृत्य कृष्णाजिने निदधाति ६ अवीवृधँ वो मनसा सुजाता ऋतप्रजाता भग इद्वः स्याम । इन्द्रेण देवीर्वीरुधः सँविदाना अनुमन्यन्ताँ सवनाय सोमम् ॥ इति राजानं निर्यात्य द्वौद्वौ षडंशूनपायातयति ७ तूष्णीँ होतृचमसादुपसृज्य मा भैर्मा संविक्था इत्युपाँशुसवनमुद्यम्य जपति ८ धिषणे ईडिते ईडेथामित्यधिषवणफलके अभिमन्त्रयते ९ योऽभिषुतस्य प्रथमोःऽँशुः परापतेदा मास्कान्सह प्रजया सह पशुभिः सह रायस्पोषेणेन्द्रियं मे वीर्यं मा निर्वधिष्टेति तमभिमन्त्र्य प्रत्याहरति १० मूलेऽभिषुणोति । यदि मूलं न विन्देत्तृणं दारु वान्तर्दध्यात् ११ अष्टौ कृत्वोऽभिषुत्य वाचस्पतये पवस्वेत्युपाँशुपात्रेऽञ्जलिना तृतीयग्रहमानयत्ये वमेकादशकृत्वोऽभिषुत्यैवं द्वादशकृत्वः १२ अवगृहीतानां प्रतिप्रस्थातासिच्यमाने द्वौद्वावँशू अन्तर्दधाति १३ मधुमतीर्ना इषस्कृधीति जपति १४ स्वांकृतोऽसीत्यादायोत्तिष्ठति १५ उर्वन्तरिक्षँ वीहीति व्रजति १६ दक्षिणेन होतुर्गछति १७ उत्तरेणाभिप्रयम्य ग्रहं दक्षिणं परिधिसंधिं प्रत्यवस्थाय विश्वेभ्य इन्द्रियेभ्य इति जुहोति १८ यतो हुतं ततः पात्रस्योर्ध्वमुन्मृज्याद्वृष्टिकामस्य देवेभ्यस्त्वा मरीचिपेभ्य इति मध्यमस्य परिधेः पश्चादूर्ध्वमुन्मृज्यादवृष्टिकामस्यान्तरतः पात्रस्यावमृज्या-त्परिधेरन्तरतोऽवमृज्यात् १९ आग्रायणस्थाल्याँ संपातमवनयति २० प्राणाय त्वेत्युपाँशुपात्रँ सादयति । तस्मिन्नँशुमवदधाति २१ यत्ते सोमादाभ्यमि-त्यवगृहीतानां प्रतिप्रस्थाताँशुषु द्वौद्वावँशू प्रत्यवसृजति २२ ३

अभिषवायोपविशन्त्यधिषवणस्य दक्षिणतः प्रतिप्रस्थाता पश्चाद्यजमान उत्तरतोऽध्वर्युः पुरस्तादुन्नेता १ तूष्णीँ होतृचमसादुपसृज्य ग्रावभिरभिषुणवन्ति २ ततो निग्राभमुपैति ३ अभिषुतानँशून्प्रागपागधरागुदगिति होतृचमसे परिप्लावयति ४ प्रपीड्य प्रत्याहरति ५ अत ऊर्ध्वमुन्नेता वसतीवरी-णामुपसृजति ६ अभिषुणवन्ति ७ पुनर्निग्राभमुपैति ८ ततः संभरति ९

प्रपीडयोन्नेताधवनीये परिप्लावयति १० ततो दोहयति ११ अभिषुतँ होतृ-
चमसेऽवनीय पूर्णस्य प्रातःसवनिकेऽवनयति १२ प्रपीडयोन्नेताधिषवणे
निवपत्युपसृजति १३ अभिषुणवन्ति १४ चतुर्निग्राभमुपैति । त्रिः संभरति
१५ यदि नवकृत्वो निग्राभमुपेयादुपसर्जनप्रभृति त्रिर्निग्राभमुपैति संभरति दो-
हयति १६ एवं द्वितीयः पर्यायस्तथा तृतीयः १७ ऋजीषेण ग्राव्णः परिवपति
१८ प्राञ्चमुद्गाता द्रोणकलशं प्रोहत्यत्यस्यति दशापवित्रमन्तराक्षँ विष्कम्भं च
। यं द्विष्यात्तस्याक्षमुपहन्यात् १९ दशया द्रोणकलशँ संमार्ष्टि वसवस्त्वा
सम्मृजन्त्विति प्रातःसवने रुद्रास्त्वेति माध्यंदिन ॥ आदित्यास्त्वेति तृती-
यसवने पूतभृतम् २० ग्रावसु द्रोणकलशमादधाति । तस्योपर्युद्गा-
तारोऽधस्तान्नाभि पवित्रँ वितन्वन्ति । तस्मिन्यजमानो होतृचमसेन संततां
शुक्रधाराँ स्रावयत्या ध्रुवग्रहणात् २१ प्रातःसवनिकादुन्नेता होतृचम-
सेऽवनयति २२ शुक्रधाराया ग्रहान्गृह्णात्युपबिलान्पूर्णान्वृष्टिकामस्य २३
गृहीत्वा दशया परिमृज्य यथास्थानँ सादयति २४ उपयामगृहीतोऽस्यन्तर्यछ
मघवन्नित्यन्तर्यामं गृह्णाति २५ असन्नो हूयते २६ उत्तरेण होतुर्गछति २७
दक्षिणेनाभिप्रयम्य ग्रहमुत्तरं परिधिसंधिं प्रत्यृजुस्तिष्ठन्वावत्वाष्ट्विति जुहोति
२८ व्याख्यातमुन्मार्जनम् २९ अपानाय त्वेत्यन्तर्यामपात्रँ सूदवत्सादयति
॥ व्यानाय त्वेत्युपाँशुसवनम् ३० उदित उपाँश्वन्तर्यामौ जुहोति ३१ यदि
त्वरेत पुरोदयादुपाँशु जुहुयात् ३२ ४

ऊर्ध्वमन्तर्यामाद्ग्रहाग्राणि १ यदि रथंतरसामा सोमः स्यादैन्द्रवायवाग्रा-
न्ग्रहान्गृह्णीयाद्यदि बृहत्सामा शुक्राग्रान्यदि जगत्सामाग्रायणाग्रान् २ यो
ज्येष्ठबन्धुरित्याम्नातं ग्रहाग्रम् ३ ऐन्द्रवायवं गृह्णात्या वायो भूषेत्यर्धग्र-
हमिन्द्रवायू इमे सुता इति शेषमेष ते योनिः सजोषोभ्यां त्वेति सादयति ४
यमन्यमैन्द्रवायवात्पूर्वं गृह्णीयादैन्द्रवायवँ सादयित्वा तँ सादयेत् ५ अयँ वां
मित्रावरुणेति मैत्रावरुणं शृतशीतेन पयसा श्रीणात्येष ते योनिर्ऋतायुभ्यां त्वेति
सादयति ६ अयँ वेन इति शुक्रं गृहीत्वा हिरण्येन श्रीणात्येष ते योनिर्वीरतायै
त्वेति सादयति ७ तं प्रत्नथेति ग्रन्थिनं गृहीत्वानभिध्वँसयन्पात्राणि सक्तुभिः
श्रीणात्येष ते योनिः प्रजाभ्यस्त्वेति सादयति ८ य आग्रायणस्थाल्याँ सोमस्तँ

होतृचमसेऽवनीय ये देवा दिव्येकादश स्थेत्याग्रायणं द्वाभ्यां धाराभ्यां गृह्णात्याग्रायणोऽसि स्वाग्रायण इत्यभिमन्त्र्योपाँशु हिङ्ङिति त्रिरभिहिङ्कृत्य वाचँ विसृज्यैष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति ९ उपयामगृहीतोऽसीन्द्राय त्वा बृहद्वत इत्युक्थ्यं गृह्णात्येष ते योनिरिन्द्राय त्वेति सादयति १० मूर्धानं दिव इति ध्रुवं गृह्णाति ॥ ध्रुवोऽसि ध्रुवक्षितिरित्यभिमन्त्र्यैष ते योनिर्वैश्वानराय सादयत्या युष्कामस्य हिरण्ये ११ राजपुत्रो ध्रुवं गोपायति १२ यं द्विष्यात्तस्य ध्रुवं प्रवर्तयेत् १३ यः प्रातःसवनिके सोमस्तँ होतृचमसेऽवनीयातिपाव्य राजानं प्रपीड्य पवित्रं पार्श्वतो निदधाति १४ परिप्लवया द्रोणकलशात्पूतभृत्यवनीय दशया परिमृज्य यथास्थानँ सादयति १५ उपयामगृहीतोऽसि प्रजापतये त्वेति द्रोणकलशमभिमृशत्युपयामगृहीतोऽसीन्द्राय त्वेत्याधवनीयमुपयामगृहीतोऽसिविश्वेभ्यस्त्वा देवेभ्य इति पूतमृतम् १६ द्रप्सश्चस्कन्देत्यभितो द्रोणकलशँ स्कन्नमभिमन्त्रयते १७ सप्तहोतारं मनसानुद्रुत्य जुहोति १८ प्रस्तोतर्वाचँ यछोन्नेतर्यं आधवनीये राजा तं प्राञ्चँ संपावयस्वेति प्रेष्यति १९ ५

हविर्धानादध्यास्तावात्प्रहाणाः सर्पन्ति १ अध्वर्युं प्रस्तोतान्वारभते प्रस्तोतारमुद्गातोद्गातारं प्रतिहर्ता प्रतिहर्तारं मैत्रावरुणो मैत्रावरुणँ यजमानो यजमानं ब्रह्मा २ मनो ज्योतिर्वर्धतां भूतिरित्येताभ्यां तूष्णीमुपचरितं पृषदाज्यं जुह्वति ३ वागग्रेगा अग्रे यात्वृजुगा देवेभ्यो यशो मयि दधती प्राणान्पशुषु प्रजां मयि च यजमाने चेत्यध्वर्युरग्रतो दर्भमुष्टिमायुवानः सर्पति ४ आस्तावं प्राप्योपविशन्ति प्रस्तोतुः सव्यमनु यजमानो दक्षिणमन्वध्वर्युः ५ प्रस्तोत्रं दर्भमुष्टिं प्रयछन्सोमः पवत इति स्तोत्रमुपाकरोति ६ नाध्वर्युरुपगायात् ७ दशहोतारं यजमानो जपति पुरस्ताद्बहिष्पवमानस्य वस्व्यै हिङ्कर्विति च श्येनोऽसि गायत्रछन्दा अनु त्वारभे स्वस्ति मा संपारयेति च ८ स्तोष्यमाण उन्नेता पूतभृति पवित्रँ वितत्यावनयत्याधवनीयम ९ दशया परिमृज्य यथास्थानं न्युब्जति १० यं द्विष्यात्तं बहिष्पवमानात्परिबाधेत ११ स्तुतेऽग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशं अलंकुरु प्रतिप्रस्थातः पशुमुपकल्पयस्वेति प्रेष्यति १२ आग्नीध्रीयादङ्गारानाग्नीध्रो होत्रीयप्रभृति यथान्युप्तं धिष्ण्येषु

विहृत्य पूर्वैः सांकाशनद्वारैः प्रविश्योत्तरेण होत्रीयं परिक्रम्य संततामुलपराजिँ स्तृणाति पृष्ठ्याशङ्कोरध्योसरवेदेः १३ परिप्लवया द्रोणकलशाद्ग्रहं गृह्णाति या वां कशेत्याश्विनमेष ते योनिर्माध्वीभ्यां त्वेति सादयति १४ विष्णो त्वं नो अन्तमः शर्म यछ यशश्च प्र ते धारा मधुश्चुत उत्सं दुह्रते अक्षितिम् ॥ इति वैष्णव्या पात्राणि संमृश्योत्कृष्य रशानां त्रिवृता यूपं परिवीय पशूनुपाकरोत्याग्नेयमजमग्निष्टोम एन्द्राग्नं द्वितीयमुक्थ्य ऐन्द्रँ वृष्णि तृतीयँ षोडशिनि सारस्वतीं मेषीं चतुर्थीमतीरात्रे १५ सिद्धमा प्रवरात् १६ अष्टाविध्मशकलानादायाश्रावमृतुप्रैषादिभिर्वृणीते । यथाम्नातँ होतारमश्वि-नाध्वर्यू आध्वर्यवादित्यध्वर्युरुपाँश्यात्मनो नाम गृहीत्वा प्रतिप्रस्थानुश्च मानुषावित्युच्चैः शकलमग्नावध्यस्यत्यग्निरग्नीदाग्नीध्रादित्याग्नीध्रं ॥ मित्रा-वरुणौ प्रशास्तारौ प्रशास्त्रादिति प्रशास्तारमिन्द्रो ब्रह्मा ब्राह्मणादिति ब्राह्मणार्छासनं ॥ मरुतः पोतारः पोत्रादिति पोतारं ॥ ग्रावो नेष्ट्रीयो नेष्ट्रादिति नेष्टारमग्निर्दैवीनाँ विशां पुरएतायँ मुन्वन्यजमानो मनुष्याणां तयोरस्थूरि णौ गार्हपत्यं दीदायञ्शतँ हिमा द्वा यू राधाँसि संपृञ्चाना असंपृञ्चानौ तन्वस्तन्म इत्याह यजमानः १७ प्रवृतः प्रवृतो जुष्टो वाचो भूयासमिति स्रुवेण स्वाहा सरस्वत्या इति द्वितीयमृचा स्तोमँ समर्धयेति तृतीयम् १८ न सवनीये पशुपुरोडाशमनुनिर्वपति १९ सिद्धमा वपाया होमात् २० हुतायाँ वपायां चात्वाले मार्जयित्वा धिष्णयानुपतिष्ठन्त ऋत्विजो यजमानश्च २१ ६

अवकाशैर्यजमानो ग्रहानवेक्षते ॥ प्राणापानाभ्यां मे वर्चोदसौ पवेथामि-त्युपाँश्यन्तर्यामौ ॥ व्यानाय मे वर्चोदाः पवस्वेत्युपाँशुसवनँ ॥ वाचे मे वर्चोदाः पवस्वेत्यैन्द्रवायवं ॥ दक्षक्रतुभ्यां मे वर्चोदाः पवस्वेति मैत्रावरुणँ ॥ श्रोत्राय मे वर्चोदाः पवस्वेत्याश्विनं ॥ चक्षुर्भ्यां मे वर्चोदसौ पवेथामिति शुक्रामन्थिनो ॥ आत्मने मे वर्चोदाः पवस्वेत्याग्रायणमङ्गेभ्यो मे वर्चोदाः पवस्वेत्युक्थ्यमायुषे मे वर्चोदाः पवस्वेति ध्रुवँ ॥ विष्णोर्जठरमसि वर्चसे मे वर्चोदाः पवस्वेति द्रोणकलशमिन्द्रस्य जठरमसि वर्चसे मे वर्चोदाः पवस्वेत्याधवनीयँ ॥ विश्वेषां देवानां जठरमसि वर्चसे मे वर्चोदाः पवस्वेति पूतभृतं ॥ कोऽसि कतमोऽसि कतमो वा नामासि यं त्वा सोमेनातीतृपन्यं

त्वा सोमेनामीमदन्सु पोषः पोषैः स्यात्सुवीरो वीरैः सुप्रजाः प्रजया सुचक्षाश्चक्षुषा त्वावेक्ष इति सर्वत्रानुषजति १ तेजसे मे वर्चोदाः पवस्वेत्याज्यं ॥ पशुभ्यो मे वर्चोदाः पवस्वेति पृषदाज्यमायुर्बृहत्तदशीय तन्मामवतु तस्य नाम्ना वृश्चावो यो अस्मान्द्वेष्टि यं च वयं द्विष्म इति हविर्धानँ ॥ विश्वायुर्वामदेव्यं तदशीय तन्मामवतु तस्य नाम्ना वृश्चावो यो अस्मान्द्वेष्टि यं च वयं द्विष्म इत्याग्नीध्रमायुःपती रथंतरं तदशीय तन्मामवतु तस्य नाम्ना वृश्चावो यो अस्मान्द्वेष्टि यं च वयं द्विष्मो भुवनमसि विप्रथस्व नमः सदे नमः सदसस्पतय इति सदो ॥ दृढे स्थोऽशिथिरे समीची अहसस्पातं मा मा द्यावापृथिवी संताप्तं मा माद्याभि श्वश्च चरतमिति द्वार्ये २ नमः पितृभ्यः पूर्वसद्भ्यो नमो अपरसद्भ्य आगन्त पितरः सोम्यासस्तेषाँ वः प्रतिवित्ता अरिष्टाः स्याम सुपितरो वयँ युष्माभिर्भूयास्म सुप्रजसो यूयमस्माभिर्भूयास्त पितरो होयि पितरो होयि पितरो होयीति दक्षिणार्धँ सदसः प्रेक्षमाणा जपन्ति ३ घोरा ऋषयो नमो अस्त्वद्य येभ्यश्चक्षुर्येषाँ तप उच्चभीमम् बृहस्पते महिष द्युमन्नमो नमो विश्वकर्मणे म उ पात्वस्मान् ॥ इति धिष्ण्यान् ४ स्वस्ति वयं त्वया वसेम देव सोम सूर्य गायत्र्या त्वा शँसीमहीत्यादित्यम् ५ उप मा द्यावा-पृथिवी ह्वयेनामुपास्तावाः कलशाः सोमधानाः उप मा होत्रा उपहवे ह्वयन्तामुपहूता गाव उपहूतोऽहं गवाम् ॥ इति प्राङ्मुखाः कलशान् ६ सदः प्रसृप्योपविशन्ति । दक्षिणतः पुरस्ताद्धोत्रीयस्य यजमान उपविशत्युत्तरा-वध्वर्यू ७ प्रतिप्रस्थाता पात्र्यामुपस्तीर्य सवनीयानुद्वासयति पूर्वार्धे धाना दक्षिणार्धे सक्तून्करम्भाय दध्ना प्रयुतान्सर्पिषा वा पश्चार्धे सक्तून्परिवापाय मध्ये पुरोडाशँ विस्राव्यामिक्षामुत्तरार्धे ८ अलंकृत्य जुहुपभृतोरवदाय प्रातः प्रातः-सावस्येन्द्राय पुरोडाशानामनुब्रूहीत्यनुवावयत्या श्राव्य प्रातः प्रातःसाव-स्येन्द्राय पुरोडाशान्प्रेष्येति प्रचरति ९ औपभृतं जुह्वामानीया ग्नये पुरोडाशानामनुब्रूह्यग्नये पुरोडाशान्प्रस्थितान्प्रेष्येति प्रचरति १० सिद्धमा कपालविमोचनादन्यदिडोपहवात् ११ स्रुचौ चमसँ वायव्यँ वादाय वाचँ यछत्या यजेति वचनात् १२ आग्नीध्रे स्फ्यसंमार्गपाणिराग्नीध्रः पश्चादास-न्दीमारभ्योर्ध्वस्तिष्ठन्नस्तु श्रौषदिति प्रत्याश्रावयति १३ प्रत्याश्रुते दक्षिणं परिधिसंधिं प्रत्यवस्थाय जुहोत्यध्वर्युरुत्तरं प्रतिप्रस्थाता मध्येऽग्नेराज्याहुतीः

पुरोडाशाहुतीः पश्वाहुतीश्चाभितः सोमाहुतीः १४ ७

द्विदेवत्यैः प्रचरतः १ प्रतिप्रस्थातादित्यपात्रेण प्रतिनिग्राह्यान्ग्राहमसन्नाञ्जुहोति २ उपयामगृहीतोऽसि वायव इन्द्रवायुभ्यां त्वेति गृह्णाति ३ मुख्यमादायाध्वर्युः परिप्लवया द्रोणकलशात् अध्वर्योऽयँ यज्ञोऽस्तु देवा ओषधीभ्यः पशुभ्यो मे धनाय । विश्वस्मै भूताय ध्रुवोऽस्तु देवाः स पिन्वस्व घृतवद्देवयज्यायै स्वाहा ॥ इति सोममाघारमाघारयति ४ वायव इन्द्रवायुभ्यामनुब्रूहीत्यनुवाचयत्या श्राव्य वायव इन्द्रवायुभ्यां प्रेष्येति प्रचरति ५ वषट्कृते जुहुतः ६ पुनर्वषट्कृते हुत्वा व्यवनयतः ७ प्रतिप्रस्थाता-ध्वर्युपात्रे सर्वमानयति ८ तस्याग्रमध्वर्युः प्रतिप्रस्थानेऽवनीय त्वरमाणो भक्षँ हरति ९ अयँ वसुः पुरोवसुरिति होत्रे प्रयछति १० उपयामगृहीतोऽसि देवेभ्यस्त्वेति प्रतिप्रस्थातादित्यपात्रेणादित्यस्थाल्याँ संपातमवनयति ११ उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति गृह्णाति १२ मुख्यमादा-याध्वर्युर्यथादेवतमनुवाचयति १३ सिद्धमा प्रदानात् १४ अयँ वसुर्विद्द्व-सुरिति होत्रे प्रयछति १५ उपयामगृहीतोऽसि विश्वदेवेभ्यस्त्वेति प्रतिप्रस्था-तादित्यपात्रेणादित्यस्थाल्याँ संपातमवनयति १६ उपयामगृहीतोऽस्यश्विभ्यां त्वेति गृह्णाति १७ मुख्यमादायाध्वर्युर्यथादेवतमनुवाचयति १८ सिद्धमा प्रदानात् १९ अयँ वसुः सँयद्वसुरिति होत्रे प्रयछति २० उपयामगृहीतोऽसि विश्वेभ्यस्त्वा देवेभ्य इति प्रतिप्रस्थातादित्यपात्रेणादित्यस्थाल्याँ संपातमव-नयति २१ दितेः पुत्राणामित्यादित्यस्थालीमभिपूरयति परिप्लवया द्रोणक-लशात् २२ उपयामगृहीतोऽसि विष्णोस्त्वोरुक्रमे गृह्णामीत्यादित्यस्थाली-मभिमृशति २३ विष्ण उरुक्रमैष ते सोम इति प्रतिप्रस्थातादित्यपात्रेणादि-त्यस्थालीमपिदधात्यपिदधाति २४ ८

इति मानवसूत्रेऽग्निष्टोमे तृतीयोऽध्यायः

पूतभृतोऽन्ते मध्यतःकारिचमसानुपसादयति होतुर्ब्रह्मण उद्गातुर्यजमानस्य १ होतृकचमसाँश्चान्यानृतेऽछावाकचमसादुन्नयति २ उन्नीयमानेभ्योऽनुब्रूही-त्यनुवाचयति ३ उभयतः शुक्रानुन्नेतोन्नयति ४ द्रोणकलशादुपस्तीर्य पूतभृत

उपबिलान्कृत्वा द्रोणकलशादभिपूरयति ५ तुथोऽसि जनधाया देवस्त्वा शुक्रपाः प्रणयन्त्विति शुक्रमादत्ते ॥ तुथोऽसि जनधाया देवास्त्वा ग्रन्थिपा प्रणयन्त्विति मन्थिनं प्रतिप्रस्थाता ६ अपनुत्तौ शण्डामर्काविति पाँसुन- पध्वँसयतः ७ अधस्ताद्यूपशकलावुपयछेते ८ प्रोक्षितेध्मशकला- भ्यामछिन्नस्य ते देव सोमेत्यपिधत्तः ९ आदानाभ्यामुपनिष्क्रामतः १० आयुः संधत्तं प्राणँ संधत्तं चक्षुः संधत्तँ श्रोत्रँ संधत्तं मनः संधत्तँ वाचँ संधत्तमिति पश्चादुत्तरवेदेरवयम्य ग्रहावरत्नी संथत्तः ११ अनाधृष्टासीत्यङ्गुष्ठाभ्यामुत्तरवे- दमाक्रामत उपरि लिखन्तावुत्तरवेदिं परिक्रामतः १२ शुक्रँ यजमानोऽन्वारभते १३ सुवीराः प्रजा इति दक्षिणेनाध्वर्युः ॥ सुप्रजाः प्रजा इत्युत्तरेण प्रतिप्रस्थाता १४ इन्द्रेण मन्युनेति यजमानो जपति १५ पुरस्तात्प्रस्यञ्चाववतिष्ठेते १६ संजग्मानावित्यरत्नी संधत्तः १७ शुक्रस्याधिष्ठानमसीतीध्मशकलमग्नावध्य- स्यति ॥ मन्थिनोऽधिष्ठानमसीति प्रतिप्रस्थाता १८ निरस्तः शण्ड इति यूपशकलं बहिर्वेदि निरस्यति ॥ निरस्तो मर्क इति प्रतिप्रस्थाता १९ प्राञ्चश्चमसैश्चरन्ति प्रत्यञ्चौ शुक्रामन्थिभ्याम् २० आश्राव्याध्वर्युः प्रातः प्रातः- मावस्य शुक्रवतो मन्थिवतो मधुश्चुत इन्द्राय सोमान्प्रस्थितान्प्रेष्य होतर्यज मध्यतःकारिणां चनसाध्वर्यवो वषट्कृतानुवषट्कृते जुहुत होतृकाणां चमसाध्वर्यवः सकृद्धुताँश्चमसान्शुक्रस्याभ्युन्नीयोपावर्तध्वमिति प्रेष्यति २१ यथाप्रेषितं चमसानाम् २२ शुक्रामन्थिनौ प्रतिनिगद्य होमौ २३ या प्रथमा सँस्कृतिरित्युभौ निगद्य तस्मा इन्द्राय सुतमाजुहोतेत्यध्वर्युः सर्वहुतं करोति ॥ तस्मै सूर्याय सुतमाजुहोतेति प्रतिप्रस्थाता २४ हुत्वा रुद्राय स्वाहेति शेषमुत्तरार्धपूर्वार्धे जुहोति २५ प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातुः प्र यजमानस्येति प्रेष्यति २६ प्रतिपरिक्रम्य यथास्थानं पात्रे सादयतः २७ पुनरभ्युन्नीतानामेकैकं ग्राहमाश्रावं प्रशास्तर्यज ब्रह्मन्यज पोतर्यज नेष्टर्यजा- ग्नीद्यजेति प्रेष्यति २८ वषट्कृतानुवषट्कृते हुत्वा हरति भक्षान् २९ अयाडग्नीदिति चेद्धोता पृछेद याडिति प्रत्याह ३० सोममक्षान्सदसि भक्षयन्ति वषट्कर्ता होमाभिषवकारी चमसिनश्चोपहूतोपह्वयस्वेत्युक्त्वोपहूता उपह्वय- ध्वमिति वा ३१ द्विदेवत्यान्भक्षयित्वा होता प्रयछति ३२ भक्षेहि माविश दीर्घायुत्वाय शंतनुत्वायैहि वसो पुरोवसो प्रियो मे हितो भवाश्विनोस्त्वा

बाहुभ्याँ सध्यासमिति प्रतिगृह्णाति यँयँ होता प्रयछति ३३ नृचक्षसं त्वा देव सोम सुचक्षा अवक्शेषमित्यवेक्षते ३४ हिन्व मे गात्रा हरिवो गणान्मे मा वितीतृषत् शिवो मे सप्त ऋषीनुपतिष्ठ मा मेऽवाङ्नाभिमतिगाः ॥ इति द्विरैन्द्रवायवं भक्षयतः प्राणेषूपनियम्य ३५ अव्यतिहारं चक्षुषोरुपनियम्य मैत्रावरुणं मन्द्रा विभूतिः केतुर्यज्ञिया वाग्जुषाणा सोमस्य पिबत्विति भक्षयतः ३६ सर्वत आश्विनं परिहारँ श्रोत्रयोरुपनियम्य प्रतिपर्याहृत्य मन्द्रा स्ववर्याच्यदितिरनाहतशीर्ष्णी वाग्जुषाणा सोमस्य पिबत्विति भक्षयतः ३७ होतृचमसे संपातमवनयति भक्षयित्वा भक्षयित्वा ३८ मा मा राजन्विबीभिषो मा मे हार्दिं द्विषा वधीः वृषणँ शुष्ममायुषे वर्चसे कृधि ॥ इति तंतं भक्षयित्वा हृदयदेशमारभ्य जपति ३९ नानवधायावसृजेदैन्द्रवायवे पुरोडाशवृगलं मैत्रावरुणे पयस्यां धाना आश्विने ४० दक्षिणस्य हविर्धानस्योत्तरस्या वर्तन्याः पश्चाद्द्विदेवत्यपात्राणि सादयति ४१ होत्रेऽवान्तरेडामवद्यति ४२ उपहूयमानायामसँस्पर्शयन्तश्चमसानुपोद्यछन्ति ४३ होत्रा समुद्यम्य समुपहूय वसुमद्गणस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसोऽग्निहुत इन्द्रपोतस्य मधुमत उपहूत उपहूतं भक्षयामीति चमसान्भक्षयन्ति ४४ शं नो भव हृद आ पीत इन्दो पितेव सोम सूनवे सुशेवः सखेव सख्य उरुशंम धीरः प्र ण आयुर्जीवसे सोम तारीः ॥ इति तंतं भक्षयित्वा हृदयदेशमारभ्य जपति ४५ आप्यायस्व सं ते पयांसीति भक्षशेषान् ४६ दक्षिणस्य हविर्धानस्य पश्चादक्षं नाराशँसचमसान्सादयन्ति ४७ उपविशत्यछावाको ऽग्रेण स्वं धिष्ण्यं बहिः सदसः ४८ तस्मै पुरोडाशवृगलं प्रदायाछावाक वदेत्यनुवाचयति ४९ उपो अस्मान्ब्राह्मणान्ब्राह्मणा ह्वयध्वमित्युच्यमाने पुण्यमयं ब्राह्मण उपहवकामो वदतीमँ होतरुपह्वयस्वेति प्रेष्यति ५० उन्नीयमानायानुब्रूहीत्यनुवाचयति ५१ उभयतः शुक्रमछावाकचमसमुन्नयति ५२ आश्राव्याछावाक यजेति प्रेष्यति ५३ वषट्कृतानुवषट्कृते हुत्वा हरति भक्षम् ५४ न तेन संभक्षयेद्यद्यस्मिन्नुपहवमिछेद्भक्षयेति ब्रूयात् ५५ व्याख्यातं भक्षणमाप्यायनं च ५६ अन्तरा नेष्टुश्चमसमाग्नीध्रस्य चाछावाकचमसँ सादयति ५७ आग्नीध्रे सवनीयान्भक्षयन्त्यन्तर्वेदि बहिर्वेदि मार्जयन्ते । बहिर्वेदि वा भक्षयित्वान्तर्वेदि मार्जयन्ते ५८ अनुसवनं ब्राह्मणाँस्तर्पयेति

प्रेष्यति ५९ १

ऋतुग्रहैः प्रचरतः १ उपयामगृहीतोऽसि मधवे त्वेतिप्रभृतयो ग्रहणाः २ सह प्रथमो गृह्णीतः । परिप्लवामुदुह्य मधवे त्वेत्यध्वर्युरुपयामगृहीतोऽसि सँसर्पोऽस्यँहस्पत्याय त्वेति प्रतिप्रस्थाता ३ आश्राव्य प्रेष्यत्यध्वर्युस्तस्य प्रैषे युगपज्जुहुतः ४ न ऋतुग्रहेष्वनुवषट्करोति ५ हुत्वा गृहीत्वा च प्रतिप्रस्थाता दक्षिणेनाध्वर्युमभिप्रयम्य पात्रँ हरति ६ नान्योऽन्यमभिप्रपद्येते ७ शेषे पूर्वस्योत्तरमभिपरिगृह्णीतः ८ पूर्वः प्रतिप्रस्थाता माधवाय त्वेति गृह्णाति । व्यत्यासमुत्तरैः । समानमाश्रावयतोः स्थानम् ९ ऋतुना प्रेष्येति षड्भिः प्रचरतो । यतो हुतं ततः पात्रे गृहीत्वा ऋतुभिः प्रेष्येति चतुर्भिर्यथादितस्तथा गृहीत्वा ऋतुना प्रेष्येति द्वाभ्याम् १० एकादशे प्रैषेऽध्वर्यू यजतमित्युक्ते तयोरन्यतरो मध्यमस्य परिधेः पश्चादुपविश्य ये३ यजामहेऽश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबताँ वौषडिति यजेदथ चेदृचा ये३ यजामहे अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता ऋतुना यज्ञवाहसा ॥ वौषडित्यनवानँ यजति ११ होतरेतद्यजेति यातिप्रेष्यत्युत्तमे प्रैषे यजमानस्य याज्यातिप्रैषो वा १२ सहोत्तमौ गृह्णीतस्तपस्याय त्वेति प्रतिप्रस्थाता सँसर्पेणाध्वर्युः १३ दक्षिणतः प्रतिप्रस्थातावतिष्ठते । तस्य प्रैषे युगपज्जुहुतः १४ हुत्वा व्यवनयतः १५ अध्वर्युः प्रतिप्रस्थाने सर्वमानयति १६ तस्याग्रं प्रतिप्रस्थाताध्वर्युपात्रे-ऽवनीयेन्द्राग्नी आगतँ सुतमिति प्रतिप्रस्थाताध्वर्युपात्र ऐन्द्राग्नं गृह्णात्येष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति १७ प्रतिप्रस्थानेनाध्वर्युर्भक्षँ हरति १८ वाग्देवी रोमस्य पिबत्विति भक्षयन्ति समुपहूय यथेज्यँ व्यतिहारम् १९ प्रसदसि पात्रमादधाति २० प्रतिप्रस्थाता सवनीयान्निर्वपति २१ यथा वैश्वदेवस्य स्तोत्रोपाकरणकाले हविष्कृदाहूयेत २२ अग्रेण होतारं बहिः सदसः प्राङ्मुखः प्रतिगरायोपविशति २३ अध्वर्यो शोँ३ सावो३मित्युच्यमाने शोँ३सावो दैवो३मिति प्रतिपर्यावर्तते २४ ऋतुपात्रमारभ्योर्ध्वस्तिष्ठन्सदोबिले समानस्वरँ होत्रा व्यवसानेषु प्रतिगृणात्योथा मोदैवेत्यप्रणुतेष्वोथा मोदै-वो३मिति प्रणुतेष्वृगन्तेषु च २५ यथा वा होता ब्रूयादाहूतः शोँ३सावो दैवो३मिति प्रत्याह्वयति २६ समाप्ते शस्त्रे ग्रहमादत्तेऽध्वर्युश्चमसाध्वर्यव-

श्चमसान् २७ आश्राव्योक्थशा यज सोमस्येति प्रेष्यति २८ वषट्कृतानुवषट्कृते जुहोति २९ चमसाध्वर्यवो द्विश्चमसाननु प्राङ्नयन्ति ३० वाग्देवी सोमस्य पिबत्वित्यैन्द्राग्नँ सर्वभक्षं भक्षयतः ३१ नराशँसपीतस्य सोम देव ते मतिविदः प्रातःसवनस्य गायत्रछन्दसः पितृपीतस्येति विकृतो भक्षमन्त्रः ३२ सिद्धमा सादनात् ३३ ऋतुपात्रे मार्जालीये प्रक्षाल्य यथास्थानँ सादयति ३४ ओमासश्चर्षणीधृत इति शुक्रपात्रे वैश्वदेवं गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति ३५ प्रतिप्रस्थाता द्रोणकलशं पूतभृत्यवनीय दशया परिमृज्य यथास्थानं न्युब्जति ३६ चतुर्होतारँ यजमानो जपति पुरस्तादाज्यानामिडायै हिङ्कुर्विति च ३७ दक्षिणेन होत्रीयं प्रस्तोत्रे दर्भौ प्रयछन्नुपावर्तध्वमभिसर्य यजमानेति स्तोत्रमुपाकरोति ३८ एवमत ऊर्ध्वँ स्तोत्राण्युपाकरोत्यन्यत्र पवमानाभ्याम् ३९ एषेत्युक्ते प्रतिगरायोपविशति । स व्याख्यातः ४० प्रौगँ शस्त्रं प्रतिगीर्य ग्रहादानप्रभृति समानमैन्द्राग्नेना भक्षणात् ४१ नराशँसपीतस्येति विकृतो भक्षमन्त्रः ४२ सिद्धमा सादनात् ४३ मार्जालीये प्रक्षाल्य पूतभृतोऽन्ते सादयन्ति यथास्थानं पात्रम् ४४ २

उक्थ्यविग्रहैः प्रचरतः १ उपयामगृहीतोऽसि मित्रावरुणाभ्यां त्वेति गृह्णात्युक्थ्यस्थाल्यास्तृतीयमुक्थ्यपात्र ॥ एष ते योनिर्मित्रावरुणाभ्यां त्वेति सादयति २ उपयामगृहीतोऽसि देवेभ्यस्त्वा देरायुवं गृह्णामि पुनर्हविरसीत्युक्थ्यस्थालीमभिमृशति ३ पूतभृतो मैत्रावरुणचमसमुख्यानुन्नयति ४ स्तुतशस्त्रे भवतः ५ मैत्रावरुणाय प्रतिगीर्य ग्रहमादत्तेऽध्वर्युश्चमसाध्वर्यवश्चमसान् ६ आश्राव्योक्थशा यज सोमानामिति प्रेष्यति ७ वषट्कृतानुवषट्कृते जुहोति चमसाध्वर्यवश्च ८ सद आलभ्य देवेभ्यस्त्वा देवायुवं पृणच्मीत्युक्थ्यपात्रेण मैत्रावरुणचमसे संपातमवनयति ९ वाग्देवी सोमस्य पिबत्विति भक्षयन्ति १० मार्जालीये प्रक्षाल्य यथास्थानं चमसान्सादयन्ति ११ प्रतिप्रस्थातोत्तराभ्यां प्रचरति १२ उपयामगृहीतोऽसीन्द्राय त्वेति गृह्णात्युक्थ्यस्थाल्या अर्धमुक्थ्यपात्र ॥ एष ते योनिरिन्द्राय त्वेति सादयति १३ तथैव पुनर्हविषं करोति १४ पूतभृतो ब्राह्मणाछँसिचमसमुख्यानुन्नयति १५ स्तुतशस्त्रे भवतः १६ ब्राह्मणाछँसी शँसति । तस्य चमसे संपातमवनय-

ति १७ समानमन्यत् १८ सवनमभ्यासृजति १९ ऋजीषम् कृष्णाजिने निदधाति २० वाससा राजानं ग्रावसूपावहरति २१ माध्यंदिनीयं कलश-माधवनीयेऽवनयति २२ उपयामगृहीतोऽसीन्द्राग्निभ्यां त्वेति गृह्णात्युक्थ्य-स्थाल्याः सर्वमुक्थ्यपात्र ॥ एष ते योनिरिन्द्राग्निभ्यां त्वेति सादयति २३ न पुनर्हविषं करोति २४ अछावाकचमसमुख्येषु सर्वं पूतभृतः २५ अछावाकाय प्रतिगीर्योक्थशा इति ब्रूयात्तस्य चमसे संपातमवनयति २६ समानमन्यत् २७ वसतीवरीणाँ होतृचमसं पूरयित्वा यथास्थानँ सादयति २८ अग्निः प्रातःसवनादिति सवनकरणिं जुहोति यस्ते द्रप्स स्कन्दति यस्ते अँशुर्बाहुच्युतो धिषणाया उपस्थात् अध्वर्योर्वा परि वा यः पवित्रात्तं ते जुहोमि मनसा वषट्कृतम् ॥ इति द्वितीयाम् २९ प्रशास्तः प्रसुवेति प्रेष्यति ३० प्रसूताः सर्पन्ति ३१ ३

माध्यंदिनाय सवनाय प्रसर्पन्ति १ निग्राभ्याः स्थेति यजमानं वाचयित्वा सोमोपनहनं ग्रावस्तुते प्रयछत्युन्नेत्रे च वसने २ अप्रेषितो ग्रावस्तोत्रिया अन्वाह ३ निर्यात्य राजानमभिषुणवन्ति ४ व्याख्यातोऽभिषवः ५ इहा इहेत्यभिषुणवन्ति ६ उत्तमस्य पर्यायस्य मध्यमे पर्याये बृहद्बृहदित्यभिषुणवन्ति ७ सिद्धमा शुक्रधारायाः ८ शुक्रामन्थिप्रभृतीन्गृह्णाति ९ य आग्रायणस्थाल्याँ सोमस्तँ होतृचमसेऽवनीयाधवनीयाच्चोदञ्चनेन ये देवा दिव्येकादश स्थेत्याग्रायणं तिसृभ्यो धाराभ्यो गृह्णात्युच्चैस्तराँ हिङ्करोति १० ऋतुपात्राभ्यां मरुत्वतीयौ गृह्णति इन्द्र मरुत्व इह पाहि सोममित्यध्वर्युर्जनिष्ठा उग्र इति प्रतिप्रस्थातैष ते योनिरिन्द्राय त्वा मरुत्वत इति सादयति ११ उक्थ्यं गृहीत्वातिपाव्य राजानं प्रपीड्य पवित्रँ सिद्धमा सर्पणात् १२ ऋजूदरा माध्यंदिनाय सवनाय प्रसर्पन्ति १३ उत्तरेण हविर्धाने पूर्वया द्वारा सदः प्रविश्य सदसि स्तुवन्ते १४ अनतिक्रामन्धिष्णयानध्वर्युरुपविशति १५ व्याख्यातँ संपावनं । तथोपाकरणं पवमानस्य १६ पञ्चहोतारँ यजमानो जपति पुरस्तान्माध्यंदिनस्य पवमानस्य ज्योतिषे हिङ्कुर्विति च ॥ सुपर्णोऽसि त्रिष्टुप्छन्दा अनु त्वारभे स्वस्ति मा संपारयेति च १७ स्तुतेऽग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशं अलंकुरु प्रतिप्रस्थातर्दधिघर्माय दध्युपकल्पयस्वेति

प्रेष्यति १८ व्याख्यातँ विहरणमुलपराजी च १९ वैष्णव्या पात्राणि संमृश्य दधिघर्मेण प्रचरन्ति यदि प्रवृञ्जन्ति २० सवनीयानामुद्वासनप्रभृति सिद्धमा संप्रैषात् २१ माध्यंदिनस्य सवनस्येन्द्राय पुरोडाशानामिति विकृतः संप्रैषः २२ सवनीयैः प्रचर्योन्नीयमानेभ्योऽनुब्रूहीत्यनुवाचयति २३ साछावाकचम-सानुन्नयति २४ सिद्धमा संप्रैषात् २५ माध्यंदिनस्य सवनस्य शुक्रवतो मन्थिवतो निष्केवल्यस्य भागस्येन्द्राय सोमान्प्रस्थितान्प्रेष्येति विकृतः संप्रैषः २६ सिद्धमा सँयाजनात् २७ पूर्वोऽछावाको यजत्याग्नीध्रात् २८ होत्रा समुद्यम्य समुपहूय रुद्रवद्गणस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुच्छन्दसोऽग्निहुत इन्द्रपीतस्येति विकृतो भक्षमन्त्रः २९ सिद्धमा सादनात् ३० आग्नीध्रे सवनीयान्भक्षयन्ति । तद्व्याख्यातम् ३१ ४

शालामुखीये दाक्षिणौ जुहोति १ हिरण्यं वद्ध्वा दर्भेणोच्यर्ति चतुर्गृही-तेऽवदधाति २ व्याख्यातं प्रछादनम् ३ उपसँयम्य दशाँ स्रुग्दण्ड उदु त्यं जातवेदसमिति जुहोति ॥ चित्रं देवानामिति द्वितीयाम् ४ तस्यां पुनर्गृहीत्वा द्यां गछ स्वर्गछेति हिरण्यमुद्धरति ५ दक्षिणाँ वेदिश्रोणिं प्रत्यवस्थितासु हिरण्यमाज्यं च धारयमाणो रूपँ वो रूपेणाभ्येमीति दक्षिणा अभ्येति ६ तुथो वो विश्ववेदा विभजत्विति विभजति । यावन्मध्यतःकारिभ्यस्त-स्यार्धमर्धिभ्यस्तृतीयं तृतीयिभ्यस्तुर्यं पादिभ्यः ७ मध्यतःकारिणो ब्रह्मोद्गाता होताध्वर्युस्तेषामर्धिनो ब्राह्मणाछँसी प्रस्तोता मैत्रावरुणः प्रतिप्रस्थाता तृतीयिन आग्नीध्रः प्रतिहर्ताछावाको नेष्टा पादिनः पोता सुब्रह्मण्यो ग्रावस्तुदुन्नेता ८ अजं ददात्यविं माषाँस्तिलान्कृतान्नँ वासोऽश्वँ हिरण्यं । गवाँ संख्या शतं द्वादशँ वापरिमिता वैकविँशत्यवरा ९ अपरार्धाद्धिरण्यपाणिर्दक्षिणा नयत्य-ग्रेण गार्हपत्यं जघनेन सद । आग्नीध्रभागमग्रतः सँहतानितरान् १० एतत्ते अग्ने राध इत्याग्रीध्रभागमनुमन्त्रयत्रे ११ दक्षिणतोऽवस्थितास्वयं नो अग्नि-रित्याग्नीध्रीये जुहोति ॥ वनेषु व्यन्तरिक्षमिति द्वितीयाँ यदि चक्रीवत्प्राजापत्यां तृतीयाँ यदि हस्तिनं पुरुषँ वा १२ ऋतस्य पथा प्रेतेत्यन्तरा चात्वालमाग्नीध्रं चोदीचीरुत्सृजति १३ ब्राह्मणमद्य ऋध्यासं पितृमन्तं पैतृमत्यमृषिमार्षेयँ सुधातुदक्षिणमिदं चन्द्रमिमाश्च भवते दक्षिणा ददामीत्यन्तर्वेदि तिष्ठन्नृत्विग्भ्यः

सहिरगया दक्षिणा ददात्यग्नीधे प्रथमं ततो मध्यतःकारिभ्योऽनुपूर्वं होतृकेभ्यश्चान्ततः प्रतिहर्त्रे १४ प्रासर्पकं दक्षिणापथेन नीत्वा सदस्यप्रथमेभ्यो दद्यादात्रेयाय ततो हिरगयम् १५ वि सवः पश्येति सदः हृप्रविश्य यजमानँ वाचयति १६ अस्मद्राता इति दक्षिणा अनुमन्त्रयते १७ चात्वाले कृष्णविषाणां म्प्रविध्यति १८ नोर्ध्वं मरुत्वतीयाभ्यां ददाति १९ येभ्योऽत्र न दद्यादनूबन्ध्यायै हुतायाँ वपायां तेभ्यो दद्यात् २० ५

मरुत्वतीयाभ्यां प्रचरतः १ इन्द्राय मरुत्वतेऽनुब्रूहीत्यनुवाचयति २ आश्रा- व्येन्द्राय मरुत्वते प्रेष्येति प्रचरति ३ वषट्कृते जुहुतः ४ पुनर्वषट्कृते हुत्वाव्यवनयतः ५ अध्वर्युः प्रतिप्रस्थाने सर्वमानयति । तस्याग्र प्रतिप्रस्थाताध्वर्युपात्रेऽवनयति ६ सजोषा इन्द्रेत्यध्वर्युः स्वस्मिन्पात्रे मरुत्वतीयं ग्रहं गृह्णात्येष ते योनिरिन्द्राय त्वा मरुत्वत इति सादयति ७ प्रतिप्रस्थानेनाध्वर्युर्भक्षँ हरति ८ वाग्देवी सोमस्य पिबत्विति भक्षयन्ति समुपहूय ९ प्रसदसि पात्रमादधाति १० प्रतिप्रस्थाता सवनीयान्निर्वपति सौम्यं च चरुम् ११ यथा माहेन्द्रस्य स्तोत्रोपाकरणकाले हविष्कृदाहूयेत १२ प्रतिगरायोपविशति । स व्याख्यातः १३ मरुत्वतीयँ शस्त्रं प्रतिगीर्य ग्रहादानप्रभृति समानमैन्द्राग्नेना भक्षणात् १४ नराशँसपीतस्य सोम देव ते मतिविदो माध्यंदिनस्य सवनस्य त्रिष्टुप्छन्दसः पितृपीतस्येति विकृतो भक्षमन्त्रः १५ सिद्धमा सादनात् १६ महं इन्द्रो नृवदिति शुक्रपात्रे माहेन्द्रं गृह्णात्येष ते योनिर्महेन्द्राय त्वेति सादयति १७ वैश्वदेवेन व्याख्यात- मोक्थ्यविग्रहेभ्योऽन्यद्याजमानात् १८ उपयामगृहीतोऽसीन्द्राय त्वेत्युक्थ्यो विगृह्यत ॥ एष ते योनिरिन्द्राय त्वेति सादयति १९ समानमन्यत् २० सवनमभ्यासृजति २१ ऋजीषं ग्रावसु निवपति २२ तार्तीयसवनिकं कलशमाघवनीयेऽवनयति २३ अछावाकचमसमुख्येषु सर्वं पूतभृतः २४ अछावाकाय प्रतिगीर्योक्थ्यँ वाचीति ब्रूयात् २५ विश्वे देवा मरुत इन्द्रो अस्मानस्मिन्द्वितीये सवने न जह्युः सुमेघसः प्रियमेषाँ वदन्तो वयँ स्याम पतयो रयीणाम् ॥ इति सवनकरणिं जुहोति । यो द्रप्सो अँशुः पतितः पृथिव्यां परिवापात्पुरोडाशात्करम्भात् धानासोमान्मन्थिन इन्द्रः शुक्रात्तं ते जुहोमि

मनसा वषट्कृतम् ॥ इति द्वितीयाम् २६ प्रशास्तः प्रसुवेति प्रेष्यति २७ प्रसूताः सर्पन्ति सर्पन्ति २८ ६

इति मानवसूत्रेऽग्निष्टोमे चतुर्थोऽध्यायः

तृतीयसवनाय प्रसर्पन्ति १ आदित्यग्रहं गृह्णात्यपिधाय हविर्धाने कदा चन स्तरीरसीत्यादित्यस्थाल्यास्तृतीयमादित्यपात्रे ॥ यज्ञो देवानामिति तस्मिँस्त-प्तातङ्क्यं दधि २ कदा चन प्रयुछसीत्यादित्यस्थाल्या अभिपूरयति ३ या दिव्या वृष्टिस्तया त्वा श्रीणामीति शीतातङ्क्येन दध्ना श्रीणाति ४ विवस्वन्नादित्यैष ते सोमपीथ इत्युपाँशुसवनेन पर्यासं मेक्षयति २ अपिधायोपनिष्क्रामति दर्भैः पाणिना च ६ अहं परस्तादिति यजमानोऽन्वारभते ७ आदित्येभ्यः प्रियेभ्यः प्रियघामभ्यः प्रियव्रतेभ्यो महः स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्योऽनुब्रूहीत्यनुवाचयति ८ आश्राव्यादित्येभ्यः प्रियेभ्यः प्रियधामभ्यः प्रियव्रतेभ्यो महः स्वसरस्य पतिभ्य उरोरन्तरिक्षस्याध्यक्षेभ्यः प्रेष्येति प्रचरति ९ प्रास्य दर्भानन्यत्रेक्समाण उन्नम्भयेति प्रतिनिगद्य वषट्कृते न सर्वं जुहोति १० अभिषोता-रोऽभिषुणुताग्नीदाशिरँ विनय प्रतिप्रस्थातर्य उपाँशुपात्रे ऽँशुस्तमृजीषे ऽप्यस्याभिषुत्योदञ्चँ हत्वाधवनीयै प्रस्कन्दयस्वेति प्रेष्यति ११ वसतीवरीभिरभिषुणवन्ति १२ पश्चादाग्नीध्रीयस्याशिरं मन्थति १३ पूतभृति पवित्रँ वितत्य शुक्रधाराँ संप्रगृह्णाति १४ अधि विपर्यस्य-त्याग्रायण-स्थालीमादित्यस्थालीमादित्यपात्रं च १५ आधवनीयाच्चोदञ्चनेन ये देवा दिव्येकादश स्थेत्याग्रायणं चतसृभ्यो धाराभ्यो गृह्णाति । सूच्चैस्तराँ हिङ्करोति १६ नाग्निष्टोमे तृतोयसवन उक्थ्यं गृह्णाति १७ यदि षोडश्युक्थ्यं गृहीत्वेन्द्रमिद्धरी वहत इत्याग्रायणात्षोडशिनं गृह्णाति १८ अषोडशिक उक्थ्यं गृहीत्वातिपाव्य राजानं प्रपीडच पवित्रँ सिद्धमा सर्पणात् १९ ऋजुदेहीयाः सर्पन्त्यार्भवं पवमानँ येन माध्यंदिनम् २० व्याख्यातँ संपावनं । तथोपाकरणं पवमानस्य २१ सप्तहोतारँ यजमानो जपति पुरस्तादार्भवस्य पवमानस्यामुषे हिङ्कर्विति च ॥ सखासि जगच्छन्दा अनु त्वारभे स्वस्ति मा संपारयेति च २२ स्तुते ऽग्नीदग्नीन्विहर बर्हिः स्तृणाहि पुरोडाशं अलंकुरु प्रतिप्रस्थातः पशुँ

सँवद्रस्वेति प्रैष्यति २३ व्याख्यातँ विहरणमुलपराजी च २४ वैष्णव्या पात्राणि संमृश्य प्रतिप्रस्थाता पत्नी च पूतभृति पवित्रँ वितत्याशीर्ना ऊर्जमित्याशिरमवनयतः २५ पशुना प्रचरति सँवादप्रभृतीडान्तेन २६ सवनीयानामुद्वासनप्रभृति सिद्धमा संप्रैषात् २७ तृतीयस्य सवनस्येन्द्राय पुरोडाशानामिति विकृतः संप्रैषः २८ सवनीयैः प्रचर्योन्नीयमानेभ्यो-ऽनुब्रूहीत्यनुवाचयति २९ साछावाकचमसानुन्नयति ३० सिद्धमा संप्रैषात् ३१ तृतीयस्य सवनस्य ऋभुमतो विभुमतो वाजवतो बृहस्पतिव्रतो विश्वदेव्यावतस्तीव्रं आशीर्वत इन्द्राय सोमान्प्रस्थितान्प्रेष्येति सिद्धँ यथा माध्यंदिने ३२ आदित्यवद्गणस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगच्छन्दसोऽग्निहुत इन्द्रपीतस्येति विकृतो भक्षमन्त्रः ३३ सिद्धमा सादनात् ३४ मार्जालीयदेशे प्राचीनाववीतिनः पुरोडाशपिण्डानणुमिश्रानत्र पितरो मादयध्वँ यथाभागमावषायध्वमिति पश्चात्प्रतिचमसं त्रीँस्त्रीन्पिण्डानुपास्यन्ति स्वँस्वं चमसं होतृचमसमध्र्वयवः ३५ विस्रँस्य प्राचीनाववीतानि यथास्थानं चमसान्सादयन्ति ३६ आग्नीध्रे सवनीयान्भक्षयन्ति । तद्व्याख्यातम् ३७ अन्तर्यामपात्रे सावित्रमाग्रायणाददब्धेभिः सवितरिति गृह्णाति ३८ असन्नो हूयते ३९ देवाय सवित्रेऽनुब्रूहीत्यनुवाचयति ४० आश्राव्य देवाय सवित्रे प्रेष्येति प्रवरति ४१ वषट्कृते न सव जुहोति ४२ सावित्रसंस्रवे पूतभृतो वैश्वदेवं गृह्णाति ४३ उपयामगृहीतोऽसि सुशर्मासि सुप्रतिष्ठान इति गृह्णात्येष ते योनिर्विश्वेभ्यस्त्वा देवेभ्य इति सादयति ४४ वैश्वदेवं प्रतिगृणाति ४५ एकया च दशभिश्चेत्युच्यमाने प्रतिप्रस्थाता द्विदेवत्यपात्राणि प्रक्षाल्य खरे सादयति ४६ प्र द्यावा यज्ञैः पृथिवी ऋतावृधेति द्यावापृथिवीयं । तस्मिन्मदा मोदैव मोदा मोदैवेति मद्वान्प्रतिगरः ४७ कृताकृतः सुरूपकृत्नुमूतय इतिप्रभृति समापद्यते प्रतिगरः ४८ समाप्ते शस्त्रे ग्रहादानप्रभृति समानमैन्द्राग्नेना भक्षणात् ४९ नराशँसपीतस्य सोम देव ते मतिविदस्तृतीयस्य सवनस्य जगच्छन्दसः पितृपीतस्येति विकृतो भक्षमन्त्रः ५० सिद्धमा सादनात् ५१ १

अभ्युदाहरति सौम्यम् १ आज्यस्यावदायापरेण स्रुग्दण्डान्दक्षिणातिक्रम्य दक्षिणं परिधिसंधिं प्रत्यक्स्थायाश्राव्य घृतस्य यजेति प्रेष्यति । दक्षिणार्धे

जुहोति २ अत एव तिष्ठन्प्राचीनाववीती सौम्यस्यावदायोदङ्ङतिक्रम्योत्तरं परिधिसंधिं प्रत्यवस्थायाश्राव्य सौम्यस्य यजेति प्रेष्यति । दक्षिणा तिष्ठन्मध्ये जुहोति ३ प्रतिपरिक्रम्य विस्रँस्य प्राचीनाववीतमाज्यस्यावदायोदङ्ङतिक्रम्योत्तरं परिधिसंधिं प्रत्यवस्थायाश्राव्य घृतस्य यजेति प्रेष्यत्युत्तरार्धे जुहोति ४ व्युदुह्य सौम्यमाज्यस्याभिपूरयति ५ सत्रा त एतद्यदु त इहेति यजमानोऽवेक्षते ६ यदि न परिपश्येद्यन्मे मनो यमं गतमिति जपेत् ७ अवेक्ष्योद्गातृभ्यः प्रयछति ८ दर्भमुष्टीनष्टौ शलाकोद्गाढान्कृत्वा प्रचरण्यामष्टगृहीतेनाध्यधि धिष्ण्याञ्ज्वलतो ध्रियमाणान्प्रत्यङ्ङासीन उपस्थानैर्व्याघारयति ९ उपाँशुपात्रे पात्नीवतमाग्रायणादुपयामगृहीतोऽसि बृहत्पतिसुतस्य त इति गृह्णाति १० अपन्नो हूयते ११ अग्ना३ पत्नीवानिति धिष्ण्यव्याघारणसंपातेन श्रीणाति १२ आश्राव्याग्नीत्पात्नीवतस्य यजेति प्रेष्यति १३ वषट्कृते न सर्वं जुहोति १४ भक्षमाग्नीध्राय प्रयछति १५ नेष्टरुपस्थमारुह्योदङ्ङवसृप्य पश्चान्नेष्ट्रीयस्य वाग्देवी सोमस्य पिबत्विति भक्षयति १६ होतृचमसमुख्या अग्निष्टोमचमसास्तेषु सर्वमुन्नयत्यग्निष्टोमे १७ अतिशँस्यादुक्थ्ये १८ होतृचमसे ध्रौवस्यावकाशं कृत्वाग्निष्टोमस्तोत्रमुपाकरोति । तस्य पुरस्तात्सप्तहोतारँ यजमानो जपति १९ आकर्णप्रावृताः स्तूयमाने सदस्यासीरन् २० प्रस्तुते पत्नी पान्नेजनं कलशमन्तरत ऊरुणा दक्षिणेन समुद्रं गन्धर्वेष्ठामित्युदञ्चं प्रवर्तयति २१ नेष्टा पत्नीमुद्गात्रा तिसृषु स्तोत्रियासूद्गीथं प्रति प्राक्प्रतिहाराद्वासी ते संदृशीति त्रिः समीक्षयति २२ अभ्यग्रमाग्निमारुतं प्रतिगृणाति । वियतमापोहिष्ठीयं । तस्मिन्होतारमन्वारभन्ते २३ स्वादुष्किलायमितिप्रभृति स्वादुष्किलीयं । तस्मिन्मद्वत्प्रतिगृणाति २४ ययोरोजसा स्कभिता रजाँसीतिप्रभृति समापद्यते प्रतिगरः २५ एवा न इन्द्रो मघवा विरप्शीति परिधानीया । तस्याः पुनरुक्तेऽर्धर्चे प्रतिप्रस्थाता प्रत्यङ्मुख ऊर्ध्वस्तिष्ठन्नन्वारब्धे यजमाने वाचयन्ध्रुवं ध्रुवेणेति होतृचमसे ध्रुवमवनयति स्वयंभूरसि श्रेष्ठो रश्मिरिति चैवमहँ विश्वदर्शतो भूयासमित्यन्तेन २६ उत्तमँ शस्त्रं प्रतिगीर्योक्थँ वाचीन्द्रायेति ब्रूयात् २७ होतृचमसमादत्तेऽध्वर्युश्चमसाध्वर्यवश्चमसान् २८ आश्राव्योक्थशा यज सोमानामिति प्रेष्यति २९ वषट्कृतानुवषट्कृते जुहोति चमसा-

ध्वर्यवश्च ३० एवमत ऊर्ध्वं प्रैषः सोमानाँ होमश्च ३१ वाग्देवी सोमस्य पिबत्विति सर्वभक्षान्भक्षयन्ति ३२ मार्जालीये प्रक्षाल्य चात्वालान्ते साद- यन्त्यग्निष्टोमे । पूतभृतोऽन्ते यद्युक्थ्यः ३३ २

यद्युक्थ्य उक्थ्यो विगृह्यत उपयामगृहीतोऽसीन्द्रावरुणाभ्यां त्वेति प्रथममुप- यामगृहीतो ऽसीन्द्राबृहस्पतिभ्यां त्वेति द्वितीयमुपयामगृहीतोऽसीन्द्राविष्णु- भ्यां त्वेति तृतीयम् १ समानमन्यत् २ सर्वमुन्नयत्युक्थ्ये ३ अतिशँस्या- त्षोडशिनि ४ षोडशिचमसेषु सर्वमुन्नयति ५ अतिशँस्यादतिरात्रे ६ समयाध्युषिते सूर्ये दर्भाभ्याँ हिरण्येन चैन्द्रँ सहोऽसर्ज्युपावर्तध्वमभिसर्प यजमानेति षोडशिनि स्तोत्रमुपाकरोति ७ प्रोथन्नश्वः श्याव उपतिष्ठते ८ स्तोत्रापवर्ग उद्गात्रेऽश्वतरीं ददाति ९ शिक्षयः प्रतिगरस्तार्तीयसवनिकः १० अत ऊर्ध्वं भक्षमन्त्रोऽनुष्टुप्छन्दसोऽग्निहुत इन्द्रहरिवत्पीतस्येति विकृतः षो- डशिनि ११ यद्यषोडशिकोऽतिरात्र उक्थ्यैः प्रचर्यास्तमिते रात्रिपर्यायेण प्रचरति १२ चत्वारश्चमसगणाः स्तुतशस्त्रवन्तः । तेषाँ होतुः प्रथमस्ततो मैत्रावरुणस्य ब्राह्मणाछँसिनोऽछावाकस्य च १३ उपयामगृहीतोऽसीन्द्राय त्वाभिशर्वराय जुष्टं गृह्णामीति मुख्यंमुख्यं चमसमुन्नयति १४ अनुष्ट- प्छन्दसोऽग्निहुत इन्द्राभिशर्वरपीतस्येति विकृतो भक्षमन्त्रः १५ एवं द्वितीयः पर्यायो निशायां महारात्रे तृतीयः १६ होतृचमसमुख्याः संधिचमसास्तेषु सर्वमुन्नयत्यतिरात्रे १७ अतिशँस्यादप्तोर्याम्णि १८ उपाकृते स्तोत्रे प्रतिप्र- स्थाताश्विनं द्विकपालं तूष्णीमुपचरितँ सँस्करोति १९ महदाश्विनं प्रतिगृणाति । परँ सहस्राच्छंसत्याक्रमणादुदिते सौर्याणि २० समाप्ते शस्त्रे प्रतिप्र- स्थाताश्विनँ सकृत्सर्वमवद्यति २१ होतृचमसमादत्तेऽध्वर्युश्चमसाध्वर्यव- श्चमसान् २२ अश्विभ्यां तिरोऽह्न्यानाँ सोमानामनुब्रूहीत्यनुवाचयति २३ आश्राव्याश्विभ्यां तिरोऽह्न्यान्सोमान्प्रस्थितान्प्रेष्येति प्रचरति २४ पूर्वस्मिन्व- षट्कारे प्रतिप्रस्थाताश्विनँ सर्वहुतं करोति २५ पङ्क्तिश्छन्दसोऽग्निहुतोऽश्विपी- तस्येति विकृतो भक्षमन्त्रः २६ अप्तोर्यामा यथैको रात्रिपर्यायः २७ तूष्णीं मुख्यानुन्नयति २८ अतिछन्दाश्छन्दसोऽग्निहुतः प्रजापतिपीतस्येति विकृतो भक्षमन्त्रः २९ सँस्थाचमसाँश्चात्वालान्ते सादयन्ति ३० ३

आनुयाजिकीप्रभृति सिद्धमा स्रुचाँ विमोचनात् १ उन्नेता द्रोणकलशे हारिय- ोजनमाग्रायणादुपयामगृहीतोऽसि हरिरसि हारियोजन इति सर्वं गृह्णाति २ हर्योर्धाना हरिवतीरिति घानाभिः श्रीणाति ३ उन्नेता द्रोणकलशँ शिरस्यव- धायेन्द्राय हरिवते धानासोमानामनुब्रूहीत्यनुवाचयति ४ आश्राव्येन्द्राय हरिवते धानासोमान्प्रस्थितान्प्रेष्येति विकटीभूय प्रचरति ५ वषट्कृता- नुवषट्कृते जुहोति ६ व्युन्मर्शँ हारियोजनँ सर्वे भक्षयन्तश्चुश्चूषाकारं धानाः संदश्य रय्यैत्वा पोषाय त्वेत्युत्तरवेद्यामुपवपन्ति ७ देवकृतस्यैन- सोऽवयजनमसि पितृकृतस्यैनसोऽवयजनमसि मनुष्यकृतस्यैनसोऽवयजन- मस्यात्मकृतस्यैनसोऽवयजनमस्यन्यकृतस्यैनसोऽवयजनमस्येनस एनसो- ऽवयजनमसि स्वाहेत्याहवनीये षट्षडयूपशकलान्यभ्यादधते ८ यद्वो देवाश्चकृम जिह्वया गुरु मनसो वा प्रयुती देवहेडनम् अरावा यो नो अभि दुछुनायते तस्मिँस्तदेनो वसवो निधेतन ॥ इत्याहवनीयमुपतिष्ठन्ते ९ दूर्वाश्चमसेषु संप्लवंप्लावमप्सु धौतस्य ते देव सोमेत्यवध्रेण भक्षयन्ति १० स्वधा पित्रे स्वधा पितामहाय स्वधा प्रपितामहायेति बर्हिष्यधि चात्वालं प्रति चमसं निनयन्ति ११ समुद्रं व प्रहिणोमि अछायँ वो मरुतः श्लोक एत्वच्छा विष्णुं निषिक्तपामवोभिः उत प्रजायै गृणते वयो धुर्यूयं पात स्वस्तिभिः सदा नः ॥ इति निनीता अनुमन्त्रयते १२ महा कवी युवाना सत्यादा धर्मणस्परि सत्यस्य धर्मणा वि सख्यानि विसृजावहै ॥ इति दक्षिणत आहवनीयस्य सख्यानि विसृजन्ते १३ दधिक्राव्णो अकारिषमित्याग्नीध्रे दधि भक्षयन्ति १४ पत्नीसँयाजप्रभृति सिद्धमा समिष्टयजुभ्यः १५ नवकृत्वो ध्रुवामाप्याय्य धाता रातिरित्येतेन संततं नव समिष्टयजूँषि जुहोति १६ इदं तृतीयँ सवनं कवीनामृतेन ये चमसमैरयन्त सौधन्वना अमृतमानशानाः स्विष्टं नोऽभि वस्यो नयन्तु ॥ इति सवनकरणिं जुहोति ॥ द्रप्सश्चस्कन्देति द्वितीयाम् १७ वारुणमेककपालं निर्वपति १८ सिद्धमोद्वासनात् १९ आयुर्दा देव जरसँ वृणान् इत्यभिजुहोति २० उपसृजन्धरुणं मात्रे मातरं धरुणो धयन् राय- स्पोषमिषमूर्जमस्मासु दीधरत् ॥ इत्योदुम्बरीमुत्खनत्युद्गाता वा २१ चात्वालेऽवभृथाय समायन्ति २२ औदुम्बरीमषिषवणफलके चासन्द्या- मादधाति सोमलिप्तानि चान्यत्सोमस्थालीभ्यः २३ अभूद्देवः सविता वन्द्यो

नु न इदानीमह्न उपवाच्यो नृभिः वि यो रत्ना भजति मानवेभ्यः श्रेष्ठं नो अत्र द्रविणँ यथा दधत् ॥ आ शरीरं पयसा परादादन्यदन्यद्भवति रूपमस्य तस्मिन्वयमुपहूतास्तव स्मा नो वीरँ वहता जायमानाः ॥ यत्ते ग्राव्णा विछिन्दत्सोम राजन्ध्रुवमङ्गं प्रियँ यत्तनूस्ते तत्संधत्स्वोत रोहयस्व विश्वैर्वि-श्वाङ्गैः सह संभवामि ॥ मा नः सोम ह्वरितो विह्वरस्त्वं मा नः परमधनं मा रजो नैः मा नो अन्धे तमस्यन्तराधान्मा नो रुद्रासो अधिगुर्वधे नु ॥ सुचक्षाः सोम उत सुश्रुदस्तु अँशुश्चास्य पुनरापीनो अस्तु स नो रयिमिह ग्रहेषु दधातूर्जा सँरब्धा इरया मदेम ॥ इत्येताभिर्ऋजीषमधिषवणे दध्नाभिजुहोति २४ उद्गातः साम गायेति प्रेष्यति प्रस्तोतरिति वा २५ तस्य सर्वे निधनमुपयन्ति । समयार्धे द्वितीयं प्राप्य तृतीयम् २६ वारुणप्रघासिकोऽवभृथः २७ एकक-पालेन वरुणँ यजत्याशयेनाग्नीवरुणौ २८ ऋजीषँ स्रुच्यवधाय समुद्रे ते हृदयमप्स्वन्तरिति सह स्रुचोपमारयति २९ अवभृथ निचुङ्कुणेत्यासन्दीं प्रकिरति सोमलिप्तानि च ३० उत्प्लुतमृजीषमप्सु धौतस्य ते देव सोमेत्यवध्रेण भक्षयन्ति ३१ आत्यदेशे निगृह्णाति ३२ प्रियतमाय कृष्णाजिनं प्रयछति । तदधि पेषणं कुर्वन्ति ३३ विचृतो वरुनस्य पाश इति मेखलाँ विष्यति वसनं च । तूष्णीं पत्नी योक्त्रं जालं च ३४ अवभृथे स्नातावन्योऽन्यस्य पृष्ठं प्रक्षालयतः ३५ सोमोपनहनँ यजमानः परिधत्ते पर्याणहनं पत्नी । ते उदवसानीयायां दक्षिणाकालेऽध्वर्यवे दत्तः ३६ उन्नेतर्वसीय इत्याहोन्नेतारँ यजमानः ३७ उदुत्ते मधुमत्तमा गिर इत्युन्नेता प्रक्रमयति ३८ व्याख्यातं प्रत्यसनं मार्जनं च ३९ अपाम सोमममृता अभूमागन्म ज्योतिरविदाम देवान् किं नूनमस्मान्कृणवदरातिः किमु धूर्तिरमृत मर्त्यस्य ॥ इति जपन्ति ४० उन्नेतारं पुरस्कृत्यानपेक्षमाणाः प्रत्यायन्ति । तद्व्याख्यातम् ४१ ४

प्रायणीयेनोदयनीयो व्याख्यातः १ निष्काषे प्रायणीयस्योदयनीयमनुनिर्वपति २ शालामुखीये प्रचरति ३ प्रागदितेः पथ्याँ स्वस्तिं पूर्वार्धे यजति ४ अनूबन्ध्यायै वेदं निदधाति ५ पाशुबन्धिकमिध्माबर्हिः संनह्यति ६ मैत्रावरुणीँ वशामनूबन्ध्यामालभते ७ छागकाल उस्राया इति संप्रैषः ८ सिद्धमा वपाया होमात् ९ हुतायाँ वपायां चात्वाले मार्जयित्वा दक्षिणस्याँ

वेदिश्रोणौ परिश्रिते केशश्मश्रु यजमानो वापयते १० पशुपुरोडाशमनु देविकाहवींषि निर्वपत्यनुमत्यै चरू राकायै सिनीवाल्यै कुह्वै धात्रे द्वादशकपालँ । सोमस्थालीषु श्रपयति ११ सिद्धमा प्रचरणात् १२ पशुपुरोडाशेन प्रचर्योपाँशु देविकाहविर्भिः प्रचरति १३ एषोऽन्वयने कल्पः १४ पशुपुरोडाशस्य देविकाहविषां च समवदायानिरुक्तेन स्विष्टकृता प्रचरति १५ सिद्धः पशुबन्धः । पयस्या वा १६ हविर्धानयोः प्रथमकृता-न्ग्रन्थीन्विस्रँस्योदीची प्रवर्तयन्ति पूर्वार्धेनान्यदाहवनीयस्य पश्चार्धेनान्यत् १७ यत्कुसीदमप्रतीतं मयेह येन यमस्य निधिना चरावः एतत्तदग्ने अनृणो भवामि जीवन्नेव प्रतिदत्ते ददामि ॥ इत्याहवनीयाद्यजमानो वेदिं पर्योषति १८ विश्लोक विश्वदाव्ये त्वा संजुहोमि स्वाहेति प्रदाव्ये यजमानः सक्त्वञ्जलिं जुहोति १९ अध्वादेकोऽद्धादेको जुतादेकोऽहुतादेकः कृतादेकः कृताकृतादेकः सनादेकः सनासनादेकस्ते नः कृणवन्तु भेषजँ सदः सहो वरेण्यमिति प्रदाव्ये यजमान उपतिष्ठते २० एतँ सधस्थ परि ते ददामि यमावहाच्छेवधिं जातवेदाः अन्वागन्ता यज्ञपतिर्वो अत्र तँ स्म जानीत परमे व्योमन् ॥ जानीतादेनं परमे व्योमन्देवाः सधस्था विद रूपमस्य य आगछात्पथिभिर्देवयानैरिष्टापूर्ते कृणुतादाविरस्मात् ॥ इति यजमानः परिददाति २१ अनृणा अस्मिन्ननृणाः परस्मिँस्तृतीये लोके अनृणाः स्याम ये देवयानाः पितृयाणाश्च लोकाः सर्वाँल्लोकाननृणाः संचरेमहि ॥ इति जपति यजमानः २२ समारोपयत्यपरावग्नी । यदि गतश्रीः शालामुखीयं च २३ उदङ्ङुदवसायारणिभ्यामग्निं मथि-त्वोदवसानीयामिष्टिं निर्वपति २४ आग्नेयमेव पञ्चकपालँ विभक्तीः प्रया-जानुयाजेष्वाग्नेयावाज्यभागौ २५ अनड्वान्दक्षिणा २६ अपि वा वैष्णवीं पूर्णाहुतिं हुत्वा २७ अग्निरजहितः प्रैतु प्रथमो यज्ञियानाम् अवसानं मेऽवसानपतिर्विन्दत् । दीदिवाँसं त्वा वयमन्वागमेमहि ॥ इति यजमानो विहारं पुरस्कृत्य गृहानागछत्यागछति २८ ५

इति मानवसूत्रेऽग्निष्टोमे पञ्चमोऽध्यायः

इति मानवसूत्रेऽग्निष्टोमः समाप्तः

ब्रह्मा प्रायश्चित्तानि स्रुवेण जुहोत्यृक्तो भ्रेषे भूः स्वाहेति गार्हपत्ये यजुष्टो भुवः स्वाहेति दक्षिणाग्नौ सामतः स्वः स्वाहेत्याहवनीये सर्वतो भूर्भुवः स्वः स्वाहेत्याहवनीय एव १ दुष्टमपोऽभ्यवहरेदथ पात्राणि परिमृज्याल्लो हं निर्लिखेद्दारुमयं निष्टपेन्मार्तिकमद्भिः सौवर्णँ राजतम् २ द्रव्यापचारे सामान्यँ यज्ञियं प्रतिनिदध्यात् ३ कर्मान्तरितं कुर्यात्सँस्कारान्तरे प्रायश्चित्तमेव जुहुयात् ४ द्रव्यावृत्तौ सहमन्त्रमावर्तयेत्तूष्णीँ वा ५ देवतावदानयाज्यानुवाक्याहवि-र्मन्त्रकर्मविपर्यासेऽनाम्नातप्रायश्चित्तानां चापदि त्वं नो अग्ने स त्वं नो अग्ने अयाश्चाग्नेऽसीत्येताभिर्जुहुयाद्व्याहृतिभिश्चाथवा व्याहृतिभिरेव । होमकालेऽपि सर्वत्रानाम्नातप्रायश्चित्तेषु व्याहृतिभिरेव जुहुयात् ६ अकाले वाचँ विसृज्य वैष्णवीं निगद्य पुनर्यछेत् ७ व्रतोपेतस्य चेदाहवनीयोऽनुगछेत्प्रणीते मनसा व्रतमुपेत्य भूरित्युपतिष्ठेत ८ यदि वत्सा अपाकृता धयेयुर्वायव्या यवाग्वा प्रचर्य प्रातर्दोहेन प्रचरेद्यदि प्रातर्दोहेऽपरँ वायव्या ९ यदि सायंदोहमपहरे-द्दुष्येद्वा प्रातर्दोहं द्वैधं दोहयित्वार्धमातच्य प्रचरेत् १० यदि सायंदोह आर्तिमि-यादिन्द्राय व्रीहीन्निर्वपेच्छ्वो भूते तेष्वनुनिर्वपेत् ११ यदि प्रातर्दोह ऐन्द्रं पुरोडाशँ यद्युभावैन्द्रं पञ्चशरावमोदनं पचेदाज्येनाग्निं प्रथमँ यजेत १२ हीनेष्वार्तिगते वा वत्सानपाकृत्य पुनर्यजेत १३ यस्य सांनाय्यं चन्द्रमा अभ्युदियाद्वत्सान्प्रतिनुदेत् १४ सायंदोहो हविरातञ्चनं तद्व्रतो यथाकालं यजेत १५ व्रतमनुत्सहमानस्याभ्युदितेष्टिर्निरुप्तेषु च वत्सानपाकृत्य पुनर्यजेत १६ यदि हवीँष्यपहरेयुर्दुष्येयुर्वाज्येन सँस्थाप्य पुनर्यजेत १७ यदि हवींषि मुह्येयुः पात्र्याँ समधा विभज्यानुपूर्वेण प्रचरेत् १८ सर्वस्कन्ने नष्टे दुष्टे वा यथापूर्वं पुनः सँस्करणम् १९ देवाञ्जनमगन्यज्ञ इति स्कन्नमभिमन्त्र्यापो निनयेत् २० आज्ये स्कन्ने ददात्यनुत्पूते चित्रमुत्पूयमाने प्राण्युत्पूते वरम् २१ दुःशृतयोरवदानमात्रे सुशृतेन प्रायश्चित्तं । तथा क्षामयोः २२ अदक्षिणेनेष्ट्वोर्वराँ समृद्धां दद्यात् २३ यदि कपालं भिद्येत गायत्र्या त्वा शताक्षरया संदधामीति संधानकरैः शुचिद्रव्यैः संधायाथैतत्कपालं धाता धातुः पितुः पिताभिन्नो धर्मो विश्वायुर्यतो जातं तदप्यगात्स्वाहेत्यप्सु प्रहरेदथान्यत्कपालमाहृत्य सादनाभिमर्शनप्रोक्षणादि कृत्वा पूर्वयुक्तेषु कपालेष्वपिसृजेत् । उपहितस्य भेदे तु तस्य संधानादि पूर्ववत्कृत्वान्यत्सँस्कृत्योपहितं कपालमुपधानकाले

येन मन्त्रेणोपहितम् तेनैवोपदध्यात्तत्स्थाने २४ यदि कपालं नश्येद्ब्राह्मण-व्याख्यातं धाता धातुः पितुः पितानष्टो धर्म इति नष्टाधिगतमप्सु प्रहृत्य नमस्ते रुद्रायते नमोऽस्तु परायते नमो यत्र निषीदसीति चाभिमन्त्रयेत २५ यदि प्राक्प्रयाजेभ्यो बहिष्परिध्यङ्गारः स्कन्देत्तमभिमन्त्रयेताध्वर्युं मा हिँसीर्यज्ञं मा हिँसीरिति पुरस्ताद्ब्रह्माणं मा हिँसीः प्रजां मा हिँसीरिति दक्षिनतो होतारं मा हिँसीः पत्नीं मा हिंसीरिति पश्चादाग्नीध्रं मा हिँसी पशून्मा हिँसीरित्युत्तरतो ॥ यजमानं मा हिँसीरिति सर्वत्रानुषजति २६ स्रुवबुध्नेनाक्त्वा आहं यज्ञं दधे निर्ऋतेरुपस्थात्तं देवेषु परिददामि विद्वान् सुप्रजास्त्वँ शतँ हि मामदन्त इह नो देवा मयि शर्म यछत ॥ इत्यादत्ते २७ सहस्रशृङ्गो वृषभो जातवेदा घृताहुतः स्तोमपृष्ठः सुवीरः मा मा हासीर्नाथितो न त्वा जहामि गोपोषं च नो वीरपोषं च धेहि ॥ मा नो महान्तमुत मा नो अर्भकं मा न उक्षन्तमुत मा न उक्षितम् मा नो वधीः पितरं मोत मातरं मा नः प्रियास्तन्वो रुद्र रीरिषः ॥ इत्यनुप्रहरति २८ त्वं नो अग्ने स त्वं नो अग्ने सोमानँ स्वरनँ वृषभं चर्षणीनाँ विश्वरूपमदाभ्यं । बृहस्पतिँ वरेरायं ॥ उदुत्तमँ वरुण पाशमस्मय् उदुत्तमं मुमुग्धि मद्वि पांशं मध्यमं चृत । अवाधमानि जीवसे ॥ ।इति षड्भिरभिजुहोति २९ यद्यनभिनिरुप्तामावाहयेद्यथावाहितमाज्येनोपाँशु यजेत । भागिनीं चेन्नावाहयेदुपोत्थायावाहयेत् ३० यदि बहिष्परिध्याहुतिः स्कन्देदग्नीधं ब्रूयादेताँ संकुष्य जुहुधीति । स यथावदानँ संपाद्य वषट्कृते मध्ये पाणिना जुहोति । तस्मै पूर्णपात्रं दद्यात् ३१ भूपतये स्वाहा भुवनपतये स्वाहा भूतानां पतये स्वाहेति बहिष्परिधि स्कन्नमभिमन्त्रयत्रे ३२ कालातिपत्तौ पाथिकृत्यनागते च ३३ यदि प्राङ्निर्वपणात्पौर्णमास्याममावास्यायाँ वा कालप्रवृत्तिँ स्पर्शयेदाग्नेयमष्टाकपालं पथिकृता व्यञ्जयेत् ३४ उत्सृष्टे चेद्ब्राह्मौदनिके सहाग्निः प्रयायादनुगछेत्कालँ वातिनयेत्पुनर्ब्रह्मौदनं पक्त्वा-नक्ताः समधि आदध्यात् ३५ १

अग्निहोत्राय चेदुपसृष्टा निषीदेत् यस्माद्भीता निषीदसि ततो नो अभयं कृधि पशूनस्माकं मा हिँसीर्नमो रुद्राय मीढुषे ॥ इत्यभिमन्त्रयते उदस्थाद्देव्यदि-तिरायुर्यज्ञपतावधात् इन्द्राय कृरवती भागं मित्राय वरुणाय च ॥

इत्युत्थाप्योदपात्रमूधसि मुखे चोपगृह्णीयाद्यस्यान्नं नाद्यात्तस्मै तां दद्यात् १ अग्निहोत्रं चेत्प्रागधिश्रयणात्स्कन्देत्समुद्रँ वः प्रहिणोमीत्यप उपनिनीय यदद्य दुग्धं पृथिवीमभक्त यदोषधीरत्यसृपद्यदापः पयः पृथिव्यां पय ओषधीषु पयो अघ्न्यासु पयो वत्सेषु पयो गृहेषु पयोऽस्तु तन्नः ॥ इत्यभिमन्त्रयते २ यदि दुह्यमानावभिन्द्यादन्यामार्यकृतीं प्रक्षाल्य पुनर्दोहयेत् ३ यद्यधिश्रितँ स्कन्दे- दिति व्याख्यातँ ॥ वारुणीं निगद्य वारुणयाज्यं जुहुयात् ४ यदि प्राचीनं ह्रियमाणँ स्कन्देत्प्रजापतेर्विश्वभृति तन्वाँ हुतमसि स्वाहेत्यभिमृशेच्छ्वा- वलीढवच्च निनयेत् ५ यद्यधिश्रितँ शिरशिरायत्स्यात्सँमोषामुमिति ब्रूयाद्यं द्विष्यात् ६ विष्यणं मध्यमपर्नेन द्यावापृथिव्ययचन्तिःपरिध्यवनयेत्की टावपन्नं प्राजापत्यर्चा वल्मीकवपायामवनीय भूरित्युपतिष्ठेत । विष्यणँ वा वल्मीकवपायां कीटावपन्नमन्तःपरिधि ७ अववृष्टे मित्रो जनान्यातयति ब्रुवाणो मित्रो दाधार पृथिवीमुत द्याम् मित्रः कृष्टीरनिमिषाभिचष्टे मित्राय हव्यं घृतवज्जुहोत ॥ इति पूर्वामाहुतिं जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् ८ यदि पूर्वस्याँ हुतायामाहवनीयोऽनुगछेदग्निर्दारौ दारावग्निरिति हिरण्यं निधायोत्तरां जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् ९ यदि पूर्वस्याँ हुतायाँ स्कन्देत् यत्र वेत्थ वनस्पते देवानां गुह्या नामानि । तत्र हव्यानि गामय ॥ इति समिधमाधायोत्तरां जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् १० यदि रुद्रः पशूनभिमन्येत द्वयोर्गवोः स्थाल्या दोहनेन च दोहयित्वा समानीय सजूर्जातवेद इति पूर्वामाहुतिं जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रं जुहुयात् ११ यदि सप्ताहमतिशमायेताग्ने दुःशीर्ततन इति पुरस्ताज्जुहुयादन्यां दुग्ध्वाथ पुनरग्निहोत्रम् जुहुयाद्यदि तदतिशमायेत द्वादश रात्रीः सायँसायमाज्यं जुहुयात् १२ यदि रुद्रः प्रजा अभिशमयेतोत्तरपूर्वस्यां दिशि शतरुद्रियं जपँश्चङ्क्रम्येत १३ यस्याग्निमनुद्धृतँ सूर्योऽभिनिम्रोचेदुन्नीतेऽग्निहोत्रे ब्राह्मणो बहुविदुद्धरेद्धिरण्यं बद्ध्वा दर्भेनाग्रतो हरेत्पश्चादग्निहोत्रेणान्वियाद्वरो दक्षिणा १४ अनुद्धृतं चेदभ्युदियाद्व्याख्यातं प्रणयनं । चतुर्गृहीतमाज्यमग्रतो हरेदुषाः केतुना जुषताँ स्वाहेति पुरस्तात्प्रत्यङ्मुख आज्यं जुहुयादुपसाद्या तमितोरासीता होमात् १५ यस्योभा अनुगता इति व्याख्यातम् १६ २

यस्याहुतेऽग्निहोत्रे पूर्वोऽग्निरनुगछेदग्निना च सहाग्निहोत्रेण चोद्द्रवेदित एव प्रथमं जज्ञ इत्युद्धृतमभिमन्त्रयत ॥ इषे राये रमस्वेत्याधास्यमाने सम्राडसीत्यादधाति ॥ सारस्वतौ त्वोत्सौ प्रावतामित्याहितँ । हुतेऽग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपेद्वारुणँ यवमयं चरुम् १ यस्याहुतेऽग्निहोत्रेऽपरोऽग्निरनुगछेदनुगमय्य पूर्वमपरस्मान्मथित्वा प्रणयेद्यदि त्वरेत तत एव प्राञ्चमुद्धृत्य दक्षिणाग्निमन्वानीय सायंप्रातर्जुहुयाच्छ्वोभूतेऽग्निँ समारोप्य मथित्वाग्नये तपस्वतं जनद्वते पाकवतेऽष्टाकपालं निर्वपेत् २ सर्वानुगमेषु च यो अग्निं देववीतये हविष्मं आविवासति । तस्मै पावक मृडय ॥ इत्येतया सद्यः पूर्णाहुतिं जुहुयात् ३ यस्याग्ना अग्निमभ्युद्धरेयुर्भवतं नः समनसावित्यभिमन्त्र्याग्नये ऽग्निमतेऽष्टाकपालं निर्वपेत् ४ सायमग्निहोत्रस्य चेत्कालोऽतिपद्येत दोषा वस्तोर्नमः स्वाहेति पूर्वस्यामाहुतावन्ततोऽनुषजेत् ५ प्रातरग्निहोत्रं चेदभ्युदियादन्वग्निरुषसामग्रमक्शदित्युन्नीतमभिमन्त्रयत आहवनीयँ यजमान इहैव क्षेम्य एधि मा प्रहासीर्माममुमिति नाम गृह्णात्यामुष्यायणमिति गोत्रं ॥ प्रातर्वस्तोर्नमः स्वाहेति पूर्वस्यामाहुतावन्ततोऽनुषजेद्धुते मैत्रं चरुं निर्वपेत्सौर्यमेककपालमपि वेन्धानौ दंपती वाग्यतावनश्नन्तौ सर्वाह्णमुपासीयातां । द्वयोर्गवोः सायमग्निहोत्रं जुहुयाच्छ्वो भूतेऽग्नये व्रतपतयेऽष्टाकपालं निर्वपेत् ६
३

यद्यर्वाक्शम्याप्रासादग्निरपक्षायेत् इदं त एकं पर ऊ त एकं तृतीयेन ज्योतिषा सँविशस्व इति सर्वँ संभृत्याहरति । सँवेशनस्तन्वे चारुरेधि प्रियो देवानां परमे जनित्रे ॥ इति निवपति १ यदि परस्तरमितरावन्वानीय सायंप्रातर्जुहुयाच्छ्वो भूतेऽग्नये पथिकृतेऽष्टाकपालं निर्वपेत्पथोऽन्तिकाद्बहिरनड्वाँश्च दक्षिणा २ योऽन्याग्निषु यजेत यस्य वान्येऽग्निषु यजेरन्सोऽग्नये वैश्वानराय द्वादशकपालं निर्वपेत् ३ यस्याग्नयः सँसृज्येरन्मिथोऽन्यैर्वेष्टिसंनिपाते वैविची पूर्वा ४ अग्नये शुचय इति व्याख्यातम् ५ यस्याहिताग्नेरिति व्याख्यातम् ६ यस्याग्निरनुगछेदिति व्याख्यातम् ७ यस्याजस्रमवछिद्येतान्तरितान्होमान्हुत्वाग्नये तन्तुमतेऽष्टाकपालं निर्वपेदपि वा पूर्णाहुतिँ हुत्वा नाद्रियेत होमान्सायँहोमेन प्रतिपद्येत ८ यस्याधिश्रितेऽग्निहोत्रे हविषि वा निरुप्ते सोमे

वा प्रततेऽनो रथोऽश्वः पुरुषः श्वा कृष्णः शकुनिरन्यद्वा सत्त्वमन्तरा विया-यात्त्रैयस्त्रिँशत्तन्तव इत्याहवनीये हुत्वा गामन्वावृत्यावर्तयतीदँ विष्णुर्विचक्रम इति पदँ योपयत्यपो ऽन्वतिषिञ्चेदपि वा गार्हपत्याद्भस्मादाय वैष्णव्यर्चाहवनीयात्पदमनुध्वँसयन्नुद्भवेत् ९ अनुगमय्य पूर्वमपरस्मात्प्रणयेत् । यदग्ने पूर्वं निहितं पदँ हि ते सूर्यस्य रश्मीनन्वाततन्थ । तत्र रयिष्ठामनुसंभरेताँ सं नः सृज सुमत्या वाजवत्या ॥ इत्यादधाति १० ४

यदि पृषदाज्यँ स्कन्देद्धिरण्यमन्तर्धाय भूयोऽभ्युन्नीयाश्वेनोपघ्राप्य मनो ज्योतिर्वर्धतां भूतिरित्येताभ्यामाहुती जुहुयात् १ यदि पशुरुपाकृतः पलायेतान्यँ वा भावमापद्येत वायव्याँ यवागूं निरुप्याथान्यं तद्रूपं तद्वर्णं तद्वयसमुपाकरोति । वायव्यया यवाग्वा प्रचर्य पशुपुरोडाशेन प्रचरेत्सह स्विष्टकृदिडाँ वायव्यायाः पशुपुरोडाशस्य चैष एव मृते कल्पः २ स चेत्प्रत्यानीयेत त्वं नो अग्ने स त्वं नो अग्न इत्येताभ्यामाहुती जुहुयादेतावादिनोप्तस्य पशोरवद्येत्स तावन्तमेव कालं तिष्ठेद्यावदितरः शेषो भवति ३ यद्यूर्ध्वमुत्पतेदु दु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण इत्येताभ्यामाहुती जुहुयात् ४ यदि यूपमाबृहेच्चालयेद्वा नितानस्त्वा मारुतो निहन्त्विति यथावसितमस्य परिषेकं कुर्यात् ५ यदि रशनां भिन्द्याद्द्रुह्येद्दशेद्वा त्रयस्त्रिँशत्तन्तव इत्येतया ग्रन्थिँ संधायैतयैव जुहुयात् ६ यदि स्वरुर्नश्येत्स्वधितिर्वान्यँ यूपशकलं जुह्वामक्त्वा स्वरुं कुर्यात्तथा स्वधितिमञ्ज्यादेवमेव चषालम् । इष्टस्य दुरिष्टस्य ये यज्ञमभिरक्षन्तः । पशूनस्माकं मा हिँसीर्यज्ञमन्वभिरक्षताम् ॥ इति जुहुयात् ७ यदि शकृन्मूत्रँ वा कुर्यात्पुनरुपपाय्याभ्युक्ष्य व्याहृतिभिरेव जुहुयात् ८ यस्माद्भीत उदप्रोष्टेत्युत्प्लवमाने जुहुयात् ९ यस्माद्भीत उदवेपिष्टेत्युद्वेपमाने १० यस्माद्भित उदवाशिष्टेत्युद्राश्यमाने ११ यस्माद्भीतो निषीदसि ततो नो अभयं कृधि पशूनस्माकं मा हिँसीर्नमो रुद्राय मीढुषे ॥ इति निषण्णे १२ अग्निर्भगः सवितेदं जुषन्तां प्रजापतिर्वरुणो य मह्यम् ॥ यो नो द्वेष्टि तनूँ रभस्वानागसो यजमानस्य वीरान् ॥ इति रममाणे जुहुयात् १३ यदि पशूखा स्रवेत् उखाँ स्रवन्तीमगदामकर्माग्निर्होता पृथिव्यन्तरिक्षम् यत्र चुश्चुलदग्नावेव तन्नाभिप्राप्नुयुर्निर्ऋतिं परस्तात् ॥ इत्यभिमन्त्रयते १४ यदि

श्येनो वपाँ हरेदन्यद्वा सत्त्वमन्यद्वावदानम् यदवामृक्षच्छकुनिर्मुखेन निर्ऋते तव अग्निष्टद्रक्षतु हव्यवाड् घृतसूदनः ॥ इति जुहुयात् १५ यदवदानं न विन्देत्तदाज्यस्यावद्येद्धृदयनाशेऽन्यं पशुमालभेत । हिरण्ये द्विराज्यस्यावद्येत् १६ यदि कामयेत ते पशुँ व्यमथिषत त आर्तिमार्छेयुरिति कुविदङ्ग यवमन्तो यवं चिदिति नमउक्तिमत्यर्चाग्नीध्रीये जुहुयात् १७ यद्यष्टाज्पदी स्यादष्टापद्या गर्भम् शूले कृत्वा मृदा प्रलिप्य शामित्रीये निखानयेत्तस्याधस्तादयस्पात्र-मुपकृष्य श्रपयेत्तस्य रसेन प्राक्स्विष्टकृतो हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमा हुतीर्जुहुयाद्धिरण्यमष्टापृडं दक्षिणा । सँस्थिते मही द्यौः पृथिवी च न इति पशुश्रपणे गर्भमुपवपति ॥ नमो महिम्न इति पञ्चभिरुपतिष्ठते १८ ५

सत्त्रे चेत्प्रागपवर्गाद्यूपो विरोहेत्त्वाष्ट्रं बहुरूपमालभेत १ प्रजापतिर्मनसि सारस्वतो वाचि विसृष्टायां धाता दीक्षायां ब्रह्म व्रत इतिप्रभृतिभिर्यज्ञतनूर्यदि पूर्वस्यामार्तिः स्यात्तामुत्तरस्या सँसृज्य जुहुयात्प्रजाज्पतिर्मनसि सारस्वतो वाचि विसृष्टायाँ स्वाहेति । यद्युत्तरस्याँ सारस्वतो वाचि विसृष्टायां धाता दीक्षायाँ स्वाहेत्येवँ यस्याँयस्यामार्तिः स्यात्तामुतरया सँसृज्य जुहुयादपि वा त्रिभिरनुवाकैस्त्रीणि चतुर्गृहीतानि जुहुयात् २ यदि राजानमपहरेद्यो नेदिष्ठी सोमः स्यात्तमभिषुणुयात्सोमअविक्रयिणे किंचिद्दद्यात् ३ यदि सोमं न विन्देत्पूतीकानभिषुणुयाद्यदि न पूतीकानथार्जुनानि रोहिततूलानि हैमवतस्य स्थाने बभ्रुतूलानि मौजवतस्य । यदि मार्जुनान्यथ याः काश्चारण्या ओष-धीरभिषुणुयात् ४ प्रतिदुहा प्रातःसवने सोमाञ्श्रीणन्ति शृतेन माध्यंदिने दध्ना तृतीयसवने ५ पञ्च दक्षिणा ददाति ६ सँस्थाप्य येन कामयेत तेन पुनर्यजेत । तत्र यत्कामयेत तद्दद्यात् ७ यद्दक्षिणास्वदास्यन्स्यात्तस्याध्वर्यवे वरं दद्यात् ८ यदि सर्पतां प्रस्तोता विछिद्येत ब्रह्मणे वरं दत्त्वा तमेव पुनर्वृणीते । यद्युद्गातादक्षिणेनेष्ट्वा तेन पुनर्यजेत । यदि प्रतिहर्ता सर्ववेदसं दद्यात् ९ यदि प्रातःसवने ग्रावा शीर्येत द्युतानस्य मारुतस्य साम्ना स्तुयुर्यदि माध्यंदिने बृहता यदि तृतीयसवनेऽनुष्टुभा १० यदि प्रातःसवने कलशो दीर्येत सषट्कारनिधनं ब्रह्मसाम कुर्याद्यदि माध्यदिने श्रायन्तीयं ब्रह्मसाम कुर्याद्यदि तृतीयसवने वारवन्तीयमग्निष्टोमसाम कुर्यात् ११ यदि नाराशँसा उपदस्येयुर्मँयं ग्रहमु-

पतिष्ठेरँस्तस्यतस्य बिन्दुमवनयेत् १२ यदि हुताहुतौ पीतापीतौ वा सोमौ सँसृज्येयातामन्तःपरिध्यङ्गारं दक्षिणापोह्य हुतस्य वाहुतस्य वा पीतापीतस्य सोमस्येन्द्राग्नी पिबतँ सुतँ स्वाहा ॥ इति जुहुयात् १३ प्रजापतये स्वाहेत्य-भक्षणीयमुत्तरयोः पूर्वस्मिन्नुपरवेऽवनयेत् १४ इन्दुरिन्दुमुपागात्तस्य त इन्दवि-न्द्रपीतस्येन्द्रियावतो मधुमतो मधुमतः सर्वगणस्य सर्वगण उपहूतस्योपहूतं भक्षयामीत्यववृष्टं भक्षयेत् १५ यदि कूर्मं न विन्देत्कर्कं कछपमुपदध्याद्यदि तं न विन्देत्पुरोडाशं कूर्माकृतिँ श्रपयित्वा हिरण्यपृडमुपदध्यादुभयतो हिरण्यमित्येके १६ यद्याग्रायणः स्कन्देदुप वा दस्येदितरेभ्यो ग्रहेभ्यो निर्गृह्णीयाद्यदीतरे ग्रहाः स्कन्देयुरुप वा दस्येयुराग्रायणान्निर्गृह्णीयात् १७ द्रोणकलशे चेन्न विन्देत्पूतभृति वा हिरण्यमृजीषेऽप्यस्याभिषुणुयाद्धिरण्यम-भ्युन्नयेद्धिरण्येन सह जुहुयात् १८ सदसि चेच्चमसमभ्युपाकुर्याद्धिरण्यगर्भ इत्याग्नीध्रीये पूर्णाहुतिं जुहुयात् १९ यदि ध्रुवः स्कन्देत्प्रवर्तयेदायुर्धा असी-त्यभिमन्त्र्य वरम् दत्त्वावस्थापयेद्यद्युपदस्येत्स्वाहा दिव आप्यायस्वेति पर्यायैस्त्रिः सोममाप्याययेत् २० यदि सोमः स्कन्देद्व्याख्यातं पृषदाज्येन । यद्युपदस्येद्धिरण्यमृजीषेऽप्यस्याभिषुणुयाद्धिरण्यमभ्युन्नयेद्धिरण्येन सह जु-हुयात् २१ यदि राजाभिदह्येत ग्रहानध्वर्युः स्पर्शयेत्स्तोत्राण्युद्गाता शस्त्राणि होताथ यज्ञँ संभृत्यानुपूर्वं चेष्टेरन् २२ पञ्च दक्षिणा ददाति २३ सँस्थाप्य येन कामयेत तेन पुनर्यजेत । तत्र यत्कामयेत तद्दद्यात् २४ यद्दक्षिणास्वदा-स्यन्स्यात्तस्याध्वर्यवे वरं दद्यात् २५ पुरा द्वादश्या दीक्षेरँस्तयैवैनमृत्विजो याजयेयुः २६ ६

यद्यर्वाक्स्तुयुर्यावतीभिर्न स्तुयुस्तावतीभिरतिस्तुयुर्भूयोऽक्षरतराभिर्वा त्रैधँ वाग्निष्टोमसाम कुर्यात् १ यदि सर्वैः पर्यायैरस्तुतमभिव्युछेत्पञ्चदशभिर्होत्रे स्तुयुः पञ्चभिः पञ्चभिरितरेभ्य । यदि द्वाभ्याँ होत्रे मैत्रावरुणाय चान्यतरेण ब्राह्मणाछँसिनेऽछावाकाय चान्यतरेण । यद्येकेन पञ्चभिर्होत्रे स्तुयुस्तिसृ-भिस्तिसृभिरितरेभ्यः २ यस्याश्विने शस्यमाने सूर्यो नोदियादश्वँ श्वेतँ रुक्म-प्रतिमुक्तं पुरस्तात्प्रत्यङ्मुखमवस्थापयत्यादित्यं बहुरूपमालभेत । सौर्योऽजः श्वेत उपालम्भ्यः ३ उपाँशुदेवता समृतयज्ञे । संभारयजूँषि व्याख्यातानि ।

पृषरावती प्रतिपदुभयवन्त्याज्यानि प्रतिवन्ति वा ४ सँवेशायोपवेशाय गायत्राभिभवे छन्दसे स्वाहेति पुरस्तात्प्रातःसवनस्य जुहुयात्संम्वेशायो- पवेशाय त्रिष्टुभाभिभवे छन्दसे स्वाहेति पुरस्तान्माध्यंदिनस्य सवनस्य जुहुयात्संम्वेशायोपवेशाय जगत्याभिभवे छन्दसे स्वाहेति पुरस्तादार्भवस्य पवमानस्य जुहुयात् ५ यदि रथंतरसामा सोमः स्यादार्भवे पवमाने बृहत्कुर्याद्यदि बृहत्सामा माध्यंदिने पवमाने रथंतरम् ६ यदि समाने जनपदे विद्विषाणयोः सुत्याः संनिवपेयुर्यद्यग्निष्टोमः परस्योक्थ्यं कुर्याद्यद्युक्थ्यः षो- डशिनँ । यदि षोडश्यतिरात्रँ । यद्यतिरात्रो विश्वजितमभिजितँ वा सर्वस्तोमं कुर्यात् ७ यदि सोमोऽतिरिच्येत होतृचमसमुख्यानुन्नीय स्तोत्रमुपाकरोत्यैन्द्रा- वैष्णवँ होतानुशँसति ८ यदि प्रातःसवनेऽस्ति सोमो अयँ सुत इति मरुत्वतीषु गायत्रेण स्तुयुर्यदि माध्यंदिने बराणमहं असि सूर्येत्यादित्यवतीषु गौरीवितेन स्तुयुर्यदि तृतीयसवने विष्णोः शिपिविष्टवतीषु गौरीवितेन स्तुयु ९ उक्थ्यानि वातिप्रणयेद्यद्युक्थ्ये वातिरिच्येत षोडशिनँ यदि षोडशिनि वातिरात्रँ । यद्यतिरात्रे विष्णोः शिपिविष्टवतीषु बृहता स्तुयुः १० ७

यद्युख्योऽनुगछेत्प्रणीय पुनः प्रवृञ्ज्यान्नित्याः समिध आधाय यास्ते अग्न आर्द्रा योनयः कामयमानो वना त्वँ यन्मातृ रजगन्नपः न तत्ते अग्ने प्रमृषे निवर्तनँ यद्दूरे सन्निहाभवः ॥ साकँ हि शुचिना शुचिः प्रशास्ता क्रतुनाजनि विद्वं अस्य व्रता ध्रुवा वया इवानुरोहते ॥ इति तिसृभिः । कृष्णँ वासो देयं कृष्णा वा गौः १ यद्युखा भिद्येत महावीरो वा कपालानि चूर्णयेत्पेषं पिष्ट्वान्यया मृदा सँसृज्य य ऋते चिदभिश्रिष इत्युखां कुर्यात्तथा महावीरम् २ यदि दीक्षितस्योपतपेदुदकाँस्य एकविँशतिँ यवानोप्यैकविँशतिं दर्भपिञ्जूलानि चावधाय जीवा नाम स्थ ता इमं जीवयतेति दीक्षितस्य नामग्राहं पर्यायैरुदकाँस्यमभिमृशेत्प्राणापानौ त उपाँश्वन्तर्यामौ पातामसाविति दीक्षि- तमभिमन्त्रय पुष्टपत इत्याग्नीध्रीये पूर्णाहुतिं जुहुयाद्या ओषधयः प्रथमजा इत्यनुवाकेन चत्वारो ब्राह्मणा नानागोत्रा उदकांस्येन दीक्षितमभिषिञ्चेयुर्न पुनः कुर्यात् ३ यदि कीक्षितः प्रमीयेत तीर्थेनारणी हृत्वातीर्थेन शरीरं दक्षिणतो विहारस्य निर्मन्थ्येन दग्ध्वा कृष्णाजिनेऽस्थीन्युपनह्य प्रेताग्निषु पुत्रं भ्रातरँ वा

दीक्षयित्वा यजेयुर्दक्षिणस्याँ श्रोणावस्थीन्युपनिधाय यामेन सार्पराज्ञीषु पराचीषु प्रतिहितासु स्युयुस्ता जपन्तो दीक्षिता होतृप्रमुखाः सव्यानूरूनाघ्नाना मार्जालीयं सव्यं त्रिः परियन्त्यग्न आयूषि पवस इति प्रतिपदँ रथंतरं पृष्ठम् ४ यद्यकाहो भवति सँस्थिते दहनमस्थीनि हरेयुः ५ यदि सत्रे सँस्थिते सँवत्सरँ विहारमिन्धीताजुह्वतो यजमानाः ६ समाप्ते सँवत्सरं ज्योतिष्टोमोऽस्थिया-जनीय । ऐन्द्रवायवाग्रा ग्रहा मैत्रावरुणाग्रा वा । स्तोत्रेष्वस्थीन्युपनिदध्युः । त्रिवृतः पवमानाः । सप्तदशँ शेषः । समानमन्यत् ७ यद्याहवनी-योऽनुगछेदाग्नीध्रीयात्प्रणयेद्यद्याग्नीध्रीयः शालामुखीयाद्यदि शालामुखीयो गार्हपत्याद्यदि गार्हपत्यस्तत एव मथ्यः ८ यदि सत्राय दीक्षेताथ सा-म्युत्तिष्ठेत्सोममपि विभज्य विश्वजितातिरात्रेण सर्वस्तोमेन सर्वपृष्ठेन सर्व-वेदसदक्षिणेन यजेत यजेत ९ ८

इति मानवसूत्रे प्रायश्चित्ताध्यायः समाप्तः

अथातः प्रवर्ग्यकल्पँ व्याख्यास्यामः । प्रवर्ग्य ँ संभरिष्यन्नमावास्यायां पौर्णमास्यामापूर्यमाणपक्षस्य वा पुण्ये नक्षत्रे सोऽयँ स्वविधानप्रकृतिः १ यथोपदिष्टं मन्त्रानुपूर्व्याद्द्रव्यैरभिसंबन्धः २ न प्रथमयज्ञे ज्योतिष्युक्थ्ये च प्रजाकामः पशुकामः । प्रजाकामानां च बृहस्पतिसवो विहितः ३ विज्ञायते ऽपशिरा वा एतस्य यज्ञो यस्य न प्रवृञ्जन्ति ४ न द्वादशातिप्रवृञ्ज्यादित्युपदेशः ५ पश्चाद्गार्हपत्यस्य काँस्ये चमसे वा दधि गृहीत्वा गायत्रीं छन्द इति प्रपद्य दधिक्राव्णो अकारिषमिति दधि त्रिः प्राश्य युञ्जत इति समिधमादधाति दीक्षितस्य ६ आहुतिं जुहुयाददीक्षितस्य ७ उत्तरतो गार्हपत्यस्य सँस्तीर्णे चतस्रोऽभ्रीः प्रयुनक्ति खादिरीँ वैणवीँ वैकङ्कतीमौदुम्बरीमौदुम्बरँ स्रुवं चादत्ते सावित्रेण देवस्य त्वेति तांतामपि वोहेन्मन्त्रम् ८ उत्तिष्ठेत्युपोत्थाय प्रैतु ब्रह्मणस्पतिरित्यभिप्रव्रज्याग्रेणाहवनीयं कृष्णाजिनमास्तीर्य तस्मिन्संभारा-न्निवपति पश्चार्धान्मृदँ वल्मीकवपाँ वराहविहतं पूतीकं पिष्टं पूर्वार्धमजापयः ९ खादिर्या मृदं प्रहरति देवी द्यावापृथिवी इति ॥ मखाय त्वेत्यपादाय मखस्य त्वेत्युत्तरस्मिन्कृष्णाजिनान्ते निवपति १० देवीर्वम्रीरिति वैणव्या वल्मीकवपामिती यत्यग्र आसीदिति वैकङ्कत्या वराहविहतं ॥ देवी

ऊर्जाहुती इत्यौदुम्बर्या पूतीकमिन्द्रस्यौजो ऽसीति स्रुवेणाजापयसः ११ अग्नेस्तनूरसीति सर्वेभ्योऽपादानेभ्य उपनिवपति यावदाप्तम् १२ अवशिष्टामुखासंभारैः सँसृज्य मधु त्वेति संनयति १३ पिण्डँ समवदानीकृत्वायुर्धेहीत्यश्वेनोपघ्राप्य त्रैधं कृत्वा घर्मकपाले लेपं निमार्ष्टि १४ मखस्य शिरोऽसीति तमभिमृशति १५ यज्ञस्य पदे स्थ इत्यङ्गुष्ठाभ्यां मुखं करोति यावन्मेदाहुतिभक्षेभ्यश्च भविष्यति १६ वायव्यप्रकारान्व्युद्धौ महावीरान्करोति गायत्रोऽसीति प्रथमं त्रैष्टुभोऽसीति द्वितीयं जागतोऽसीति तृतीयँ सर्वान्वा सर्वैः १७ मखस्य रास्नासीति रास्नां करीति द्व्यङ्गुलेऽधस्ता-द्द्वारस्य १८ सूर्यस्य हरसेति सिकतासु प्रतिष्ठापनम् १९ अवशिष्टाया मृदो दोग्ध्रिये उखे करोति शकटीप्रकारे ह्रसीयसीमन्याँ वर्षीयसीमन्यामा उयस्थालीं घर्मेष्टकां चत्वारि रौहिणकपालानि द्वे लक्षणवती । लेखनवेलायां लिखति । मार्जनवेलायां मार्जजति २० यदा निष्णाताः शोषणेन भवन्त्यथैनानुदीचोऽङ्गारानुपोह्य वृष्ण इत्यश्वशकेन खरदेशे धूपयति । पूर्वो वा गर्तो व्याख्यातः । पचनं चोत्तरतो गार्हपत्यस्योत्तरतःपुरस्ताद्देवयजनस्य वा २१ अग्निभिः शलपरिचाय्यं परिचित्याग्निमन्थेन पचेद्गार्हपत्याद्वार्चिष इत्यादीपनः २२ अभीमां महिना दिवं मित्रस्य चर्षणीधृत इत्येताभ्यामुपचरति । यत्र क्वचोपचरेदेताभ्यामेवोपचरेत् २३ यदा निष्णाताः पचनेन भवन्त्य-थैनानुदग्भस्मापोहति व्यर्धयामीत्यभिचरन्समर्धयामीत्यनभिचरन् २४ देव-स्त्वेत्युद्वासनम् २५ सूर्यस्य त्वेत्यन्वीक्षणम् २६ ऋजवे त्वेत्युच्छ्रयणम् २७ इदमहममुमामुष्यायणमितिप्रभृतिभिरेकैकेन पर्यायेणैकैकं महावीरं दर्भैस्त्रिः परिमार्ष्टि २८ छृणत्तु त्वा वागितिप्रभृतिभिरेकैकमजापयसाछृणत्ति २९ आसन्द्यां कृष्णाजिनमास्तीर्य देव पुरश्चरेति तस्यां महावीरान्खादयत्यपरमपरं पूर्वंपूर्वँ वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि ३० दर्भैः प्रछाद्य कृष्णाजिनेन च दीक्षितसं चरेणातिहृत्य दक्षिणत आहवनीयस्यासन्दीमुपकृष्य नमो वाच इत्योषधिपाणिर्मार्जयते ३१ महावीरेष्वेव मन्त्रप्रयोगः ३२ प्रजाकामो नेक्षेत प्रजाकामो नेक्षेत ३३ १

पुर्व उपसत्प्रयोगः १ स उपकल्पयते सौवर्णराजतौ रुक्मौ शातमानिकावुप-

दिष्टावौदुम्बरं दारुमयँ सप्त समिधः । त्रयोदश वैकङ्कत्यो । बाहुमात्रा धवित्रदराडास्त्रयो वैरावाग्रारयनुदाल्य तेषु प्रादेशमात्रारिग कृष्णा-जिनपुटान्युपकर्षति । स्रुचौ द्वेऽनुदुप्ते । परिग्राहावुपयामः सौमिक्यासन्दी मौञ्जो वेदः सौमिको वा हररगँ व्याख्यातम् २ उत्तरतो गार्हपत्यस्य सिकतानां खरं करोत्युत्तरतोऽन्यमाहवनीयस्योत्तरतःपुरस्ताद्बहिरधिनिर्णेजनीयम् ३ संप्रसार्य द्वारारिग प्रचरति परिश्रयरगावृता ४ विहारं परिस्तीर्य दक्षिरगतो ब्रह्मयजमानाभ्यां पत्न्या उद्गात्रे च पश्चाद्धोत्रे त्रिधातूपस्तृरगाति ५ अग्रेरग गार्हपत्यं बहिर्वेदि पात्रेभ्यः संम्स्तीर्य पात्रारिग प्रयुनक्ति स्रुवं ज्येष्ठं महावीरं परिग्राहावुपयामं धवित्रारिग निदाने दोग्ध्र्यौ मेथीमभिधानीमाज्यस्थाली-मपरारिग च परिधर्म्यारिग स्रुक्कपालेऽनुदुप्ते रुक्मौ वेदप्रलवान्वेदँ समिधः ६ वेदप्रलवारगां पवित्रे कुरुते दर्भपवित्रे इति ७ अग्रेरग गार्हपत्यमन्तर्वेदि प्रोक्षरगीनामावृता प्रोक्षरगीः सँस्कृत्य पश्चाद्गार्हपत्यस्य गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च ८ उपोत्थायोच्चैः प्रवर्ग्येरग प्रचरन्ति ९ ब्रह्मन्प्रचरिष्यामो होतर्घर्ममभिष्टुह्युद्गातः सामानि गायेति प्रेष्यति १० यजुर्युक्तमित्यनुज्ञातो ब्रह्मरगा देव पुरश्चरेति त्रिर्महावीरम् प्रोक्ष्य पात्रारिग प्रोक्षति समिधः खरौ च ११ वेदमन्तर्धाय सावित्रेरग महावीरमादत्ते तूष्णीँ स्रुवमाज्यस्थालीम् १२ पश्चाद्गार्हपत्यस्य तूष्णीमाज्यँ सँस्कृत्यायुषे स्वाहेतिप्रभृतिभिः स्रुवेरग गार्हपत्ये जुहोति १३ वेदेन महावीरं त्रिः परिमार्ष्टि ॥ यमाय त्वेति बुध्नं मखाय त्वेति मध्यँ सूर्यस्य हरसे त्वेत्यग्रम् १४ देवस्त्वा सवितेति महावीरे सर्पिरानयति १५ पृथिव्या इति राजतँ रुक्ममधस्तात्खरस्योपकर्षति १६ अर्चिषे त्वेतिप्रभृतिभिर्विष्वगग्रान्वेदप्रलवानादीप्यार्चिरसीति तैर्महावीरमुपज्वाल-यति १७ सूर्यस्य तपस्तप इति तान्खरे सादयति १८ अञ्जन्तीत्यवत्वा सँसीदस्वेति तेषु महावीरं प्रतिष्ठापयति १९ अनाधृष्टेतिप्रभृतिभिः प्रादे-शेनाध्यधि प्रतिदिशं प्रदक्षिरगं महावीरँ सर्वतो व्युद्दिशति ॥ मनोरिति दक्षिरगतःप्राचीनं भूम्याम् २० चिदसीति गार्हपत्यादङ्गारानभ्यूहति २१ स्वाहा मरुद्भ्य इति सर्वतः परिश्रयति २२ मासीतिप्रभृतिभिर्द्वादशभिर्वैकङ्कतीभि-र्द्वाभ्यांद्वाभ्याँ शलपरिचाय्यं परिचित्य त्रयोदश्याँ रुक्मं प्रतिमुच्य महावीरँ सर्पिषः पूरयित्वान्तरिक्षस्यान्तर्धिरसीति तया महावीरमपिदधाति २३ अर्ह-

न्विभर्षीत्युपतिष्ठन्त ऋत्विजो यजमानश्च २४ गायत्रमसीत्येतैर्धवित्राण्यादत्ते २५ तैर्महावीरमुपवीजयति मध्विति त्रिरवाचीनं जिन्वेति त्रिरूर्ध्वमपि वा जिन्वेति त्रिरवाचीनं मध्विति त्रिरूर्ध्वम् २६ तेषां त्रैष्टुभजागते प्रतिप्रस्थात्रे प्रयछति प्रतिप्रस्थाता जागतमाग्नीध्राय २७ परि त्वा गिर्वणो गिर इति श्रुत्वा प्राणोऽसीत्यध्वर्युप्रथमा धून्वन्तः प्रदक्षिणं महावीरं त्रिः परियन्ति । वैकल्पिकश्चतुर्थ ॥ आयुष्ट इति यजमानः २८ शुक्रं त इति श्रुत्वा समिधमग्नौ प्रहृत्य रुक्मं पात्र्यां निदधाति २९ अत ऊर्ध्वमध्वर्युः प्रणवे प्रणव आज्येन घर्मँ रोचयते ३० सम्यक्सम्यञ्च इति श्रुत्वा सर्वे धून्वन्त आ पवित्रवत्याः ३१ एतस्मिन्काले प्रतिप्रस्थाता पिष्टानाँ रौहिणौ निर्वपति । तूष्णीं पुरोडाशौ कृत्वा संम्स्कृत्य ग्रावाणेति श्रुत्वानुदुप्तयोरासादयति ३२ ईळे द्यावापृथिवी इति श्रुत्वोत्तरेण महावीरं गत्वा हविष्पथेन दक्षिणं परिधिसंधिं प्रत्यवस्थापयत्युत्तरमन्यम् ३३ याभिः कृशानुमिति श्रुत्वाग्नीध्रप्रथमा धून्वन्तः प्रसव्यं महावीरं त्रिः परियन्ति ३४ अप्रस्वतीमिति श्रुत्वा रुचितो धर्म इति प्रेष्यति ३४ दश प्राचीरिति सर्वत उपतिष्ठन्त ऋत्विजो यजमानश्च ३६ त्वष्ट्रिमन्तस्त्वेति यजमानः पत्न्या सहावेक्षते ३७ २

सावित्रेण निदाने आदत्ते तूष्णीं दोग्ध्रीं मेथीम् १ अभिधानीमादायेडा एहीति त्रिरहन्यहन्युपाँश्वाह्वयति २ पूर्वया द्वारा निःसृत्या साविति त्रिरुच्चैर्यस्ते स्तन इत्याह्वयति ३ उत्तरतः पृष्ठ्यादेशस्य मेथीं निहत्य तस्यां निबध्नाति ४ अदित्या उष्णीषमसीत्यभिनिदधानः ५ पूषा त्वेत्युपसर्जने ६ बायुरसीत्याव्रजतः ७ घर्माय त्वेत्युच्छँषणे ८ अदित्या रास्नासीति निदीयमाने ९ बृहस्पतिष्ट्वोपसीदत्वित्युपसीदति १० दानवः स्थ पेरवः स्थेति स्तनान्समृशति ११ अश्विभ्यामिति दोहने १२ एतस्मिन्काले प्रतिप्रस्थाता तूष्णीं दोग्ध्रीमजां पिन्वति १३ उत्तिष्ठेति श्रुत्वोप मेहीत्याव्रजतः १४ आ घर्मे सिञ्चस्वेति श्रुत्वा मधु हविरसीति दोग्ध्र्या महावीर आनयति १५ एतेन धर्मेण व्यत्यासं त्रिरध्वर्युस्त्रिः प्रतिप्रस्थाता १६ तूष्णीं प्रतिप्रस्थाताध्वर्युपात्रे सर्वमानीय शेषमाधाय गायत्रोऽसीति परिग्राहावादत्ते ॥ जागतोऽसीत्युपयामम् १७ द्यावापृथिवीभ्यां त्वा परिगृह्णामीति परिगृह्यान्तरिक्षेणोपयछामीत्युपयामे

नियछति १८ देवानामिति धारयमाणो जपति १९ दिविस्पृगिति यथालोकं नियछति २० तेजोऽसीति सप्तदश प्रेङ्खणे २१ दिवि धा इत्युपोत्थाय देवँ सवितारमित्यभिप्रव्रज्य नाके सुपर्णमिति श्रुत्वा विश्वा आशा इति दक्षिणातिक्रामति २२ विश्वान्देवानयाडिहेति यजमानँ वाचयति २३ स्थानं गत्वाश्रावयति २४ प्रत्याश्रुते घर्मस्य यजेति प्रेष्यति २५ अश्विना धर्ममिति निगद्य वषट्कृते न सर्वं जुहोति ॥ स्वाहेन्द्राय वषडित्यनुवषट्कृते २६ एतस्मिन्काले प्रतिप्रस्थाताहः केतुनेति रौहिणौ जुहोति पुरस्तादन्यँ वषट्कारस्य पुरस्तादन्यमनुवषट्कारस्य २७ स्वाहाकृतस्य घर्मस्येति यज-मानँ वाचयति २८ इष इति प्रतिप्रस्थाता दोग्ध्र्या महावीर आनयति २९ त्विषे त्वा द्युम्नाय त्वेन्द्रियाय त्वा भूत्यै त्वा स्वाहेति प्रतिदिशँ सर्वतो व्युत्तारयति ३० घर्मोऽसीत्युपयामे शेषमानीयामुष्मै त्वेति महावीरं खरे सादयति । यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णीमनभिचरन् ३१ उपयामे-ऽञ्जन्समिध आदधा पूष्ण इति पञ्चभिः ३२ षष्ठीमुपयामे ऽनुदुप्तयोः परिग्रा-हयोर्महावीरेऽक्ताँ रुद्राय रुद्रहोत्रे स्वाहेत्युत्तरपूर्वस्यां दिशि प्रविध्याय उपस्पृश्यानक्तामादायापीपरो माह्न इति समिधमादधाति ३३ हुतँ हविरिति प्रातरग्निहोत्रधर्मेण जुहोति ३४ अश्याम ते देव घर्मेति समुपहूय भक्षय-न्त्यृत्विजो यजमानश्च । प्राणभक्षेणादीक्षिता भक्षयन्ति ३५ उपयाम-मधिनिर्णेजनीये प्रक्षाल्य निनयनप्रभृति सिद्धमा भक्षणात् ३६ आयुर्दा इति रुक्मवतीभिरन्तर्वेदि मार्जयन्ते ३७ परिग्राहाभ्यां महावीरमादाय सँसाद्यमा-नायानुब्रूहीत्यनुवाचयति ३८ अपरमपरं पूर्वंपूर्वँ वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि । स्वाहा त्वा सूर्यस्य रश्मिभ्य इति दर्भैः प्रछाद्य कृष्णाजिनेन च दीक्षितसंचरेणातिहृत्य दक्षिणत आहवनीयास्यासन्दीमुपकृष्य नमो वाच इत्योषधिपाणयोऽधिनिर्णेजनीये मार्जयन्ते ३९ इडायास्पदमसीति प्रादेशैः प्रत्यक्सव्यैर्लोष्टान्युपास्यन्ति ४० अप उपस्पृश्य पृथिवी शान्तिरित्यभ्यु-क्ष्योद्वयं तमसस्परीत्यादिःयमवेक्षते ४१ मित्रस्येति प्रेक्षमाणसमीक्षणे ४२ ब्रह्मण उपस्तरणमसीति मार्जनान्यवसृज्य वामदेव्यं जपित्वा पञ्चैन्द्रीं जपित्वा स्वस्ति न इन्द्रो वृद्धश्रवा आपो हि ष्ठेति शान्तिकर्मण आन्तादनुवाकस्य ४३ एतेन धर्मेणापराह्णिको व्याख्यातोऽन्ययोः कपालयो रौहिणयोः ४४ रात्रिरिति

रौहिणस्तोमः ४५ अपीपरो मा रात्र्या इति समिधमादधाति ४६ हुतँ हविरिति सायमग्निहोत्रवर्मेण जुहोति ४७ स्वाहा त्वा नक्षत्रेभ्य इति प्रछाद्य शं नो वात इत्यभ्यस्तमिते होमः ४८ एतेन धर्मेण त्रिरुवरुत्को व्याख्यातो । ऽहन्य- हन्येकैको महावीरो भवति ४९ एतेन धर्मेण षडुपसत्को व्याख्यातो । द्व्यहंद्व्यहमेकैको महावीरो भवति ५० एतेन धर्मेण द्वादशोपसत्को व्याख्यातश्चतुरहंचतुरहमेकैको महावीरो भवति महावीरो भवति ५१ ३

अथात उत्सादनम् १ उपयामं दधिघर्माय निदधाति २ खरावन्तरीकृत्य सँवपत्ययुतं बहिरधिनिर्णेजनीयम् ३ संप्रैषः सकृदुत्तरेण वेदीमाहरत्यृत्विजां गत्या ४ अग्रेणाहवनीयमासन्दीमवस्थाप्य तस्यां महावीरान्निदधात्यपरमपरं पूर्वंपूर्वँ वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि ५ पश्चादाहवनीयस्य गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च ६ पशूनां ज्योतिरसीति महावीरे सर्पिरानयत्युत्तराभ्यां मधुदधीतरयोः ७ आज्यँ सँस्कृत्य दर्भकूर्चानादीप्या- स्यदघ्ने धारयमाणो घर्म या ते दिवि शुगिति जुहोत्युत्तराभ्यां नाभिदघ्नजा- नुदघ्नयोः ८ अन्वद्य न इत्युपविशति ९ पूष्ण इति पञ्चाहुतीर्जुहोत्युत्तराभ्यां प्रतिदिशं प्रत्येति १० उपोत्थायोद्गातः साम गायेति प्रेष्यति प्रस्तोतरिति वा । तस्य सर्वे निधनमुपयन्ति ११ अन्वद्य नो अमुमतिरन्विदनुमत इति सर्वे जपन्ति ४२ ब्रह्मणस्त्वा परस्पाया इत्यनुनिष्क्रामति ॥ प्राणस्य त्वेति समयार्धे द्वितीयं ॥ दिवस्त्वेति प्राप्य तृतीयम् १३ अप द्वेष इति चात्वा- लेऽधिनिर्णेजनीयं प्रतिष्ठाप्याप उपस्पृश्योत्तरत उत्तरवेदेः स्वयमातृण्णाया वा खरौ न्युप्य पुरुषाकृतिँ विदधात्यादित्याकृतिँ वा १४ व्युह्यावोद्ध्याव- कामास्तीर्य तस्याँ व्याहृतिभिर्हिरण्यशकलेषु महावीरान्सादयत्यपरमपरं पूर्वंपूर्वँ वोत्तरमुत्तरँ वा तस्यां च परिघर्म्याणि १५ दध्नः पात्राणि पूरयित्वाभितो निदधाति १६ वेदं प्रमुच्याभितः सँस्तृणाति १७ दर्भैः प्रछाद्य कृष्णाजिनेन च चतुःस्रक्तिरित्यासन्द्याभिविक्रमयति १८ घर्मैतत्ते कृतमित्युपतिष्ठन्त ऋत्विजो यजमानश्च ॥ व्यसाविति च यं द्विष्यात्तस्य नाम गृह्णीयात्तूष्णी- मनभिचरन् १९ वल्गुरिति परिषेचनँ समुद्रस्य त्वावकया हिमस्य त्वा जरायुणेति च २० पुनरूर्जा सह रय्या निवर्तस्वेत्युक्त्वावर्तते २१ एतस्मि-

न्काले यजमान उत्तरत उत्तरवेदेः प्राङ्मुख ऊर्ध्वस्तिष्ठन्सुमित्रा न इत्यपो ऽञ्जलिना गृहीत्वा दुर्मित्रा इति प्राचीर्बर्हिर्वेदि निरस्यति २२ त्रिरेष कल्पः परिषिच्यमाने २३ अप उपस्पृश्य वार्षाहरँ साम गायेति प्रेष्यति २४ परिषिक्त इष्टाहोत्रीयम् २५ परिषिक्ते रन्तिर्नामासीति गन्धर्वनामभिः सर्वत उपतिष्टन्त ऋत्विजो यजमानश्च २६ एतत्त्वं देव घर्मेति यजमानः २७ इदमहमावर्त इत्युक्त्वावर्तते २८ नमो देवेभ्य इति नमस्करोति २९ पुनरूर्जा सह रम्या निवर्तस्वेति प्रतिपर्यावर्तते ३० आज्यस्थालीँ स्रुवं चादाय श्यैतँ साम गायेति प्रेष्यति ३१ आव्रजन्गायते । तस्य यजमानो निधनमुपैति ३२ इदँ विष्णुरिति पदलोभनः ३३ त्वमग्ने गृहपतिरिति द्वाभ्यां गार्हपत्यमुपतिष्ठते ३४ प्र तद्विष्णुरिति होम ॥ इममू षु त्वमस्माकमिति द्वितीयो । व्याहृतिभिश्चत्वारः ३५ वामदेव्यँ साम गायेति प्रेष्यति ३६ आज्यस्थालीँ स्रुवं च दध्नः पूरयित्वासन्दीमुपकृष्य नमो वाच इत्योषधिपाणयश्चात्वाले मार्जयन्ते ३७ यदि महावीर उपदस्येत्प्र वां दँसाँसीत्युपदस्त आप्याय्यमानः ३८ यदि महावीरो भिद्येत मा नो घर्म ह्वरित इत्येताभ्यां प्रत्यृचमाहुतीर्जुहुयाद्व्याहृतिभिश्च ३९ व्याख्यातं करणम् ४० धर्मः शिर इति यथाकालं घर्मेष्टकामुपदधाति ४१ पूष्ण आघृणये स्वाहेति यथाकालँ स्वयमेव पञ्चाहुतीर्जुहोति ४२ उग्रश्च भीमश्चेति यथाकालमरण्येऽनुवाक्यो गणो गणः ४३ ४

अथातो दधिघर्मेण चरन्ति १ माध्यंदिने सवने ग्रहान्संमृश्योपयामं दर्भैः प्रक्षाल्य पश्चादाग्नीध्रीयस्य गायत्रीं छन्द इति प्रपद्यन्त ऋत्विजो यजमानश्च २ होतर्वदस्वेत्युक्त्वा ज्योतिरसीत्युपयामे दध्यानीय श्रातँ हविः श्रातं देवेभ्य इति प्रेष्यति ३ यदि श्रातो जुहोतन यद्यश्रातो ममत्तनेति श्रुत्वा स्थानं गत्वाश्रावयति ४ प्रत्याश्रुते दधिघर्मस्य यजेति प्रेष्यति ५ यमिन्द्रमिति प्रतिनिगद्य वषट्कृते न सर्वं जुहोति ॥ ताभ्याँ स्वाहा वषडित्यनुवषट्कृते ६ उपयामे भक्षँ हरति ७ सदो गत्वोपहुतापह्वयस्वेत्युक्त्वो पहूता उपह्वयध्वमिति वा ८ भूर्भुवः स्वर्मयि त्यदिति भक्षयन्ति ९ घर्ममुपयामं मार्जालीये दर्भैः प्रक्षाल्य दध्ना पूरयित्वोदस्य शुष्मादित्याहवनीय आदधाति १० उत्तमेऽहन्यहर्गणाः ११ नमो वाच इत्योषधिपाणयश्चात्वालान्ते मार्जयन्ते १२ ५

अथासुरिगव्यः १ विज्ञे विक्षिपे विधम इति तिस्रो विज्ञ एहीत्यष्टौ २ यं द्विष्यात्तस्य गवां मध्ये विज्ञे विक्षिपे विधम इत्याहूय प्रागुदयान्निष्क्रम्य दक्षिणतो ग्रामस्य पश्चाद्वा शुचौ देशे स्वकृत इरिणेऽग्निं प्रज्वाल्य कृष्णायाः कृष्णानाँ व्रीहीणाँ पयसि स्थालीपाकँ श्रपयित्वा । तस्मिन्नुपसमाधाय परिसमुह्य पर्युक्ष्य शरैः परिस्तीर्या सृङ्ख इति स्थालीपाकस्य हुत्वा । प्राक्स्विष्टकृतः शरभृष्टिना दक्षिणस्योरोर्देशस्य सव्यमस्याङ्गं दक्षिणा निःकास्य स्थलम् ३ वृक्षमारुह्य ग्रामं नगरं जनपदँ वा यं द्विष्यात्तं ध्रुवोरित्यवेक्षेत स सद्यो विनश्यति ४ उद्वयं तमसस्परीत्यादित्यमवेक्षते ५ प्रत्येत्य नमो वाच इत्योषधिपाणिर्मार्जयते मार्जयते ६ ६

अवान्तरदीक्षामुपैष्यन्नुदगयने ज्यौत्स्ने पुण्ये नक्षत्रेऽन्यत्र नवम्याः प्रागस्तमयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशेऽहतेन वाससा परिणद्धः सर्वरात्रं तिष्ठेत्स्त्रीशूद्रमनभिभाषमाणः १ श्वोभूतेऽग्निँ सूर्यं गाँ हिरण्यं ब्राह्मणमुदकाँस्यं च कन्यां पतिकामामिति निदर्शयेत् २ तत्रैवाग्निमुपसमाधाय चैत्यस्याश्वत्थस्यार्द्राश्चतस्रः समिधः स्तिभिगवतीः सहपलाशाः प्रादेशमात्रीः सर्पिषि पर्यस्ताः पृथिवी समिदिति स्वाहाकारान्ताभिरादधाति ३ अग्ने व्रतपत इति व्रतं प्रदायादितः पञ्चविँशतिमनुवाकाननुवाचयेत् ४ परिणहनं गां काँस्यं च गुरवे दद्यात् ५ न नक्तं भुञ्जीत । यदि भुञ्जीतापज्वलितं भुञ्जीत ६ अहस्तिष्ठेद्रात्रावासीनः । पर्वसु चैवँ स्यात् ७ एवँयुक्तः सँवत्सरं चरेत्त्रीन्पञ्च सप्त वा । त्रैविद्यकं च चरेत् ८ समाप्ते च तान्युत्सृज्य नमो वाच इत्योषधिपाणिर्मार्जयते मार्जयते ९ ७

आरण्यँ स्वाध्यायमध्येष्यमाण उदगयने ज्यौत्स्ने शुक्रियं पूर्वाह्णे न नक्तं न भुक्त्वा न यामे न शोणितं दृष्ट्वामँ वा माँसमन्यद्वामेध्यं पर्वसु च प्रतिषिद्धम् १ प्रागस्तमयाद्धविष्यमन्नमुपयुञ्जानः २ प्रागुदयान्निष्क्रम्योत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे विष्टरपाण्योऽभिमुखास्तदनुचक्षुषो यथाकालँ स्वाध्या-यमधीत्य नमो वाच इत्योषधिपाण्यो मार्जयन्ते ३ सर्वत्र रहस्यमन्त्रप्रयोगे प्रतिपत्तिर्मार्जनं च प्रतिपत्तिर्मार्जनं च ४ ८

इति मानवसूत्रे प्रवर्ग्यकल्पः समाप्तः

इष्टिभिर्यजेत पौर्णमास्याममावास्यायाँ वा पूर्वपक्षे वा पुण्ये नक्षत्रेऽन्यत्र नवम्याः १ प्रायश्चित्तेष्टिरापत्काला । सद्यः कुर्यात् २ तूष्णीमग्निष्वन्वाधाय व्रतमुपैत्यन्यत्र नियतकालाभ्यः समृतयज्ञाच्च ३ आहवनीयोत्करावन्तरा तीर्थं चात्वालोत्करावन्तरा सचात्वालासु ४ सप्तदश सामिधेन्यः ५ पृथुपाजास्तँ सबाध इति पृथुपाजवत्यौ धाय्ये । समिद्वत्यावन्तरा धाय्यास्थानम् ६ आज्यभागस्विष्टकृतावन्तरेज्यानामावापः ७ निगदमावाहन उत्तमे प्रयाजे स्तिष्टकृति सूक्तवाके च ८ अव्यवहिताः समानदेवताः सकृदावपेत्प्रतीच्यँ व्यवहिताः ९ वाजिनो नावाहयति १० पशुपुरोडाशँ यानि चान्वायतन्ते त्रिमात्राणि भवति ॥ ये३ यजामह आदि-रेह्यावहेति चो श्रावयेत्यादितो द्वे ब्रूहिप्रेष्यश्रौषड्वौषट्सूपोत्तमँ याज्यान्तश्च । तस्मिन्संध्यक्षराण्यप्रगृह्याणि विवेकेन प्लवन्ते ११ शस्त्रानुवचनयोरुत्तममक्षरँ स्वराद्योकारी भवति १२ ऋक्समवाये त्रिः प्रथमोत्तमे १३ प्रणवेनर्चः संदधाति १४ अग्न्याधेयेष्टिष्वारम्भणीयानुनिर्वाप्या १५ अनीकवतसांतपनक्रीडिनेषु पञ्चदश सामिधेन्यः १६ राजन्यात्रिवध्र्यश्ववसिष्ठवैश्यशुनकानां कण्व-कश्यपसंकृतीनां नराशँसो द्वितीयः प्रयाजस्तनूनपादन्येषामुभौ यत्र समाम्नातौ १७ यस्यै देवतायै वषट्कुर्यात्तां मनसा ध्यायेत् १८ आग्नेयेनाष्टाकपालेन स्वर्गकामो यजेत पौर्णमासतन्त्रेण १९ अग्निर्वृत्राणि जङ्घनत्त्वँ सोमासि सत्पतिरिति वार्त्रघ्नावाज्यभागौ २० अग्निर्मूर्धा भुवो यज्ञस्येति हविषः २१ पिप्रीहि देवानग्ने यदद्येति स्विष्टकृतः सँयाज्ये २२ पौर्णमासतन्त्रमनादेशे २३ कपाले नष्टे प्रयुक्तानां प्रागुद्वासनादग्नये वैश्वानराय द्वादशकपालं निर्वपेत् २४ भार्गवो होता २५ एकहायनो गौर्दक्षिणा २६ प्रायश्चित्तिः कल्पः २७ अग्ने रक्षा णस्त्वं नः सोमेति रक्षितवन्तावाज्यभागौ २८ वैश्वानरो न ऊत्या पृष्टो दिवीति हविषः २९ विश्वानि नोऽग्ने त्वं पारयेति पारयद्वत्यौ सँयाज्ये ३० सर्वास्वारम्भणीयासु पौर्णमासतन्त्रम् ३१ अग्न्याधेये त्रिहविरारम्भणीया चतुर्हविर्वा ३२ अग्नाविष्णू सजोषसेति षट्त्रिहविषः ३३ त्वमग्ने वीरवत्त्वं भगो न इत्याग्नावैष्णवादनन्तरे चतुर्हविषः ३४ यदि काम्यो भगी नानातन्त्रः

३५ वैराजः कल्पः ३६ अग्निः प्रत्नेन मन्मना सोम गीर्भिष्ट्वा वयमिति वृधन्वन्तावाज्यभागौ ३७ आम्नाते हविषः ३८ प्रेद्धो अग्न इति विराजौ सँयाज्ये ३९ १ अग्न्याधेयेष्टीनां पवमानस्याग्न आयूँषि पवस इति द्वे हविष उत्तरे स्विष्टकृतः १ अग्ने पावक रोचिषेत्युत्तरयोश्चतस्र उत्तरे स्विष्टकृतः २ चतुर्हविषो वैराजः कल्पः ३ आम्नावैष्नवस्याम्नाते ४ किमित्ते विष्ण इति षडुत्तरेषाम् ५ पुनराधेये प्रयाजानुयाजानां पुरस्ताद्वोपरिष्टाद्वा विभक्तीः कुर्याद्ये३यजामहे समिधः समिधोऽग्ना आज्यस्य व्यन्त्वग्निरग्निस्तनूनपादग्ना आज्यस्य वेत्वग्निमग्निमिडोऽग्ना आज्यस्य व्यन्त्वग्नेरग्नेर्बर्हिरग्ना आज्यस्य वेत्वग्नेरग्नेरिति । यथाम्नात उत्तमः ६ अग्निँ स्तोमेन बोधयेति षडाज्यभाग-हविःस्विष्टकृताम् ७ आग्नेयावाज्यभागावग्निर्मूर्धेति प्रजाकामस्य पशुकामस्य वा सोमस्य लोके कुर्यात् ८ देवं बर्हिर्वसुवने वसुधेयस्य वेत्वग्नेरग्नेर्देवो नराशँसो वसुवने वसुधेयस्य वेत्वग्नेरग्नेरिति । यथान्मात उत्तमः ९ अग्नये ज्योतिष्मतेऽष्टाकपालं निर्वपे द्वारुणँ यवमयं चरुम् १० त्वमग्ने सप्रथा असि वृषा सोमेति वृषरावन्तावाज्यभागौ ११ अग्निर्जातो अरोचतेति हविषश्चतस्रः १२ अग्नयेऽग्निमतेऽष्टाकपालं निर्वपेन्मैत्रं चरुँ सौर्यमेककपालमग्नये व्रतपत-येऽग्नये पथिकृतेऽग्नये शुचयेऽग्नये क्षामवतेऽग्नये तपस्वते जनद्वते पावकवतेऽग्नये तन्तुमतेऽग्नये विविचे ष्टाकपालान् १३ प्रायश्चित्तिः कल्पः १४ अग्निनाग्निः समिध्यत इति षोडश हविषाम् १५ स्वयं कृन्वानस्त्वं तन्तुरिति तनुमत्यौ १६ वि ते विष्वग्वातजूतासो अग्ने भामासः शुचे शुचय-श्चरन्ति तुविम्रक्षासो दिव्या नवग्वा वना वनन्ति धृषता रुजन्तः ॥ त्वामग्ने मानुषीरीडते विशो होत्राविदँ विविचिँ रत्नधातमम् गुहा सन्तँ सुभग विश्वदर्शतं तुविष्वणसँ सुयजं घृतश्रियम् ॥ इति वैविच्यौ १७ २

वैश्वदेवेऽग्नये मथ्यमानायानुब्रूहीत्युक्तेऽभि त्वा देव सवितरिति प्रतिपद्यते ॥ दस्युहन्तममिति विरमति १ अग्नये जातायानुब्रूहीत्युक्ते धनंजयँ रणे रणो३मिति प्रतिपद्यते ॥ बिभ्रतीति विरमति २ अग्नये प्रह्रियमानायानुब्रूहीत्युक्ते विशामग्निँ स्वध्वरो३मिति प्रतिपद्यते ३ यज्ञेन यज्ञमिति परिदधाति ४ अत्रैव तिष्ठन्सामिधेनीरन्वाह ५ समिधो अग्न इति नव प्रयाजाः ६ अग्ने यं त्वं नः

सोमेति विश्वतवन्तावाज्यभागौ ७ अग्निर्मूर्धा भुवो यज्ञस्येति षोडश हविषाम् ८ स हव्यवाडग्निँ स्तोमेनेति गायत्र्यौ सँयाज्ये ९ देवं बर्हिरिति नवानुयाजाः १० शं नो वाजेवाज इति वाजिनस्याव्यवानँ होतोर्ध्वजुरासीनो यजति । वाजिनस्याग्ने वीहीत्यनुवषट्करोति ११ वरुणप्रघासेष्वग्निप्रनयनकाले पश्चा-दाहवनीयस्योपविशति १२ अग्नये प्रणीयमानायानुब्रूहीत्युक्ते प्र देवमिति प्रतिपद्यते । त्रिर्वचनस्यार्धर्च शिष्ट्वा विरमति १३ हुते हव्या नो वन्नदानुषगित्युपोत्तिष्ठत्यमृतादिव जन्मन इति विरमति १४ तूष्णीमन्वेत्या-धानवेलायाँ सहसश्चित्सहीयानिति प्रतिपद्यते १५ त्वं दूत इति परिदधाति १६ अग्निमन्थनप्रभृति वैश्वदेवेन व्याख्यातम् १७ अग्निना रयिमश्नवद्द्यस्फान इति रयिमन्तावाज्यभागौ १८ ऊर्ध्वं पञ्च संचरेभ्यः । चतुर्णामिन्द्राग्नी रोचनेत्यष्टौ १९ पिप्रीहि देवानग्ने यदद्येति स्विष्टकृतः सँयाज्ये २० अवभृथेऽष्टौ ध्वानेन चरति २१ प्रयाजप्रभृति यजति २२ बर्हिष्मन्तमुदूहति २३ स्वाहाग्नीवरुणौ होताराविति स्विष्टकृत्स्थाने २४ अप्स्वग्ने सधिष्ट्वाप्सु मे सोम इत्यप्सुमन्तावाज्यभागौ २५ उदुत्तममव ते हेड इति हविषः २६ त्वं नो अग्न इत्यनूच्य ये३ यजामहेऽग्नीवरुणौ स्विष्टकृतावयाष्टामग्नी-वरुणावग्नेः प्रिया धामान्ययाष्टाँ सोमस्य प्रिया धामान्ययाष्टाँ वरुणस्य प्रिया धामान्ययाष्टां देवानामाज्यपानां प्रिया धामानि यन्नतो ऽग्नीवरुणयोर्होत्रोः प्रिया धामानि यन्नतः स्वौ महिमानावायजेयातामेज्या इषः कृणुतां तावथ्वरा जातवेदसौ जुषेताँ हविः स त्वं न इति यजति २७ ३

साकमेधेष्वग्निर्वृत्राणि जङ्घनदिति षडनीकवतस्यैष एव मृते कल्पः १ सांतपनस्योत्तरे हविषः २ अग्निः प्रत्नेन मन्मनेति षड्गृहमेधीयस्य ३ आज्यभागप्रभृति यजति ४ ऋचमनूच्यर्चा स्विष्टकृतम् ५ इडान्ता संतिष्ठते ६ अग्निमीड इति षट्क्रीडिनस्य ७ वैश्वकर्मणान्तानाँ वार्त्रघ्नः कल्पः ८ अग्निप्रणयनप्रभृति सिद्धं यथा वरुनप्रघासेषु ९ ऊर्ध्वं पञ्च संचरेभ्य ॥ इन्द्राग्नी नवतिमिति षट्त्रयाणाम् १० पितृयज्ञ उशन्तस्त्वा हवामह इत्येकाँ सामिधेनीं त्रिरन्वाह ११ अग्ने महं असि ब्राह्मण भारत मानुषेति न प्रवृणीते १२ देवेद्धो मन्विद्ध इति यथाम्नातम् १३ अग्निं कव्यवाहनमावहेति स्विष्टकृत्प्रवादे

कव्यवाहनप्रवादः १४ अपवर्हिषः प्रयाजानुयाजान्यजति १५ आ नो अग्ने त्वँ सोमेति जीवितवन्तावाज्यभागौ १६ उत्तरा द्वादश हविःस्विष्टकृताम् १७ इदं पितृभ्य उदीरतामित्युदूह्येते १८ द्वेद्वे पुरोनुवाक्ये १९ तासामृचमर्धमर्चभागं करोति २० तृतीयया यजति २१ ये स्वधामह इत्यागूः २२ स्वधा नम इति वषट्करोति २३ आदित्यस्य पौर्णमासतन्त्रम् २४ सुत्रामाणम् महीमू ष्वित्युपाँशुहविषः २५ शुनासीर्यँ वैश्वदेवेन व्याख्यातम् २६ ऊर्ध्वं पञ्च संचरेभ्यः ॥ प्र वायुमिति षट्त्रयाणाम् २७ उपाँशुदेवतानामुपाँशुदेवतामादिशति याज्यानुवाक्ये चाजुषतावीवृधता कृतेति चोपाँशुवायव्याः २८ ४

काम्या उपाँशुदेवताः । तास्वेकधनमनादिष्टदक्षिणासु दद्यात् १ सांग्रामिकीषु वार्त्रघ्नः कल्पः २ अभिचरणीयासु च स यदादीनां प्रायश्चित्तिकल्पः ३ ग्रामकामभूतिकामपशुकामानाँ रयिमन्तावाज्यभागौ ४ ग्रामकामभूतिकामयोः संम्वत्त्यौ सँयाज्ये सहस्रवत्यौ पशुकामस्य ५ ग्रामकामतन्त्रेणैन्द्राग्नेन वियात्सु वियातेषु वा सजातेषु यजेत ६ तस्या इन्द्राग्नी रोचनेति द्वे हविषः ७ वार्त्रघ्नकल्पेन भ्रातृव्यवान् ८ वार्त्रघ्नावाज्यभागौ ९ इन्द्राग्नी नवतिमिति द्वे हविषः १० जुष्टो दमूना अग्ने शर्धेति शर्धवत्यौ सँयाज्ये ११ प्रजाकामस्य वृषण्वन्तावाज्यभागौ १२ प्र वामर्चन्तीति द्वे हविष । उत्तरे स्विष्टकृतः १३ संग्राममभिप्रयान्संग्रामसाँयाज्ये । सँयत्यैताभ्यामिष्ट्वा वानिष्ट्वा वा जित्वोत्तरया यजेत १४ तस्या इन्द्राग्नी रोचनेति द्वे हविष । उत्तरे पूर्वयोः १५ परं जनपदमभिप्रयान्द्विहविषा यजेत । यदि सेनया वार्त्रघ्नः कल्प । यदि जनेन ग्रामकामं तन्त्रम् १६ या वाँ सन्तीति द्विहविषोश्चतस्रः १७ क्षेत्रमध्यवस्यँस्त्रिहविषा यजेत १८ तस्या ग्रामकामं तन्त्रम् १९ या वाँ सन्तीति षड्ढ विषाम् २० सँ समित्सखाय इति सँवत्यौ सँयाज्ये २१ अग्नये वैश्वानराय द्वादशकपालं निर्वपेत्कामाय सर्वकामाय २२ यथाकामं तन्त्रम् २३ वैश्वानरो न ऊत्या पृष्टो दिवीति हविषो । ऽनाम्नातयाज्यानुवाक्यानामेते वैश्वानरीयाणाम् २४ अग्निर्मूर्धा भुवो यज्ञस्येत्याग्नेयानाम् २५ अग्नीषोमा सवेदसा युवमेतानीत्यग्नीषोमीयाणाम् २६ लिङ्गवत्योऽन्यासाम् २७ अर्वाक्काला-

त्संधावभिध्रोद्द्यन्यजेत २८ प्रायश्चित्तिः कल्पः २९ सनिमभ्युत्थास्यन्यजेत ३० रयिमन्तावाज्यभागौ ३१ ऋृतावानमिति द्वे हविषः ३२ इडामग्ने त्वं नो अग्न इति सनिमत्यौ सँयाज्ये ३३ स यदा वन्वीताथोत्तरया यजेत ३४ यं द्विष्यात्तस्मै सनिँ सातां गां कराठबन्धमेकहायनं दद्यात् ३५ वैश्वानरस्येति द्वे हविषः ३६ दुष्टमभोज्यस्य वान्नमशिष्यन्यजेत ३७ सीसम् दक्षिणा कृष्णँ वा वासः ३८ रक्षितवन्तावाज्यभागौ ३९ विश्वँ विव्याचेति द्वे हविष । उत्तरे स्विष्टकृतः ४० एतयेष्ट्वा वानिष्ट्वा वा जग्ध्वोत्तरया यजेत ४१ समानीय दक्षिणा ४२ याज्यानुवाक्ये च व्याख्याते ४३ तथा सांग्रामिक्यौ य इछेदयमेव राजा स्याद्यावदिमान्यवान्व्रीहीन्वादधीयेति ४४ तस्य चेदपरो धावेत वार्त्रघ्नः कल्पः । यदि मृत्योर्जीवितवान् ४५ द्विहविरामयाविनः ४६ जीवितवन्तावाज्यभागौ ४७ पारयद्वत्यौ सँयाज्ये ४८ जीवितवान्कल्पः ४९ द्विहविर्भूतिकामस्य ५० इयाँश्चरुः । प्रादेशमात्रम् ५१ आम्नाता हविषाम् ५२ सर्वस्वं दत्त्वाग्नये जातवेदस इति त्रिहविषा यजेत ५३ तस्याः पशुकामं तन्त्रम् ५४ न्यग्निं जातवेदसमिति द्विहविषोश्चतस्त्रः ५५ आम्नाते वैश्वानरीयस्य ५६ अभिशस्यमानस्य ५७ उपवत्स्वशनं भुक्त्वा सँस्रवे ग्रामस्य पुरस्ताद्वाग्यतो वसति ५८ श्वोभूतेऽग्निँ समारोप्य मथित्वा यज्ञायुधैर-न्वेत्याग्नये सुरभिमतेऽष्टाकपालं निर्वपेत् ५९ रक्षितवन्तावाज्यभागौ ६० अग्निर्होतेति द्वे हविष । उत्तरे स्विष्टकृतः ६१ अग्नये पवमानायेति त्रिहविषा गृहानेत्य यजेत ६२ प्रायश्चित्तिः कल्पः ६३ आम्नाता हविषाम् ६४ आग्ने-यमष्टाकपालमिति त्रिहविषा ६५ आम्नातः कामः ६६ यः परजनपदा-त्सेनयाभिनिर्जित्य हरति स नृज्यायं जित्वोत्तरया यजेत ६७ तस्यां मही द्यौः पृथिवी च नो घृतवती भुवनानामिति द्यावापृथिवीयस्य ६८ अग्नीषो-मीयमेकादशकपालं निर्वपेद्ब्राह्मणः कामाय सर्वकामाय ६९ यथाकामं तन्त्रम् ७० उत्तरा भूतिकामस्य ७१ अनीषोमीयमेकादशकपालं निर्वपे-च्छ्यामाकँ वसन्ता ब्रह्मवर्चसकामः ७२ पृथुपाजास्तँ सबाध इति षड्धाय्याः । षडुत्तरा आज्य भागहविःस्विष्टकृताम् ७३ सौमापौष्णं चरुं निर्वपेदर्धपिष्टं पशुकामः ७४ सोमापूषणेति द्वे हविषः ७५ उत नो ब्रह्मन्नू नो रास्वेति सहस्रवत्यौ सँयाज्ये ७६ सौमेन्द्रं चरुं निर्वपेत्पुरोधाकामः ७७ तस्या

ग्रामकामं तन्त्रम् ७८ त्वा युजा तव तत्सोमेति द्वे हविषः ७९ आग्निवारुणं चरुं निर्वपेत्समान्तमभिद्रुह्यामयावी वा ८० यथाकामं तन्त्रम् ८१ त्वं नो अग्ने स त्वं नो अग्न इति हविषः ८२ ५

सौमारौद्रं घृते चरुं निर्वपेच्छुकलानाँ व्रीहीणां प्रादेशमात्रं ब्रह्मवर्चसकामः १ श्वेतानां गवामाज्यम् २ तैष्यां पौर्णमास्याँ यजेत ३ नास्य ताँ रात्रीमपो गृहान्प्रहरेयुः ४ आज्यस्योदकार्थान्कुर्वन्तीष्ट्यामग्निहोत्रे च ५ परिश्रित्योद्यत्सु रश्मिषु प्रचरति ६ अग्निँ वः पूर्वं गिरा मक्षू देववत इति मनोर्ऋचः षड्धाय्याः ७ वार्त्रघ्नावाज्यभागौ ८ सोमारुद्रा युवमिति द्वे हविषः ९ गायत्र्यौ सँयाज्ये १० सद्यः सौमापौष्णेन यजेतान्ततः पौर्णमास्या ११ सौमारौद्रं चरुं निर्वपेत्कृष्णानाँ व्रीहीणामभिचरन् १२ शरमयं बर्हिर्वैभीदक इध्मः १३ सोमारुद्रा विवृहतमिति द्वे हविषः १४ सौमारौद्रं चरुं निर्वपेत्कृष्णशुक्लानाँ व्रीहीणाँ यः कामयेत द्वितीयोऽस्य सपत्नो विषये स्यादिति १५ अर्धँ शरमयं बर्हिर्भवत्यर्धो वैभीदक इध्मः १६ क्षीरोत्सिक्ते श्रपयति १७ सौमारौद्री-मामिक्षां निर्वपेत् १८ आमयाविनँ याजयेत् १९ जीवितवान्कल्पः २० सामिधेनीरनुवक्ष्यन्होता स्वपाठः संमुखं परिणह्यते । समाप्तेऽरण्यम् पराणीय विदर्शयेत् २१ तस्मा अनड्वाहं दद्यात्तं घ्नीत तस्याश्नीयादन्नेष्टिदक्षिणा २२ आग्नावैष्णवमेकादशकपालं निर्वपेदभिचरन्नभिचर्यमाणो वा २३ सरस्व-तीमप्याज्यस्य यजेत् २४ अभिचर्यमाणस्य प्रायश्चित्तिः कल्पो वार्त्रघ्नो-ऽभिचरतः २५ अग्नाविष्णू सजोषसाग्नाविष्णू महि धाम प्रियँ वामित्या-ग्नावैष्णवस्य ॥ पावका नःसरस्वती सरस्वत्यभि नो नेषि वस्य इति सारस्वतस्य २६ चक्षुष्कामस्य विश्ववन्तावाज्यभागौ २७ विराजौ सँयाज्ये २८ शतमानो दक्षिणा २९ आग्नावैष्णवमेकादशकपालं निर्वपेदभिचर्यमा-णस्य व्याख्याताः ३० तथा सांग्रामिकीँ यदि मन्येत प्रति पुरस्ताच्चरन्ती-त्यग्नाविष्णू सजोषसेति तिस्रः । तासां द्वे पुरोनुवाक्ये कुर्यादेकाँ याज्यां तथा सारस्वतस्य ३१ आग्नावैष्णवं प्रातरष्टाकपालमित्यध्वरकल्पाह्नः कालेषु । पृथक्तन्त्रानूबन्ध्याकाले मैत्रावरुण एककपालः पयस्या वा ३२ यस्य भ्रातृव्यः सोमेन यजेत सुत्याध्वरकल्पँ संदध्यात् ३३ वार्त्रघ्नः कल्पः ३४ आग्ना-

वैष्णवस्याम्नाते । तथा सारस्वतस्य ३५ बृहस्पते जुषस्व न एवा पित्र इति बार्हस्पत्यस्योत्तरे मैत्रावरुणस्य ३६ अष्टमे चतस्रो निगदव्याख्याताः ३७ वृष्टिकामस्यौर्वभृगुवदा सवमिति धाय्ये । षडुत्तरा आज्यभागहविःस्वि-ष्टकृताम् ३८ मारुतमधिश्रित्य प्राक्पर्यग्निकरणात्प्रियङ्गवे गोमूत्रस्याश्चोतयेत् ३९ प्रिया वो नाम श्रियस इति द्वे हविषः ४० त्रयोदशकपाले यदि गौः सा दक्षिणा । यथाकामं पुत्रयोः ४१ प्रायश्चित्तिः कल्पः ४२ मरुतो यद्ध वो दिवः प्रैपामज्मेष्विति हविषः ४३ सप्तकपाले कयाशुभीयस्यैकादश सामिधेनीः । त्रिः प्रथमोत्तमे ४४ अग्नी रक्षाँसि सेधतीत्याज्यभागौ ४५ चतस्रोऽतिशिष्टा हविःस्विष्टकृताम् ४६ ६

ऐन्द्रमेकादशकपालं निर्योन्मारुतँ सप्तकपालँ । राजन्यं भूतिकामँ याजयेत् १ इन्द्रँ वो विश्वतस्पर्या ते शुष्म इत्यैन्द्रस्योत्तरे मारुतस्य २ ऐन्द्रमेकादशकपालं निर्वपेन्मारुतँ सप्तकपालँ यः कामयेत विट्च क्षत्रं च समासाद्येयातामिति ३ यदि कामयेतातुर्मुह्यँ स्यादिति हविषी आसाद्य पूर्वार्धेऽन्यां ग्रामस्य गामपाकुर्यात्पश्चार्धेऽन्यामपि । ते संगछेते ४ वार्त्रघ्नः कल्पः ५ ऐन्द्रस्याव-दायेन्द्रायानुब्रूहीत्यनुवाचयति ६ आ तू न इन्द्रेत्यन्वाह ७ आश्राव्य मरुतो यजेति प्रेष्यति ८ ऋष्टयो वो मरुत इति यजति ९ मारुतस्यावदाय मरुद्भ्योऽनुब्रूहीत्यनुवाचयति १० मरुतो यद्ध वो बलमित्यन्वाह ११ आश्राव्येन्द्रँ यजेति प्रेष्यति १२ त्वं महं इन्द्रेति यजति १३ पुरुत्रा हि सदृङ्ङसीति सँयाज्ये १४ यथेज्यमुपलक्षयते स्विष्टकृति सूक्तवाके च १५ यदि कामयेत कल्पेतेत्येते एव हविषी निरुप्य यथायथँ यजेत् । कल्पतेऽह १६ ऐन्द्रमेकादशकपालं निर्वपेन्मारुतँ सप्तकपालमभिचरन् १७ उपरिष्टा-दैन्द्रस्यावद्येदपर्यावर्तयन्नधस्तान्मारुतस्य १८ ऐन्द्रमेकादशकपालं निर्व-पेन्मारुतीमामिक्षाँ । राजन्यं ग्रामकामँ याजयेत् १९ पात्र्याँ व्युदुह्यामिक्षामध्ये पुरोडाशं निधाय समवदाय प्रचरति २० इन्द्रमरुद्भ्योऽनुब्रूहीत्यनुवाचयति २१ आश्राव्येन्द्रमरुतो यजेति प्रेष्यति २२ ऐन्द्रामारुत्यौ याज्यानुवाक्ये २३ मारुतमेकविँशतिकपालं निर्वपेदभिचरन् २४ आज्यभागाभ्यां प्रवर्य बर्हिषि पुरोडाशं निधाय स्फ्येने दमहममुष्यामुष्यायणस्येति स्फ्येन प्राञ्चँ संभिनत्ति २५

एना व्याघ्रमिति स्फ्यँ सँस्तौति २६ कालातिपत्तौ पाथिकृती पशौ दर्शपूर्णमासयोश्चातुर्मास्यपर्वसु नवाशने वाग्रायणस्य २७ व्रातपत्यकामाश्रुषु व्रातपती २८ चतसृणां प्रायश्चित्तिः कल्पो वार्त्रघ्नस्तिसृणाम् २९ अग्ने नयेति षोडश हविषाम् ३० विष्णुमप्याज्यस्य यजेत् ३१ अग्नये रुद्रवतेऽष्टाकपालं निर्वपेद्यः कामयेत रुद्रायास्य पशूनपिदध्यादिति ३२ यदि कामयेत शाम्येदित्यग्नये सुरभिमतेऽष्टाकपालं निर्वपेत् ३३ व्याख्यातमाज्यभागहविःस्विष्टकृताम् ३४ अग्नयेऽन्नवतेऽन्नादायान्नपतये ऽष्टाकपालमष्टाकपालान्वा ३५ वैराजः कल्पः ३६ उक्षान्नाय वातोपधूत इति हविषः ३७ अग्नये रक्षोघ्नेऽष्टाकपालं निर्वपेद्यो रक्षोभ्यो बिभीयात् ३८ नक्तँ याजयेत् ३९ कृणुष्व पाज इत्येकादश सामिधेनीः । त्रिः प्रथमोत्तमे ४० अग्नी रक्षाँसि सेधतीत्याज्यभागौ ४१ चतस्रोऽतिशिष्टा हविःस्विष्टकृताम् ४२ आग्नेयमष्टाकपालं निर्वपेद्यो राष्ट्रे स्पर्धेतान्नाद्यकामो वा ४३ सिद्धमासादनात् ४४ ओजोऽसीति हवीँष्यासन्नान्यभिमृशेत् ४५ एतेनैव प्राक्स्विष्टकृतो जुहोति ४६ युक्ष्वा हि देवहूतमानिति नव धाय्याः । षडुत्तरा आज्यभागहविःस्विष्टकृताम् ४७ ऐन्द्राबार्हस्पत्यँ हविर्निर्वपेद्यो राष्ट्रीयो न विजयेत ४८ बृहस्पतये निरुप्येन्द्राय सँस्कृत्योभाभ्यां प्रचरेत् ४९ वार्त्रघ्नः कल्पः ५० इदँ वामास्य इति द्वे हविषः ५१ ७

आदित्यं घृते चरुं निर्वपेन्निरुद्धँ याजयेत् १ सिद्धमा निर्वपणात् २ पुरस्तात्सावित्रस्य जपेत् ३ आदित्या भागँ वः करिष्याम्यमुमामुष्यायणमवगमयतेति निरुद्धस्य नाम गृह्णीयात् ४ हवीँष्यासाद्य सप्ताश्वत्थान्मयूखानन्तर्वेदि पुरस्तात्प्रदक्षिणुतान्निदधाति ५ तान्सँस्थिते रथवाहनस्य मध्यमेषायामतिहन्यात् ६ इदमहमादित्यान्बध्नाम्यामुष्यावगम इति निरुद्धस्य नाम गृह्णीयात् ७ यदि सप्ताहे नावगछेदिध्मे मयूखानुपसंनह्यैवं द्विः सप्ताहे सप्ताहे यजेत ८ यदि प्रथमे नावगछेदुत्तराभ्यामिष्ट्वा धारयद्वत्या यजेत ९ यदि द्वितीय उत्तरया यजेत । यद्युत्तमेऽन्ततो धारयद्वत्या १० दार्शपौर्णमासिक इध्मे मयूखानुपसंनह्यापि वादितेऽनुमन्यस्व सत्याशीरिह मन इति निरुद्धस्य दक्षिणात्पदात्पासूनपाददीत । तद्यः पुरस्ताद्ग्राम्यवादीव स्यात्तस्मिन्सभाया-

मुपपिष्टेऽभिवातं पाँसून्ध्वँसयेयुः प्रेत मरुतः स्वतवस एना विश्पत्यामुँ राजानमभीति ११ ग्राम्यवादिनो गृहाद्व्रीहीनाहृत्य त्रेधा तान्विचिनुयाद्ये कृष्णास्तान्कृष्णाजिन उपनह्य निदध्या द्ये शुक्लास्तमादित्यं घृते चरुं निर्वपेत् १२ आदित्यँ सँस्थाप्य येभ्योऽधि विचिनुयात्तानुदङ्परेत्य वल्मीकवपामुद्रुज्य यदद्य ते घोर आसन्निति जुहोति १३ प्रत्येत्य वारुणेन यजेतान्ततो धारयद्वत्या १४ तासामेह्यूषु ब्रवाणि त इमँ यज्ञमिति हूतवन्तावाज्यभागौ १५ त्यान्नु क्षत्रियान्येभ्यो मातेति हविषः १६ नित्ये सँयाज्ये १७ धारयद्वत्याँ वार्त्रघ्नः कल्पः १८ धारयन्त आदित्यास इति द्वे हविषः १९ ८

सौर्यं घृते चरुं निर्वपेच्छुक्लानाँ व्रीहीणां ब्रह्मवर्चसकामः १ उद्वा-सयञ्शातमानिकौ रुक्मौ राजतमधस्तात्कुर्याद्धरितमुपरिष्टात् २ प्रयाजेप्रयाजे त्रियवं कृष्णलं जुहोति ३ सौमारौद्रं तन्त्रम् ४ तत्सूर्यस्य भद्रा अश्वा इति हविषः ५ शतकृष्णलायां चत्वारिचत्वारि कृष्णलान्यवदानमेकं प्राशित्रमे-कमवान्तरेडा ६ चरुं ब्रह्मने परिहरति ७ निश्चूष्य भक्षानुपयछन्ति ८ जीवितवान्कलपः ९ हिरण्यगर्भो यः प्राणत इति हविषः १० बार्हस्पत्यं चरुं निर्वपेत्पुरोधाकामः ११ तस्या ग्रामकामं तन्त्रम् १२ ऐन्द्राबार्हस्पत्यस्याम्नाते १३ बार्हस्पत्यं चरुं निर्वपेत्पयसि ग्रामकामः पशुकामो वा १४ बहुपुष्टस्य गृहात्क्षीरमाहृत्य स्वासां च गवां प्रणीतोदकेन सँसृज्य चरुँ श्रपयति १५ ब्राह्मणस्पत्यं चरुं निर्वपेत्संग्रामं जिगीषन्सेनयोः संदृश्यमानयोः १६ उद्बर्हिः प्रस्तर इषुणां बाणवन्तः परिधयः पत्त्रतो मूलानि १७ प्रस्तरमनुप्रह-रन्पात्र्यामुपादधीत १८ ब्राह्मणस्पत्यं चरुं निर्वपेद्यत्र कामयेत ब्रह्मबलँ स्यादिति १९ बृहस्पतिः प्रथमं जायमान इत्यष्टौ हविषाम् २० न बृहत्या वषट्करोति २१ अनुवाक्यायाश्चत्वार्यक्षराणि याज्यामभ्यत्यूहति २२ उत्तिष्ठ ब्रह्मणस्पते देवयन्तस्त्वेमहे उप प्रयन्तु मरुतः सुदानवा इन्द्र प्राशोम् ॥ इत्यन्वाह ॥ भवा सचाग्निरुक्थ इति यजति २३ गार्मुते बृहस्पते जुषस्व न एवा पित्र इति बार्हस्पत्यस्य । सौमापौष्णस्याम्नाते २४ प्राजापत्यमधिश्रित्य प्राक्पर्यग्निकरणाद्गार्मुते गोमूत्रस्याश्चोतयेत् २५ वास्त्वभयः कणिकः २६ प्रायश्चित्तिः कल्पः २७ नमस्ते रुद्र मन्यव इमा रुद्रायेति हविषः २८

निषादस्थपतेरिष्टिः २९ आम्नाता दक्षिणा ३० राजा परमेष्ठिकामः परमेष्ठिने द्वादशकपालं निर्वपेत् ३१ प्राक्स्विष्टकृतोऽधिज्यं धनुस्तिस्रश्चेषूरग्निष्टे तेज इति यजमानाय प्रयछति । सा दक्षिणा ३२ वैश्वदेवं द्वादशकपालं निर्वपेद्भ्रातृव्यवान् ३३ आज्यभागाभ्यां प्रचर्य बर्हिषि पुरोडाशं निधाय स्फ्येनेदमहं मां चामुं च व्यहामीति यं द्विष्यात्तस्य नाम गृह्णीयाद्बर्हिष्यवसन्नँ स्फ्ये च श्लिष्टं तद्विष्णव उरुक्रमायावद्येत् ३४ तं पुनः समूहेदिदमहं मां चामुं च समूहामीति योऽस्य प्रियः स्यात्तस्य नाम गृह्णीयादनावाह्य पूर्वं विष्णुमुरुक्रमँ यजेत् ३५ इन्द्राण्यै चरुं निर्वपेत्सेनायामुत्तिष्ठन्त्यामिध्मे बल्बजानुपसंनह्य ३६ श्रीकामस्य भूतिकामं तन्त्रम् ३७ को अद्धा वेदेति दश हविषाम् ३८ ९

अग्नये वसुमत इति चतुर्हविषः संज्ञानी १ य इछेत्समानं मा श्रेष्ठिभिः संमन्येरन्निति स एतया यजेत २ तस्या ग्रामकामं तन्त्रम् ३ समवदाय प्रचरति ४ अग्नये वसुमते सोमाय रुद्रवत इन्द्राय मरुत्वते वरुणा- यादित्यवतेऽनुब्रूहीत्यनुवाचयति ५ आश्राव्याग्निँ वसुमन्तँ सोमँ रुद्रवन्तमिन्द्रं मरुत्वन्तँ वरुणमादित्यवन्तँ यजेति प्रेष्यति ६ अग्नि प्रथमः सम्ग्निरिति हविषः ७ संज्ञात एवैन्द्रेण यजेत ८ संज्ञानं नो दिवेत्येताभिरुभयोः प्राक्स्विष्टकृतो जुहोति ९ आग्नेयमष्टाकपालमिति चतुर्हविषा हिरण्ये नष्टे यजेत १० रयिमन्तावाज्यभागौ ११ अग्ने दा इत्यष्टौ हविषाम् १२ सनिमत्यौ सँयाज्ये १३ विन्देतैव पुनर्यजेत १४ राजयक्ष्मगृहीतोऽमावास्यायामाचमनान्तं कृत्वान्यदिध्माबर्हिः संनह्य निशि वैश्वदेवेन यजेत १५ प्रायश्चित्तिः कल्पः १६ पूर्वापरमिति द्वे हविषः १७ यथादित्या इति प्राक्स्विष्टकृतो जुहोति १८ इन्द्राय राज्ञ इति त्रिहविर्षाद्धिरुत्तरउत्तरः पुरोडाशो वर्षीयान् १९ तस्या ग्रामकामं तन्त्रम् २० प्राच्यां दिशीति तिस्रो हविषाम् २१ इन्द्राय राज्ञेऽनुब्रूही प्रथमामन्वाहेन्द्रँ स्वराजानँ यज मध्यमया यजति २२ इन्द्राय स्वराज्ञे ऽनुब्रूही मध्यमामन्वाहेन्द्रमधिराजानँ यज उत्तमया यजति २३ इन्द्रायाधिराजा- यानुब्रूह्येतामेवान्वाहेन्द्रँ राजानँ यज पूर्वया यजति २४ यथेज्यमुपलक्ष्यते स्विष्टकृति सूक्तवाके च २५ तेजस्कामस्य भूतिकामं तन्त्रम् २६ उत्तरा

पशुकामस्य २७ आ यस्मिन्निति हविषोश्चतस्रः २८ आर्कवतस्योत्तरः २९ इन्द्रायार्कवत इति चतस्रः ३० निरुद्धस्य हूतवन्तावाज्यभागौ ३१ नित्ये संयाज्ये ३२ वशा दक्षिणा ३३ यः कामयेत परजनपदे म ऋध्येतेति । तस्या ग्रामकामं तन्त्रम् ३४ गतश्रीः श्रियो न व्यच्येयेति यजेत ३५ प्रायश्चित्तिः कल्पः ३६ यः कामयेत बहुदक्षिणेन यज्ञेन यजेयेति । तस्याः पशुकामं तन्त्रम् ३७ इन्द्राय धर्मवत इति चतुर्हविः ३८ आ ते महो यो जात एवेति मनस्वतः । आम्नात इतरेषाम् ३९ इन्द्रायाँहोमुच इति सप्त ४० तृतीयया ज्येष्ठः कुलीनः संपन्नो यजेत ४१ द्वयोः प्रायश्चित्तिः कल्पो । ग्रामकामं तन्त्रमेकस्याँ । वार्त्रघ्न उत्तरासाम् ४२ विवेष यदिति चतुर्दश हविषाम् ४३ ऐन्द्रमेककपालमिति सप्त ४४ इन्द्राय वज्रिण इति त्रिहविर्यस्य भ्रातृव्यः सोमेन यजेत ४५ सुत्येष्टिँ संदध्यात् ४६ हूतवन्तौ पूर्वयोर्वार्त्रघ्न उत्तरासाम् ४७ अर्वावतो न आगहीति चतुर्दश हविषाम् ४८ इन्द्रं नर इति त्रयोदशकपाले प्राक्स्विष्टकृतो जुहोति ४९ इन्द्राय मन्युमत इति तिस्रः ५० यं जीवग्राहं गृह्णीयुस्तँ विकृन्तेयुः ५१ य इछेदाढ्योऽनुपवादः स्यामिति स यक्ष्यमाणः सँवत्सरं मन इति न ब्रूयात् ५२ आ ते महो यो जात एतेति चतस्रो हविषाम् ५३ पूर्वे प्रथमोत्तमयोः ५४ यस्य सांनाय्यं चन्द्रमा अभ्युदियाद्वैकृतीभ्यो निरुप्य तण्डुलाँस्त्रेधा विभजेत् ५५ तूष्णीं प्रातर्दोहं पिष्टेषु पिष्टचरुम् ५६ शृते विभज्य प्रचरति ५७ प्रायश्चित्तिः कल्पः ५८ अग्ने दा दा नो अग्न इत्याग्नेयस्य ५९ किमित्ते विष्ण इत्युत्तरयोश्चतस्र । उत्तरे पूर्वस्य ६० पशुकामोऽमावास्यायामिष्ट्वा तूष्णीँ सर्वान्वत्सानपाकरोति ६१ इडामग्न इति षड्ढविषाम् ६२ आग्नेयमष्टाकपालमिति त्रिहविः ६३ उत्तमायां गिरिमुप-निपीड्य यजेतापो वा ६४ सोमवामिनः प्रायश्चित्तिः कल्पः ६५ त्वा युजा तव तत्सोमेति द्वे हविषः ६६ आम्नातँ श्रयणमाम्नातँ श्रयणम् ६७ १०

इतीष्टिकल्पे प्रथमोऽध्यायः

आग्नेयमष्टाकपालं निर्वपेन्मैत्रावरुणीं पयस्यां । तस्याः समानदेवतमेकादशकपालं द्वादशकपालँ वा । तूष्णीमुपचरिताँश्चै-ककपालान् १ सिद्धमा प्रचरणात् २ आग्नेयेन प्रचर्योत्तरं पुरोडाशमाभिक्षया

प्रछाद्य तां चतुर्धा ब्युदूहति या वां मित्रावरुणा ओजस्येतिप्रभृतिभिः प्राचीनं प्रथमं प्रदक्षिणं ब्राह्मणस्येन्द्रावरुणाविति राजन्यस्याग्निवरुणाविति वैश्यस्य । समवदाय प्रचरत्युपस्तरणाभिघारणैः संपातमेककपालाञ्जुहोति यस्ते राजन्वरुण देवेष्वन्ने द्विपात्सु चतुष्पात्सु पशुष्वोषधीषु वनस्पतिष्वप्सु पृथिव्यां दिक्षु यस्ते राजन्वरुणेति सर्वत्रानुवजति ३ या वां मित्रावरुणा ओजस्येतिप्रभृतिभिः समुह्य स्विष्टकृते समवद्यतीडायै च ४ यथाकामं तन्त्रम् ५ इन्द्रावरुणा सम्राडित्यैन्द्रवारुणस्य ६ वैश्वदेवं चरुं निर्वपेद्भ्रातृव्यवान् ७ नवनीतेन श्रपयति ८ विश्वाहेन्द्र इति द्वे हविषः ९ या ग्रामकामो यजेत १० सर्वेषां ग्रामिणां गृहादाज्यमाहृत्य चरुं श्रपयति ११ सिद्धमा परिधीनां परिधानात् १२ परिधीननुमन्त्रयते ध्रुवोऽसीति मध्यममुग्रोऽसीति दक्षिणमभिभूरसीत्युत्तरं ॥ परिभूरसीत्याहवनीयँ सूरिरसीत्यादित्यम् १३ सिद्धमोद्वासनात् १४ शुक्त्याकृत्यामनपात्रं मृन्मयं दारुमयँ वा तस्मिँश्चरोरवस्रावयति १५ आमनस्य देव ये सजाताः समनस इतिप्रभृतिभिरामनपात्रेण प्राक्स्विष्टकृतश्चतस्र आहुतीर्जुहोति १६ कुत्राचिदिति सँयाज्ये १७ पृषती गौर्धेनुर्दक्षिणा १८ यावतोऽश्वान्प्रतिगृह्णीयात्तावतश्चतुष्कपाकान्वारुणान्निर्वपेदेकं चाध्वपोनप्त्रीयं चरुम् १९ यस्ते राजन्वरुण गायत्रछन्दा इतिप्रभृतिभिः प्राक्स्विष्टकृतश्चतस्र आह्तीर्जुहोति २० एवँ यदि पुनः प्रतिग्रहीष्यन्स्यादय च पुनः प्रतिगृह्णीयादर्धान्वारुणान्निर्यपेत्सौर्यवारुणानर्धान् २१ युन्वाधिकः सौर्यवारुणानामित्यपोनप्त्रीयः २२ समानमन्यत् २३ एकविँशतिः सामिधेनीः २४ पृथुपाजास्तँ सबाध इति षड्धाय्याः २५ प्रायश्चित्तिः कल्पः २६ आम्नाते वारुणानाम् २७ यदद्य सूर्येति सौर्यवारुणानाम् २८ उपेमसृक्षीत्यपोनप्त्रीयस्य २९ उत्तराभ्यामप्सु जुहोति ३० १

आमयाव्यायुष्कामेष्ट्या यजेत १ आग्नावैष्णवमेकादशकपालमिति त्रिहविः पूर्वेद्युः पञ्चहविरपरेद्युः २ तस्यां प्राक् स्विष्टकृतः काँस्ये चमसे वा पञ्चगृहीतं गृह्णाति ३ हिरण्यं बद्ध्वा दर्भेणाग्नेरायुरसीति पञ्चगृहीतेऽवदधाति ४ इन्द्रस्य प्राणोऽसीति पूर्वार्धे जुहोति प्रदक्षिणमुत्तरैरनुपरिक्रामन्प्रतिपरिक्रम्य पञ्चमेन मध्ये ५ यन्नवमैदिति पानाय घृतमानीय हिरण्यमुद्धरति पावमानस्येति

तृतीयमात्रं बृहता त्वेति द्विभागमग्नेष्टुबेत्युद्धृत्य तीरे निदधाति ६ अग्रेणाहवनीयं पर्याहृत्य तेजोऽसीति यजमानाय प्रयछति ७ इदँ वर्च इति यजमानः प्रतिगृह्णाति ८ हिरण्यमभिव्यादाय निर्धयन्पिबति ९ प्रक्षाल्येममग्न इति यजमानाय बध्नाति १० अग्निरायुरिति ब्रह्मणो हस्तमालभ्य सर्व ऋत्विजः पर्याहुर्ब्रह्मा यजमानस्य ११ दक्षिणाकाले दशतं ददाति १२ जीवितवान्कल्पः १३ अग्न आयूँष्यायुर्दा देवेति दश हविषाम् १४ आग्नेयमष्टाकपालमिति चतुर्हविः पञ्चहविर्वा य इच्छेत्प्रजननेन मे पशवो बहवः स्युरिति १५ अथ चेदुपनमैत पुरस्तात्सँसृष्टस्येन्द्रायैकादशकपालं निर्वपेत्प्राजापत्यँ सँसृष्टम् १६ उद्वासनवेलायां काँस्ये चमसे वोपस्तीर्य दधि मधु घृतं धाना उदकं पवित्रान्तर्हित आनयति १७ आ नो अग्ने सुचेतुना नो अग्ने रयिं भरेति दश हविषाम् १८ अग्नये भ्राजस्वत इति त्रिहविश्चक्षुष्कामस्य १९ शुक्ला व्रीहयो भवन्ति श्वेतानां गवामाज्यं पयसि चरुः २० ब्रह्मभागयजमानभागाभ्याँ सह सौर्यं चरुं ब्रह्मणे परिहरति २१ हुते समिष्टयजुषि सौर्यं चरुम् २२ चितस्त्रः पिण्डीः कृत्वा सौरीभिर्हस्त आदधाति २३ ताः प्राश्य यजमानभागं प्राश्नाति २४ उदग्ने शुचयस्तवायमग्निरिति चतस्रो हविषाम् २५ पूर्वे प्रथमोत्तमय-ोरादानीया उत्तराः २६ २

सर्वपृष्ठया भूतिकामो यजेताभिशस्यमानो वा १ द्वादश कपालानि प्रयुनक्ति २ सिद्धमा निर्वपणात् ३ इन्द्राय राथंतरायेन्द्राय बार्हतायेन्द्राय वैरूपायेन्द्राय वैराजायेन्द्राय रैवतायेन्द्राय शाक्वरायेत्येकैकस्यै देवतायै चतुरश्चतुरो मुष्टीन्निर्वपति सर्वा वा देवता अनुहृत्य चतुर एव मुष्टीन् ४ सिद्धमोपधानात् ५ उत्तानानि कपालान्युपदधाति । तत्स्विच्चरुः ६ सिद्धमा प्रचरणात् ७ मध्यमस्य पूर्वार्धादवदाय पूर्वार्धाच्चेन्द्राय राथंतरायानुब्रूहि अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमोम् ॥ इत्यन्वाह ८ इन्द्रं बार्हतँ यज ॥ ये यजामह इन्द्रं बार्हतम् न्द्र तस्थुषस्त्वाभिद्धि हवामहे साता वाजस्य कारवः । त्वाँ वृत्रेष्विन्द्र सत्पतिं नरस्त्वां काष्ठास्वर्वता वा ॥ इति यजति ९ प्रतिपरिकृष्याभिपरिकर्षन्प्रदक्षिणमुत्तराभ्योऽवद्यति १० इन्द्राय बार्हतायानुब्रूहि त्वामिद्धि हवामहे साता वाजस्य कारवः । त्वाँ

वृत्रेष्विन्द्र सत्पतिं नरस्त्वां कोम् ॥ इत्यन्वाह ११ इन्द्रँ राथंतरँ यज ॥ ये यजामह इन्द्रँ राथंतरम् ष्ठास्वर्वत अभि त्वा शूर नोनुमोऽदुग्धा इव धेनवः । ईशानमस्य जगतः स्वर्दृशमीशानमिन्द्र तस्थुषा वा ॥ इति यजति १२ इन्द्राय वैरूपायानुब्रूह्यापप्राथेत्यन्वाह १३ इन्द्रँ वैराजँ यज ॥ बोधा सु म इति यजति १४ इन्द्राय वैराजायानुब्रूह्येतामेवान्वाह १५ इन्द्रँ वैरूपँ यजापप्राथेति यजति १६ इन्द्राय रैवतायानुब्रूहि ॥ रेवतीर्न इत्यन्वाह १७ इन्द्रँ शाक्वरँ यज ॥ प्रो ष्वस्मा इति यजति १८ इन्द्राय शाक्वरायानुब्रूह्येतामेवान्वाह १९ इन्द्रँ रैवतँ यज । पूर्वया यजति २० यथेज्यमुपलक्षयते स्विष्टकृति सूक्तवाके च २१ प्रतिपरिकृष्याभिपरिकर्षन्स्विष्टकृते समवद्यतीडायै च २२ यथाकामं तन्त्रम् २३ ३

ऐष्टिक्या सौत्रामराया यजेत सोमातिपवितो राजसूयेनाभिषिषिचानो भूतिकामो ज्योगामयावी वा १ सीसेन क्लीबात्परिश्रिते सुराद्रव्यं क्रीणाति नग्नहुव्रीहि-यवगोधूमशष्पाणि २ सुरासोमविक्रयिन्नेतेन ते सीसेन सुरासोमान्क्री-णानीत्युक्त्वा क्रीणाति ३ स्वाद्वीं त्वा स्वादुनेति संदधाति ४ सोमोऽस्यश्विभ्यां पच्यस्वेत्यभिमृशति ५ श्वः सुरा जनितेति पशुबन्धायोपवसति ६ सिद्धमा वेदिकालात् ७ वेदिकाले प्रतिप्रस्थाता हविर्णतो वेदिरूपं खरं करो-त्युत्तरतोऽध्वर्युः पयोग्रहेभ्यो हसीयँसम् ८ अग्नी प्रणयतः ९ दक्षिणतो दक्षिणाग्नेः प्रतिप्रस्थाता खरादुपयमनीः कृत्वावोक्ष्य पूर्वार्धे खरस्य सादयति १० पाशुकानि पात्राणि प्रयुनक्ति । दक्षिणस्मिन्खरे प्रतिप्रस्थाता त्रीन्मा-र्त्तिकानुपयामान्वालं द्रोणं शतातृरणां त्रीणि वायव्यान्युत्तरस्मिन्नध्वर्युः शष्प-पवित्रे त्रीणि वायव्यानि ११ आज्यं पयश्चाभ्युदाहरति १२ वेद्यामाज्यँ सादयति खरे पयः १३ सुराकलशं प्रतिप्रस्थातोत्करदेश आग्नीध्रस्य मूर्धनि सादयित्वापरेण विहारं दक्षिणातिक्रम्य स्वस्मिन्खरे सादयति १४ सिद्धमाज्यग्रहेभ्यः १५ चतुर्गृहीतान्याज्यानि पृषदाज्यवन्ति गृह्णाति १६ सिद्धमाज्यानाँ सादनात् १७ द्रोणे वालँ वितत्य प्रतिप्रस्थाता पुनातु ते परिस्रुतमिति सुरामतिपावयति १८ कुविदङ्ग यवमन्त इति गृह्णीतो ऽध्वर्युः पयोग्रहानध्यधि शष्पपवित्रे धारयमाण आश्विनँ सारस्वतमिन्द्राय सुत्राम्णे १९

यथादेवतमुपयामसादनं च २० उपयामगृहीतोऽस्यछिद्रां त्वाछिद्रेणेति प्रतिप्रस्थातोपयामेषु सुराग्रहान्कुवलसक्तुभिराश्विनँ श्रीत्वा सादयति कर्कन्धुसक्तुभिः सारस्वतं बदरसक्तुभिरैन्द्रम् २१ यूपावटप्रभृति सिद्ध-मोपाकरणात् २२ आश्विनमजमुपाकरोति सारस्वतीं मेषीमैन्द्रमृषभम् २३ सिद्धमा मार्जनात् २४ उपयामान्वायव्येष्ववनीयान्तराग्नी ग्रहानादाया-वतिष्ठन्ते दक्षिणैः सुराग्रहान्सव्यैः पयोग्रहान्पूर्वो ऽध्वर्युरपरः प्रतिप्रस्थातापरो यजमानः २५ अश्विभ्याँ सरस्वत्या इन्द्राय सुत्राम्णे सोमानाँ सुराम्णा-मनुब्रूहीत्यनुवाचयति २६ आश्राव्या श्विभ्याँ सरस्वत्या इन्द्राय सुत्राम्णे सोमान्सुराम्णः प्रस्थितान्प्रेष्येति प्रचरति २७ वषट्कृतानुवषट्कृते हुत्वा ध्यानानि ध्यायति सिँहयोरिमँ यश आगछत्वित्यध्वर्युर्व्याघ्रयोरिति प्रतिप्रस्थाता वृकयोर्मामिति यजमानः २८ मुख्ययोः संपातानवनीयाग्रेणाग्नी पर्याहृत्य दक्षिणतो यजमानो भक्षयति यदत्र शिष्टमिति पयोग्रहान्नाना हि वामिति सुराग्रहानवघ्रेण सुरापः २९ द्वे स्रुती इतिप्रभृतिभिः प्राक् स्विष्ट-कृतश्चतस्र आहुतीर्जुहोति ३० प्रतिप्रस्थाताध्यधि दक्षिणमग्निँ शतातृण्णा-मवस्थाप्य सुराशेषमानीय त्वँ सोम प्रचिकित इतिप्रभृतिभिर्द्वादशभिः क्षरन्तीमनुमन्त्रयते तिसृभिस्तिसृभिरेकैको दक्षिणतो ब्रह्मा पश्चाद्यजमान उत्तरतोऽध्वर्युः पुरस्तात्प्रतिप्रस्थाता ३१ एकादशकपालान्पशुपुरोडाशा-न्निर्वपतीन्द्राय सुत्राम्णे सवित्रे वरुणाय ३२ ऋते स्विष्टकृतः पशुभिः प्रचर्य पशुपुरोडाशैः प्रचरत्यैन्द्रेण प्रथमं । पशूनां पशुपुरोडाशानां च स्विष्टकृते समवद्यतीडायै च ३३ यथाकामं तन्त्रम् ३४ मार्जयित्वा वडबा दक्षिणा ३५ सिद्धः पशुबन्धः ३६ पशोर्होत्रमाम्नातम् ३७ सुरापयोलिप्तान्यप्सु प्रहरति ३८ युवँ सुराममिति ग्रहाणामनुवाक्या ३९ होता यक्षदश्विनाविति प्रैषः ४० पुत्रमिव पितराविति याज्या ४१ सोमानाँ सुराम्णामग्ने वीहीत्यनुवषट्करोति ४२ इन्द्रः सुत्रामा तस्य वयं तत्सवितुरचित्तीमं मे वरुण तत्त्वा यामीति पशुपुरोडाशानाम् ४३ ४

द्वादशरात्रं तपस्तप्त्वा त्रैधातव्यया यजेत त्रिरात्रोपेप्स्यागूर्त्यभिचरन्वा १ द्वादश कपालानि प्रयुनक्ति २ सिद्धमा निर्वपणात् ३ ऐन्द्रावैष्णवान्व्रीहीन्निरुप्य

यवान्निर्वपति ततो व्रीहीन् ४ सिद्धमाधिश्रयणात् ५ व्रीहिमयमधिश्रि-त्यापर्यग्निकृतँ श्रपयित्वा तस्मिन्वर्षीयाँसँ यवमयमधिश्रित्यापर्यग्निकृतँ श्रपयित्वा तस्मिन्वर्षिष्ठँ व्रीहिमयमधिश्रित्य पर्यग्नि करोति ६ सिद्धमोद्वासनात् ७ अभिघार्योत्तरावुपरिष्टाद्धारयन्नधरमभिघार्योद्वास्या-लंकरोति ८ आधायोत्तरौ सर्वेषामतिघातमवद्यति हविराहुतिस्विष्टकृदिडेभ्य । एकस्य भक्षान् ९ दक्षिणाकाले सहस्रं दक्षिणाकाले तिस्रो धेनवस्त्रीणि हिरण्यानि त्रीणि ताप्र्याण्यन्यत्सहस्रादागूर्तिनोऽभिचरतो वा दक्षिणा १० अग्ने वाजस्य गोमत इति पञ्च धाय्या जगती षष्ठी ११ अग्ने त्री ते वाजिना त्री षधस्थेति त्रिष्टुभा परिदधाति १२ त्रिरग्निर्बलभित्त्रिरह्न इत्याज्यभागौ १३ सँ वां कर्मणेति द्वे हविषः १४ त्रीण्यायूष्यग्निरस्मीति सँयाज्ये १५ वार्त्र-घ्नोऽभिचरतः १६ इन्द्राविष्णू दृँहिताः शम्बरस्येति द्वे हविषः १७ पुत्रः सोमेन यजेत १८ पार्जन्यं चरुं निर्वपेद्वृष्टिकामः १९ पर्जन्याय प्रगायतेति द्वे हविषः २० आग्नेयमष्टाकपालमिति त्रिहविरधिश्रयणात्प्रभृति सँसृज्याहुतीश्च विद्मा ते अग्न इति द्वे हविषोश्चतस्रो यस्तस्तम्भेति षष्ठ्यौ २१ ५

राजा पुरोहितो वा कारीर्या वृष्टिकामो यजेत १ कृष्णमाछाद्य पूर्वाह्णे व्रतमुप-ति २ वैतसमिध्ममाज्यं मधु करीरसक्तून्कृष्णाजिने पश्चादाहवनीयस्योप-सादयति ३ अन्वारब्धे यजमाने वाचयन्पुरोवातेतिप्रभृतिभिरिष्टौ वातहो-माञ्जुहोति ४ मान्दा वशा इति मधुना करीरसक्तून्संनीय चतस्रः पिण्डीः कृत्वा कृष्णाजिने निदधाति ५ वृष्णो अश्वस्य संदानमसीति श्यावस्याश्वस्य संदानमनुमन्त्रयते ६ वृष्टयै त्वोपनह्यामीति कृष्णाजिने पिण्डीरुपनह्यति ७ देवा वसव्या इति पूर्वार्धे गधाकर्णे प्रतिमुच्याह्नस्तृतीयं काङ्क्षेत् ८ यदि वर्षेदुत्तराभ्यामपरयोः प्रतिमुच्येष्टिं निर्वपेत् ९ न चेद्वर्षेद्देवाः शर्मण्या इति मध्यमे प्रतिमुच्याह्न उत्तरार्धं काङ्क्षेत् १० यदि वर्षेदुत्तमेन पश्चार्धे प्रतिमुच्येष्टिं निर्वपेत् ११ न चेद्वर्षेद्देवाः सपीतय इति प्रतिमुच्याह्नः शेषं काङ्क्षेत् १२ वृष्टे सद्यो निर्वपेत् १३ यदि न वर्षेत्तत्रैव वसेयुः १४ श्वोभूतेऽग्नये धाम-छदेऽष्टाकपालं निर्वपेन्मारुतँ सप्तकपालँ सौर्यमेककपालम् १५ उद्वास-नवेलायां काँस्ये चमसे वोपस्तीर्य पिण्डीरलंकरोति १६ प्राक् स्विष्टकृतः

पिराडीमवदाय दिवा चित्तम इति निगद्य देवा वसव्या इति जुहोत्यायन्तर इति निगद्य देवाः शर्मराया इति द्वितीयामुदीरयतेति निगद्य देवाः सपीतय इति तृतीयाँ ॥ सृजा वृष्टि दिव इत्यप्सु चतुर्थीम् १७ ये देवा दिविभागाः स्थेति बर्हिषि कृष्णाजिनमवधूनोति १८ रमयत मरुतः प्रेतँ वाजिनं मनोजवसंम् वृषणँ सुवृक्तिम् । येनेदमुग्रमवसृष्टमेति तमश्विना परिधत्तं स्वस्तये ॥ इत्युत्तरतो वार्षिकँ वातमनुमन्त्रयते १९ कृष्णं नियानमिति षट्त्रिहविषाम् २० आग्निमारुतं तन्त्रम् २१ उत्तमया सौर्यमभिजुहोति २२ सैषा कारीरी नामेष्टिर्य एतया यजेत सँवत्सरं करीराणां नाश्नीयादिति व्रतम् २३ ६

राजसूयात्काम्यानां निर्हारो । बिभ्यदादित्येभ्यो मुवद्भ्यो घृते चरुः १ अर्वाञ्चो अद्येति द्वे हविषः २ आग्रायण । वैराजः कल्पः ३ अग्न इन्द्रश्च दाशुषो याभ्याँ स्वरजनन्नित्याग्नीन्द्रस्य ४ विश्वे देवा ऋतावृधो विश्वे देवासो अस्रिध इति वैश्वदेवस्य ५ द्यावा नः पृथिवी प्र पूर्वजे इति द्यावापृथिवीयस्य ६ सोम यास्ते मयोभुवो या ते धामानिति सौम्यस्य ७ शुनासीर्ये चत्वारः ८ कामः पशुकामान्नकामयोर्वर्षस्योदकार्थे ९ द्वाविन्द्रतुरीये १० देविकासु चत्वारः ११ अन्वद्य नो अनुमतिरन्विदनुमत इति दश हविषाम् १२ आश्विनं द्विकपालँ स्वस्तिकामः पूर्वाह्णे निर्वपेत् १३ प्रायश्चित्तिः कल्पः १४ प्रातर्यजध्वमश्विनेति द्वे हविषः १५ त्रिषँयुक्तेन यज्ञकामो यजेतोत्तरेण पशुकामः १६ इन्द्रा नु पूषणा यन्निर्णिजेत्यैन्द्रापौष्णस्य १७ वैश्वानरवारुणेन यो ज्योगामयावी यजेत १८ यस्य राष्ट्रँ शिथिरमिव स्यात्तमेतेन याज-येन्मैत्राबार्हस्पत्येन १९ देवसुवाँ हविर्भिरिष्टिः सर्वकामो यजेत २० प्राक् स्विष्टकृत आज्यस्य वाजप्रसव्यँ हुत्वाभिषिञ्चति २१ त्वमग्ने बृहद्वय इति षोडश हविषाम् २२ दिशामवेष्टिभिरन्नाद्यकामो यजेत २३ वैराजः कल्पः २४ सत्यदूतहविर्भिः स्वस्तिकामो यजेत २५ प्रायश्चित्तिः कल्पः २६ य इमा विश्वा जातानीति षड्ढविषाम् २७ ७

अथ हौत्रम् १ यथा सामिधेन्यस्तथाग्निप्रणयनीया यूप्या अग्निमन्थनीयास्तथा मैत्रावरुणस्य पर्यग्निकरणँ स्तोक्या मनोतासूक्तमनुवाक्या २ प्रैषं कर्तृप्रत्य-

यमन्वाह ३ पैत्रावरुणचोदितो होता यजेत् ४ प्रणीयमानाय प्रेषितः प्र देवमित्यनूच्या यमु ष्येत्युत्थाया यमग्निरिति गछन्नुत्तराँ वेदिश्रोणिमपरेण तिष्ठन्नूर्णावन्तमित्यर्धर्चे काङ्क्षेत् ५ निहते शेषमुक्त्वा त्वं दूत इति परिदधाति ६ उपविशेत् ७ आसीनो यूपायाज्यमानाय प्रेषितोऽञ्जन्ति त्वामिति तृतीयस्यानुवचनस्यार्धर्चे काङ्क्षेत् ८ उच्छ्रियमाणाय प्रेषितो यदूर्ध्वं उञ्श्र-यस्वेति संतत्य समत्रिणं दहेति काङ्क्षेत् ९ परिवीयमाणाय प्रेषितः कृधी न इत्यनूच्य युवा सुवासा इति परिधायावतिष्ठेत् १० मथ्यमानाय प्रेषितः सिद्धँ यथा वैश्वदेवे ११ सप्तदश सामिधेन्यः १२ सिद्धमावाहनात् १३ न पशुपुरोडाशाय । प्रागाज्यपेभ्यो वनस्पतिम् १४ आज्यपादि सिद्धम् १५ तीर्थेन मैत्रावरुणोऽग्रेण होतारमपरेण कर्तारं दक्षिणाँ वेदिश्रोणिमपरेण तिष्ठन्नवक्रोऽविथुरो भूयासं फलग्रहिरसि फलग्रहिरहं त्वया साक्षादृध्या-समिति बाहुभ्यां दण्डं परिगृह्य तेन वेदिमवष्टभ्य दक्षिणेऽँसे प्रतिष्ठाप्य प्रह्वस्तिष्ठन्संप्रैषं काङ्क्षेत् १६ समिद्ध्यः प्रेषितो होता यक्षदग्निँ समिधेति दश प्रैषाः १७ समिद्धो अद्य मनुषो दुरोण इति दशभिर्होताप्रीभिर्यजेत् १८ उभावनवानन्तौ व्यवानन्तौ वा १९ वामस्यगोपाँ स्यादमूरोदेवेभ्यः श्रयन्तां कृण्वानेप्रचेतसा-तन्वताँ यशोधां नरो हव्यसूक्तीनामिति प्रैषेषु व्यवसेत् २० पर्यग्नये क्रियमाणाय प्रेषितोऽग्निर्होता न इति तिस्रः २१ उपप्रेष्येत्युक्तेऽजै-दग्निरिति मैत्रावरुणो दैव्याः शमितार इति होता २२ अस्ना रक्षः सँसृजतादित्युपाँशु ॥ वनिष्ठुमस्य मा राविष्टेत्युच्चैः २३ आध्रिगो३ इति परिदध्यात् २४ अध्रिगुश्च विपापश्चेत्युपाँशु जपति २५ स्तोकेभ्यः प्रेषितो जुषस्व सप्रथस्तममिति षट् २६ स्वाहाकृतिभ्य प्रेषितो होता यक्षदग्निं स्वाहेति प्रैषः २७ सद्यो जात इत्यृचा होता यजेत् २८ वार्त्रघ्नावाज्यभागौ सप्रैषौ २९ अग्ने नयेति षडर्चँ वपायाः पशुपुरोडाशस्य पशोस्तिस्त्रः पूर्वाः पूर्वाः पुरोनुवाक्या उत्तरोत्तरा याज्या इत्युक्तः षडर्चधर्मः ३० अथैन्द्राग्नस्य शुचिं नु स्तोमँ श्नथद्वृत्रमुभा वामिन्द्राग्नी प्र चर्षणिभ्या आ वृत्रहणा गीर्भिर्विप्र इत्युक्तः षडर्चधर्मः ३१ वपायै प्रेषितः प्रथमामनूच्य होता यक्षदिन्द्राग्नी छागस्य वपाया इति प्रैषो । द्वितीया याज्या ३२ पुरोडाशाय प्रेषि-तस्तृतीयामनूच्य होता यक्षदिन्द्राग्नी पुरोडशस्येति प्रैषश्चतुर्थी याज्या ३३

इडामग्न इति व्यक्तस्यानुवाक्याप्रैषो ॥ ऽग्निँ सुदीतिमिति याज्या ३४ सिद्ध इडोपहवः ३५ मनोतायै प्रेषितस्त्वँ ह्यग्ने प्रथमो मनोतेति त्रयोदश ३६ हविषे प्रेषितः पञ्चमीमनूच्य होता यक्षदिन्द्राग्नी छागस्य हविष इति प्रैषः । षष्ठी याज्या । तस्या अर्धर्चे वसाहोमं काङ्क्षेत् ३७ वनस्पतये प्रेषितो देवेभ्यो वनस्पत इत्यनुवाक्याप्रैषो ॥ वनस्पते रशनयेति याज्या ३८ स्विष्टकृते प्रेषितः पिप्रीहि देवानित्यनुवाक्याप्रैषो ॥ ऽग्ने यदद्येति याज्या ३९ सिद्ध इडोपहवः ४० अनुयाजेभ्यः प्रेषितो देवं बर्हिरित्येकादशीनुयाजाः ४१ तेषामाद्यवसानैर्होता यजेत् ४२ उभावृत्तममनुद्रवेयाताम् ४३ सुक्तवाकाय प्रेषितोऽग्निमद्येति मैत्रावरुणः सूक्ता ब्रूहीति विरम्यातिप्रणीते तूष्णीं दण्डम-वदधाति ४४ शिष्टँ होतुः ४५ ८

पशुबन्धे देवतायजमानपशुवाचिनामेकवचनद्विवचनबहुवचनानि १ त्रीणि-त्रीणि स्वशब्दानि पुँसि पूर्वाणि पराणि स्त्रियाः । स्त्रीपुँसोः समवाये पुँसवत् २ मेधपतय इति यजमानवाचि पशुवाचि देवतावाचि वा । मेधपतये मेधपतिभ्यां मेधपतिभ्यो मेधपत्न्यै मेधपत्नीभ्यां मेधपत्नीभ्यो । मेधीं मेध्यौ मेधीः । प्रास्मा अग्निं प्राभ्यामग्निं प्रैभ्योऽग्निं प्रास्या अग्निं प्राभ्यामग्निं प्राभ्योऽग्निमित्येवमत ऊर्ध्वमूह्यमूहेत् ३ द्विपशुप्रभृतिप्रत्यङ्गानां बहुवचनानि । प्रशसा बाहू शला दोषणी कश्यपेवाँसाछिद्रे श्रोणी कवषोरू स्रेक-पर्णाष्ठीवन्ता ४ यान्यव्ययान्यनेकानि तानि द्विरभ्यस्यन्ते । तानि व्या-ख्यास्यामो यथैकधैकधा पुरा पुरान्तरन्तः षड्विँशतिः षड्विँशतिर्मध्यतो मध्यतः पार्श्वतः पार्श्वतः श्रोणितः श्रोणितः शितामतः शितामत उत्सादत उत्सादतः प्रस्तुत्येव प्रस्तुत्येवोपस्तुत्येवोपस्तुत्येव मेदस्तो मेदस्त इति ५ हविषि प्रैषे सूक्तवाके च उदत् उदतां अदन् घसत् घस्तां घसन् अघसत् अघस्तां अघसन् करत् करतां करन् अग्रभीत् अग्रभीष्टां अग्रभीषुः अक्षन् ६ माता पिता भ्राता सगर्भ्यो सखा सयूथ्योनाभिरूपमासँसर्गि शब्दाश्चक्षुः श्रोत्रँ वाङ्मनस्त्वङ्मेदो हविर्बर्हिः श्येनँ वक्ष इत्यनूह्यानि ७ ९

ऐन्द्राग्नेन पशूनाँ विधिराम्नातः १ वरमनादिष्टदक्षिणासु दद्याद्गां त्रिहायणीं

चतुर्हायणीँ वा २ इज्यासूपाँशुदेवताः प्रजापतिर्वायुर्देवाः सूर्योऽदिति-र्विष्णुर्विष्णुवरुणौ सवितौषधयो द्यावापृथिवी भूमिर्यमश्च ३ सौम्यं बभ्रुमितिप्रभृतयो यमान्ताः काम्याः पशुबन्धाः । तेषाँ सोमो धेनुमितिप्रभृतीनि यमान्तानि षडर्चानि ४ कार्माधिक्यँ व्याख्यास्यामः ५ यस्त्रैतानामुत्तमो जायेत तँ सौमापौष्णमालभेत पशुकामः ६ औदुम्बरो यूपः ७ प्राजापत्यं तूपरमालभेत पशुकामः ८ आधाराप्रीसामिधेन्य आग्निचितिके व्याख्याताः ९ दक्षिणाकाले हिरण्यं दक्षिणा तार्प्यमधिवासश्च १० परिहरणकाले प्राशित्रस्य द्वादश ब्रह्मौदनान्पक्त्वा मध्यतःकारिभ्यो दद्यात्तेभ्यो द्वादशद्वादश वरान्ददाति ११ देवेभ्योऽविँ वशामालभेतादित्येभ्यो वा प्रजाकामः पशुकामः कामायकामाय १२ मल्हा गृष्टिः १३ विषमे समं कृत्वा वैष्णवँ वामनमालभेत भ्रातृव्यवान् १४ यः पाप्मना तमसा गृहीतो मन्येत स एतमैन्द्रमृषभमालभेताग्नेयं तु पूर्वमजमालभेत १५ क्षुत्पाप्मना तमोर्भिर्हतः सावित्रं पुनरुत्सृष्टमालभेत १६ ओषधीभ्यो वेहतमालभेत प्रजाकामः १७ द्यावापृथिवीये धेनू संमातरा आलभेतान्नकामः १८ श्वोभूते वत्सँ वायव आलभेत १९ ऐन्द्रीँ सूतवशामालभेत राजन्यो भूतिकामः २० सूतवशायाः पुत्रमैन्द्रमृषभमालभेत तेजस्कामः २१ सारस्वतीं धेनुष्टरीमालभेता नुसृष्टिम् २२ द्यावापृथिवीयां धेनुं पर्यारिणीमालभेत परिसृत्वरीम् २३ गोमृगँ वायव आलभेत गां मृगम् २४ ऐन्द्राग्नमनुसृष्टमालभेत यस्य पिता पितामहः सोमं न पिबेत् २५ पिण्डको यत्र भूमेर्जायेत तदध्यवसायेत । सौमापौष्णं नपुँसकमालभेत पण्डकँ याजयेत् २६ प्राग्घविराहुतेरनवदानीयानामङ्गानां दक्षिणाप्रतीचोऽङ्गारानुपोह्य निर्ऋत्यै स्वाहेति जुहोति २७ वारुणः कृष्णः पेत्व एकशितिपात्तेनामयावी द्वीपे यजेत यँ समन्तमापः परिवहेयुः २८ सर्वकृष्णोऽभिचरतः २९ सिद्धमा नियोजनात् ३० पशुं बध्नामीति नियुनक्ति ३१ वशानाँ सप्तमोऽनुवाकः ३२ उक्षा ब्राह्मणस्पत्यः ३३ कृष्णशबल्याश्चर्म विशसनेन जह्यात् ३४ ऋषभाणामष्टमः ३५ इन्द्राय वज्रिण ऋषभमालभेत राजन्यो भूतिकामः ३६ हविराहुतौ हूयमावायाँ यं द्विष्यात्तं मनसा ध्यायेत् ३७ यः प्रथम एकाष्टकायां जायेत तमुत्स्रक्ष्यन्नाग्नेयमष्टाकपालं निरुप्यो-त्सृज्याथाग्नये वैश्वानराय द्वादशकपालं मासिमासि निर्वपेत्सँवत्सरम् ३८

अथ योऽपरस्यामेकाष्टकायां जायेत तमेवमेवोत्सृजेत् ३९ यदा पूर्वोत्सृष्टो मेधं गछेदथेन्द्रायाभिमातिघ्न आलभेताश्वोऽव्युप्तवहो दक्षिणा ४० तद्यदा द्वितीयोत्सृष्टो मेघं गछेदथेन्द्राय वृत्रतुर आलभेत । शतमव्युप्तवहा दक्षिणा ४१ एताभ्यामिष्ट्वा पाप्मानं भ्रातृव्यमपहत्य चित्रायाः पुत्रमरुणं तूपरं ब्राह्मणस्पत्यमालभेताभिचरन् ४२ यः पाप्मना तमसा गृहीतो मन्येत स एतमाश्विनमञ्जिमालभेत ४३ तेजस्कामो वसन्ते ललामाँस्त्रीनृषभानालभेत । प्रावृषि शितिककुदः शरदि श्वेतानूकाशाः । प्राजापत्यं दशमं द्वादशे मासे ४४ नमो महिम्न इतिप्रभृतिभिः प्राक् स्विष्टकृतः सर्वेषु पञ्चाहुतीर्जुहोति ४५ नानातन्त्राः कृष्णग्रीवाः समानतन्त्रा वा ४६ १०

कौकिल्याः सौत्रामण्याः स कल्पो य ऐष्टिक्याः १ ते कामाः सोमवामिनश्च २ सिद्धमा संधानात् ३ परीतो षिञ्चता सुतमिति प्रतिदुहा परिषिञ्चत्ये कस्या दुग्धेन प्रथमायाँ व्युष्टायां द्वयोर्द्वितीयस्याम् ४ त्र्यहे सुरा जनितेति पशुबन्धायोपवसति ५ सिद्ध उपवसथः ६ श्वोभूत ऐन्द्र ऋषभस्तस्या-प्रीप्रथमोऽनुवाकः ७ नित्याः प्रैषाः ८ आ चर्षणिप्रा इति षडर्चम् ९ सिद्ध उपवसथः १० श्वोभूत उदङ्ङवसृप्य त्रिपशुस्तस्मिन्सुरा ११ सिद्धमा-तिपावनात् १२ वायुः पूत इति ताँ सोमवामिनः कुर्याद्वायोः पूत इति ताँ सोमातिपवितस्य १३ ब्रह्म क्षत्रमित्यनुनिगदति १४ कुविदङ्ग यवमन्त इति गृह्णीतोऽध्वर्युः पयोग्रहान् १५ कुवलसक्तुभिर्गोधूमसक्तुभिर्वृकलोम्नाश्विनँ श्रीत्वा सादयति कर्कन्धुसक्तुभिरुपवाकासक्तुभिर्व्याघ्रलोम्ना सारस्वतं बदर-सक्तुभिस्तोक्मसक्तुभिः सिँहलोम्नैन्द्रम् १६ यूपावटप्रभृति सिद्धमोपाकरणात् १७ अश्विभ्याँ सरस्वत्या इन्द्रायाजँ सरस्वत्या इन्द्रायाश्विभ्यां मेपी-मिन्द्रायाश्विभ्याँ सरस्वत्या ऋषभम् १८ सिद्धमा मार्जनात् १९ या व्याघ्रँ विषूचिकेति श्येनपत्त्रेण यजमानं पावयति २० पावितः सोमो राजेत्यनुवाकेन ग्रहानुपतिष्ठते २१ सुरावन्तमिति प्रतिनिगद्य वषट्कृतानुवषट्कृते जुह्वति २२ ध्यानानि ध्यात्वा यमश्विनेति पयोग्रहान्भक्षयति ॥ नाना हि वामिति सुराग्रहान् २३ प्रतिदुहो वाजप्रसव्यँ हुत्वोत्तरत उत्तरवेदेरासन्द्यामासीनं देवस्य त्वा सवितुः प्रसव इति संपातेनाभिषिञ्चति शिरसोऽध्या मुखाद-

वस्त्रावयति । शेषं प्रतिप्रस्थाता दक्षिणस्मिन्भूः स्वाहेति जुहोति २४ शिरो मे श्रीर्यशो मुखमिति यथालिङ्गमङ्गानि समृशति २५ प्रति ब्रह्मन्निति प्रत्यवरोहति २६ यूष्णः शृङ्गशफैः सीसेन तन्त्रमितिप्रभृतिभिः प्राक् स्विष्टकृतः षोडशाहुतीर्जुहोति २७ शतातृरणाँ व्युत्क्षारयति २८ पुनन्तु मा पितर इति यजमानँ वाचयति २९ ये समानाः समनस इत्यध्वर्युर्जुहोति ॥ ये समानाः समनसो जीवा जीवेषु मामका इति प्रतिप्रस्थाता ३० द्वे स्रुती इत्यध्वर्युरिदँ हविरिति प्रतिप्रस्थाता ३१ एकादशकपालान्पशुपुरोडाशान्निर्वपतीन्द्राय सुत्राम्णे सवित्रे वरुणाय सवित्रे वरुणायेन्द्राय सुत्राम्णे वरुणायेन्द्राय सुत्राम्णे सवित्रे ३२ सिद्धमा दक्षिणाकालात् ३३ त्रयस्त्रिँशद्दक्षिणास्तासां धेनुर्वडबा चानुकिशोरा ३४ यद्देवा देवहेडनमितिप्रभृतिभिः प्राक् समिष्टयजुर्भ्यस्तिस्र आहुतीर्जुहोति ३५ धाम्नो धाम्न इत्यवभृथेऽप्सु जुहोति ॥ यद्ग्रामे यदरण्य इति द्वितीयाम् ३६ पवित्रमसीति स्नातावन्योन्यस्य पृष्ठं प्रक्षालयतः ३७ समावृतत्पृथिवीति स्रुवेण गार्हपत्ये जुहोति ३८ द्वितीयतृतीयावाप्रीप्रैषौ । चतुर्थे वपाग्रहाः ३९ पशुपुरोडाशहविःस्विष्टकृताँ याज्यानुवाक्या । या याज्यास्ताः पुरोनुवाक्याः याः पुरोनुवाक्यास्ता याज्या वपापशुपुरोडाश-हविषाम् ४० पञ्चमोऽनुयाजः ४१ सिद्ध उपवसथः ४२ श्वोभूत इन्द्राय वयोधस ऋषभस्तस्याप्र्युषोत्तमः ४३ नित्याः प्रैषाः ४४ उत्तमँ षडर्चँ याज्यानुवाक्याः ४५ सर्वपृष्ठाया उपोत्तमः ४६ अश्वमेधस्योत्तमो मृगारेष्टे-स्तन्त्रम् ४७ ११

तन्त्रँ यूपाहुतेः १ प्राग्वेदिकालादेकादश यूपानछैत्युपशयं पात्नीवतं च २ जोषणाद्यानुपूर्व्या पृथक्पृथक् ३ प्रथमोत्पतितँ स्वरुचषालमग्निष्ठमभितो यूपानस्थूलाननणून्तुल्यान्समूलान् ४ एकादश यूपान्परिमाय त्रैधँ संभुज्य तृतीयैः प्रमाय वेदिँ विदधाति ५ सिद्धमाग्नीषोमीयात् ६ अग्निष्ठे द्वे रशने परिवीय तूष्णीँ विँशतिं परिव्ययति ७ सिद्ध उपवसथः ८ श्वोभूत आश्विनं गृहीत्वाग्निष्ठादुदञ्चँ रथाक्षं प्रमाय स्फ्येन यूपावटं परिलिखति व्यत्यासमितरान् ९ सिद्धमञ्जनप्रभृत्येकैकस्मिन्ना परिव्ययणात् १० दक्षिणस्मिन्यूपान्तरे प्राञ्च-मुपशयं निधाय यूपा आञ्जनीयास्तूष्णीँ स्वरुरशनम् ११ यद्यभिचरेदि दमह-

ममुमामुष्यायणममुष्याः पुत्रमिन्द्रवज्रेणाभिनिदधामीत्यभिनिदध्यात् १२ उदक्प्रवण एकादशिनीँ संमिनोति त्रीन्वा मध्यतः समान् १३ सँस्राविणी वृष्टिकामस्याग्निष्ठो ह्रसिष्ठोऽनुपूर्वमितरे वर्षीयाँस । आराग्राभिचरतोऽग्निष्ठो वर्षिष्ठोऽनुपूर्वमितरे ह्रसीयाँसः । समाः प्रतिष्ठाकामस्य १४ पूर्वेद्युर्वा संमिनुयात् १५ अग्निष्ठात्तु श्वोभूते रशनाः परिवीय पशूनुपाकरोति १६ कृष्णशिरसमजमाग्नेयमग्निष्ठे नियुनक्ति सारस्वतीं मेषीमुत्तरस्मिन्सौम्यं बभ्रुं दक्षिणस्मिन्व्यत्यासमितरान्वारुणं दक्षिणार्धे १७ उपशयायारण्यं निर्दिशेत् १८ अभिचरन्नसौ ते पशुरिति द्वेष्यं निर्दिशेत् १९ सिद्धमा प्रक्रमणात् २० एकैकमन्वारभते २१ अग्रेण यूपादटमपरेणोत्तरान्पशून्मुख्यप्रथमाञ्शामित्राय नयन्ति २२ उत्तरमुत्तरमवस्थापयन्ति पूर्वपूर्वँ वा २३ सर्वेषूपासनाः सह रशना अनुप्रास्यन्ति दर्भान्वपाश्रपणीः स्वरूँश्च २४ सिद्धमा वपोद्धरणात् २५ अपरेणोत्तरान्पशून्मुख्यप्रथमाः शामित्राद्धरन्ति समया पशुंपशुं परिग्राहं पूर्वाङ्गारानाहवनीयाय २६ स्वाहा देवेभ्य इति पुरस्ताद्वपानां जुहुयाद्विश्वेभ्यो देवेभ्यः स्वाहेत्युपरिष्टात् २७ अन्यत्र सवनीयेभ्यो हृदयशूलाः पशुपुरोडाशाश्च २८ समानदेवतेष्वव्यवहितेषु सकृन्मनोता प्रतिपशु व्यवहितेषु २९ पृथग्वसाहोमाः ३० शेषैरन्तरन्तो दिशः प्रतीज्याध्यूघ्नीँ होत्रे हरन्ति वनिष्ठुमग्नीधे ३१ गुदानाँ समवदायोपयजति ३२ जाघनीभिः पत्नीः सँयाजयन्ति ३३ प्रागनूबन्ध्यायाः प्राग्वँशे पात्नीवतेन चरन्ति ३४ दार्शिकी वेदिर्पाशुकान्याज्यानि ३५ अग्रेण गार्हपत्यमधोनाभिमचषालँ यूपँ संमिनोति ३६ अनवस्तीर्णो यूपावटः ३७ मध्ये परिव्ययति ३८ त्वाष्ट्रं पशुमुपाकरोति ३९ पर्यग्निकृतँ सहरशनमुत्सृज्याज्येन संम्स्थापयति ४० यावन्ति पशोरवदानानि तावत्कृत्व आज्यस्यावदाय त्वष्ट्र आज्यस्यानुब्रूहीति त्वष्ट्र आज्यस्य प्रेष्येति प्रचरति ४१ वपास्थाने पशुपुरोडाशस्य पशोराज्येन स्विष्टकृदाज्येनोपयजः ४२ शँय्वन्ता संतिष्ठते ४३ सर्वाः स्रुचः संप्रगृह्णाति ४४ अनूबन्ध्याँ सँस्थाप्य यूपाननुदिशति ४५ क्रतुपशुभिरेकादशिनी निवर्तेत । नियता साग्निचित्येष्वेकादशिन्येकयूपे यूपैकादशिनी सर्वस्तोमेषु ४६ १२

यजमानयज्ञपतिवादानूहेत्समवाये ॥ अनु वामनु वः । अनुमन्तौ अनुमन्तः

। आवहतं आवहत । देवायद्भ्यां देवायद्भ्यः । ये बध्यमानौ ये बध्यमानान् । स्वर्विदौ स्थः स्वर्विदः स्थ । स्वरितँ स्वरित । लोकविदौ स्थो लोकविदः स्थ । लोकमितं लोकमित । नाथविदौ स्थो नाथविदः स्थ । नाथमितं नाथमित । गातुविदौ स्थो गातुविदः स्थ । गातुमितं गातुमित । म्रियेथे मिर्यध्वे । रिष्यथः रिष्यथ । इदिथः इदिथ । पाशाभ्यां म्पशू पाशेभ्यः पशून् । मारुतं देवं गछत । शमिताराउ शमितारः । तत्र वां तत्र वः । भूरि वां भूरि वः । दिवँ वां दिवँ वः । यन्तौ यतः १ शेषोऽनूह्यो । माता पितेति व्याख्यातम् २ १३

चितिः स्रुगिति दशहोतेन्द्रं गछ स्वाहेति होमः १ पृथिवी होतेति चतुर्होता ॥ वाचस्पते वाचो वीर्येणेति ग्रहः ॥ सोमः सोमस्य पिबत्विति द्वितीयः २ अग्निर्होतेति पञ्चहोता ॥ वाचस्पते हिन्विधेनामन्निति ग्रहः ॥ सोमः सोमस्य पिबत्विति द्वितीयः ३ महाहविर्होतेति सप्तहोता ॥ विधेनामन्निति ग्रहः ४ अप उपस्पृश्य प्राङ्मुखः प्रतिगृह्णाति देयँ वामिमुखः ५ सावित्रः पुरस्तात्सर्वेषाम् ६ यमाय त्वेत्यश्वँ यच्चैकशफम् ७ रुद्राय त्वेति द्विशफम् ८ अग्नये त्वेति हिरण्यं त्रपुः सीसमयो लोहं च ९ ग्नास्त्वाकृन्तन्नपसोऽतन्वत धियोऽवयन्बृहस्पतये त्वेति वासः १० प्रजापतये त्वेति हस्तिनं पुरुषँ व्रीहियवौ भूमिं प्राणि चान्यत् ११ उत्तानाय त्वेत्यप्राणि १२ क इदं कस्मा अदादिति सर्वत्रानुषजति कामैतत्त इत्यन्तम् १३ यः प्रजया पशुभिर्न प्रजायेत द्रहिलमहतँ वामः परिधाय द्वादशरात्रं तप्तं पयः पिबन्व्रतचार्यधः शयीत १४ त्रयोदश्यामुदिते दशहोतारं निगद्येन्द्रं गछ स्वाहेति होमः १५ प्राणयेन्द्रं गछ स्वाहेत्यपाने १६ चतुर्होतारं निगदेद्व्याख्यातः १७ तथा पञ्चहोत्रा षड्ढोत्रा यशस्कामः १८ ऋतुमुखेषु सँवत्सरं जुहुयात् १९ सोमेनेष्ट्वा पापीयान्मन्यमानः सप्तहोतारं मनसानुद्रुत्य विधेनामन्निति ग्रहेण जुहोति २० तेषाँ व्रतानि । त्रिभिः सहैकतः सँवत्सरं नाश्नीयात्त्रयाणामुच्छिष्टं न भुञ्जीत । त्रिभ्यो न प्रयछेत् २१ योऽधीतः सन्न विरोधेत सोऽरण्यं परेत्य ब्राह्मणं बहुविदमुपवेश्य दर्भस्तम्बमुद्ग्रथ्य चतुर्होतॄन्स्वकर्मणो व्याचक्षीत २२ नदीपर्वतमर्यादाव्यवहिताः सुत्याः समानकालाः समृतयज्ञाः २३ तस्य पुरस्तात्प्रातरनुवाकस्य

समिद्धेऽग्नौ संभारयजूँषि जुहोति यथा दीक्षणीयायाः २४ एतैर्द्वादशाहे पुरस्तात्प्रायणीयस्य जुहुयात् २५ एतैरेवातिथ्यमभिमृशेत् २६ एतान्येवाग्नीधेऽनुब्रूयात् २७ एतैरन्तरा त्वष्टारं च पत्नीश्च सँवत्सरं प्रजाकामो जुहुयात् २८ १४

भूपते भुवनपते महतो भूतस्य पते ब्रह्माणं त्वा वृण इति श्रुतवन्तमार्षेयं ब्रह्माणँ वृणीते वेदिकाले ऽमावास्यायाँ श्वोभूते पौर्णमास्याम् १ भूर्भुवः स्वर्देव सवितरेतं त्वा वृणते बृहस्पतिं ब्रह्माणं तमहं मनसे प्रब्रवीमि मनो वाचे वाग्गायत्र्यै गायत्री त्रिष्टुभे त्रिष्टुब्जगत्यै जगत्यनुष्टुभेऽनुष्टुप्पङ्क्त्ये पङ्क्तिः प्रजापतये प्रजापतिर्बृहस्पतये बृहस्पतिर्देवानां ब्रह्माहं मनुष्याणां बृहस्पते यज्ञं गोपायाहं भूपतिरहं भुवनपतिरहं महतो भूतस्य पतिरहं महो मेऽवोचो भर्गो मेऽवोचः स्तोमं मेऽवोचो यशो मेऽवोचो ऽन्नाद्यं मेऽवोचः प्रजां मेऽवोचः प्रतिष्ठां मेऽवोच इति वृतो जपति २ तीर्थेनान्वेत्यपरेण विहारं दक्षिणातिक्रम्य यज्ञोपवीत्यप्रमत्तो दक्षिणत आसीत ३ अहे दैधिषव्योदतस्तिष्ठान्यस्य सदने सीद योऽस्मत्पाकतर इत्यासनमनुमन्त्रयेत ४ आसनात्तृणमुभयतः प्रछिद्य निरस्तः परावसुः सह पाप्मनेति दक्षिणाप्रत्यक्सव्येन निरस्यति ५ इदमहमर्वाग्वसोः सदने सीदामीति सक्षिणं पादमासनमभ्यन्तरे ददाति तदन्तरेण सव्यम् ६ देवेन सवित्रा प्रसूतस्तदग्नये प्रब्रवीमि तद्वायवे तत्सूर्यायेत्युपविशति ७ सूर्यो दिवो यज्ञं पातु वायुरन्तरिक्षाद्यज्ञपतिं पात्वग्निर्मा पातु मानुषमिति जपति ८ ब्रह्मएयुपचरत्यन्यस्य वा कर्म कुर्वाणे यो नेदिष्ठी ऋत्विजाँ स्यात्स उपासीतापि वा दर्भमुष्टिमुदपात्रँ वा ब्रह्मासने न्यस्येदशून्यासनमेवँ स्यात् ९ ब्रह्मन्नपः प्रणेष्यामीत्युक्ते प्रणय यज्ञं देवना वर्धय त्वं नाकस्य पृष्ठे स्वर्गे लोके यजमानो अस्तु ॥ सप्तर्षीणाँ सुकृताँ यत्र लोकस्तत्रेमँ यज्ञँ यजमानं च धेहि ॥ बृहस्पतिः प्रसूतो ॥ भूर्भुवः स्वरों प्रणयेत्यनुजानाति १० एषोऽनुज्ञातः सर्वत्र यथाम्नातम् ११ अनामन्त्रितोऽनुजानाति प्रोक्षन्तँ हविः पूर्वं परिग्राहं परिग्रहीष्यन्तँ सामिधेनीरनुवक्ष्यन्तम् १२ प्रवरे चानुमन्त्रितोऽन्यानि मन्त्रप्रयोगे १३ वाचँ यछत्यकाले वाचँ विसृज्य वैष्णवीं निगद्य पुनर्यछेत् १४ ऋतस्य पथा पर्येहि मित्रस्य त्वा चक्षुषान्वीक्ष

इति प्राशित्रमाह्रियमाणं वीक्षते १५ सावित्रेण प्रतिगृह्य पृथिव्यास्त्वा पृष्ठे सादयामीति दक्षिणतो बर्हिषि सादयति १६ सुपर्णस्य त्वा गरुत्मत- श्चक्षुषान्वीक्ष इत्यवेक्षते १७ अङ्गुष्ठेनोपमध्यमया चादायाग्नेष्ट्वास्येन प्राश्नामि ब्राह्मणस्योदरेण बृहस्पतेर्ब्रह्मणेन्द्रस्य त्वा जठरे दधुरिति प्राश्नात्यस्पर्श- यन्दन्तान् १८ सत्येन त्वाभिघारयामीत्याचामति १९ वाङ्म आस्ये नसोः प्राणो अक्ष्णोश्चक्षुः कर्णयोः श्रोत्रं बाह्वोर्बलमूर्वोरोजः पादयोः प्रतिष्ठेति यथा- लिङ्गमङ्गानि संमृशति २० अप उपस्पृश्य विष्णोर्जठरमसीति नाभिदेशमारभ्य जपत्यरिष्टा विश्वान्यङ्गानि तनूर्मे तन्वा सहेति गात्राणि २१ प्राशित्रहरने ब्रह्मभागमादधाति २२ शँय्वन्ते प्राश्नात्यूर्ध्व ँ वा समिष्टयजुषः २३ एतेनेष्टिपशुसोमानां ब्रह्मत्वँ व्याख्यातम् २४ अग्न्याधेये वृतो ब्राह्मौदनिकस्य प्राशनं कृत्वा वसति २५ श्वोभूते संभारप्रभृत्यावृतोऽध्वर्यवे २६ सपत्नवतो भ्रातृव्यवतो वा रथचक्रँ विहारे त्रिः परिवर्तयेत् २७ वरुणप्रघासेषु वेदी क्रियमाणेऽग्रेणाहवनीयादधि स्फ्येनानुलिखेदा दक्षिणस्याः श्रोणेरा पृष्ठ्यायाः शङ्कोः सोमे २८ अप्रतिरथेनाग्निचित्यायाम् २९ तीर्थेन निःसृत्यावभृथमियात् ३० पूर्णदर्वे यद्यामन्त्रयेत जुहुधीत्यनुजानीयात् ३१ पशुबन्धेऽपरेण विहारं दक्षिणातिक्रम्य हुतायाँ वपायां चात्वाले मार्जयित्वा ३२ दार्शपौर्णमासिकँ वरणँ सोमे निवर्तेत ३३ १५

दीक्षणीयाप्रभृतीन्युपास्ते १ क्रीते सार्धं प्राङभ्युपैति २ गार्हपत्यान्ते घर्ममुपास्ते ३ उत्थायोपतिष्ठते ४ आह्रिमाणेषु परिक्रामति ५ प्राणभक्षेणादीक्षितो भक्षयति ६ पृष्ठ्यया घर्मपात्राण्यन्वेति ७ अग्नीषोमौ प्रणीयमानावन्वेति ८ यदि राजानँ हरेद्धविर्धानान्तेऽध्वर्यवे प्रदायोत्तरेणाग्नीध्रीयमपरेण सदो दक्षिणेन सदोमार्जालीयहविर्धानं गत्वाज्यानां दक्षिणत उदङ्मुख उपविशत्येष संचरः ९ श्वोभूते सवनीय आज्यानि गृह्यमाणान्युपास्ते १० अभ्युदाह्रियमाणेषु परिक्रामति ११ ग्रहान्गृह्यमाणानुपास्ते १२ वैप्रुषौ होमौ हुत्वा पवमानँ सर्पन्ति १३ ब्रह्मन्स्तोष्यामः प्रशास्तरित्युक्ते स्तुत यशं देवता वर्धय त्वं नाकस्य पृष्ठे स्वर्गे लोके यजमानो अस्तु ॥ सप्तर्षीणाँ सुकृताँ यत्र लोकस्तत्रेमँ यज्ञँ यजमानं च धत्त ॥ रश्मिना क्षयाय क्षय जिन्व ॥ बृहस्पतिः प्रसूतो ॥ भूर्भुवः स्वरोँ

स्तुतेत्यनुजानाति १४ एतत्प्रभृतयस्त्रयस्त्रिँशत्स्तोमभागास्त्रयस्त्रिंशत्स्तोत्रा-ण्यप्तोर्याम्णि । तान्येकैकेनानुजानाति १५ हुतायाँ वपायां चात्वाले मार्जयित्वा धिष्ण्यानुपस्थायापरया द्वारा सदः प्रविश्यौदुम्बर्या दक्षिणत उदङ्मुख उपविशत्येष संचरः १६ दक्षिणेन होत्रीयमधिष्ण्यानां भक्षसंचरः १७ विसँस्थितसंचरेषु सवनान्तेषु व्युत्सर्पन्ति १८ पूर्वया द्वारा निःसृत्य धानासोमान्भक्षयति १९ उपाँशूदवसानीया २० सावित्रप्रभृत्यग्निचित्यायाम् २१ न क्रमानन्वेति २२ नैर्ऋतीश्चीयमानेऽग्नौ दक्षिणतः पक्षस्य बहिर्वेद्युपास्ते २३ सत्रेति प्रेपितो वाचँ यछति २४ आहूतायाँ सुब्रह्मण्यायाँ वाचँ विसृजते वाचँ विसृजते २५ १६

इतीष्टिकल्पे द्वितीयोऽध्यायः

इति मानवसूत्र इष्टिकल्पः समाप्तः

अग्निं चेष्यमाण उखां संभरेत्पौर्णमास्याममावास्यायामेकाष्टकायाँ वा १ प्राकृतीषु सँस्थासु षोडशिवर्जमग्निमुत्तरवेद्यां चिन्वीत २ सावित्रनाचिकेतो वानग्नि-र्वोत्तरवेदिं चिन्वीत सत्राहीनेषु ३ तूष्णीं जुहूँ संमृज्य स्रुवँ संमार्ष्टि ४ जुहूमष्टगृहीतेन पूरयित्वा युञ्जानः प्रथमं मन इत्यष्टौ निगद्याहुतिं जुहोति ५ यदि कामयेत यज्ञँ यज्ञयशसेनार्पयेयमिति देव सवितः प्रसुव यज्ञमि-त्येतामूर्ध्वँ यजुषः कुर्यात् ६ ऋचा स्तोमँ समर्धयेति चतुर्गृहीतं जुहोति ७ उत्तरतो गार्हपत्यस्य देवस्य त्वा सवितुः प्रसव इत्यभ्रिमादत्ते वैणवीं कल्माषीँ सुषिरामुभयतस्तीक्ष्णामन्यतरतो वा ८ अग्रेणाहवनीयं प्रतूर्तँ वाजिन्ना-द्रवेत्यश्वमभिमन्त्रयते युञ्जाथाँ रासभमिति गर्दभम् ९ योगेयोगे तवस्तरमि-त्यभिप्रव्रजन्त्यश्वमग्रतो नयन्ति १० अग्निं पुरीष्यमङ्गिरस्वदाभरेति जपति ११ अग्निं पुरीष्यमङ्गिरस्वदछेम इति समेत्य पुरुषमभिमन्त्रयते यस्य वार्जँ विवृञ्जिषेत् १२ यतः सूर्यस्योदयनं ततो वल्मीकवपामपघ्नन्नग्निं पुरीष्य-मङ्गिरस्वद्भरिष्याम इति ब्रूयात् १३ अन्वग्निरुषसामग्रमक्शदिति वल्मीका-दभिप्रव्रजन्ति १४ आगत्य वाज्यध्वानमित्याखानं प्राप्य जपति १५ आक्रम्य वाजिन्द्यौस्ते पृष्ठमिति द्वाभ्यामश्वमाक्रमयति १६ आक्रम्यमाणे यजमानो यं दिष्यात्तं ब्रूयादमुमभितिष्ठेति १७ उत्क्रामेत्युत्क्रमयति १८ उदक्रमीदि-

त्यश्वमभिमन्त्रयते १९ आ त्वा जिघर्म्या विश्वतः प्रत्यञ्चमिति द्वाभ्यामश्वपदे जुहोति २० परि वाजपतिस्त्वमग्ने द्युभिः परि त्वाग्ने पुरँ वयमित्येकैकया परिलिखति २१ सावित्रैरभ्रिमादत्ते चतुर्भिश्छन्दोऽन्तैः २२ देवस्य त्वा सवितुः प्रसव इत्यनुवाकशेषेण खनति २३ अपाँ पृष्ठमसीति पुष्करपर्णँ विवेष्टयति २४ शर्म च स्थः सँवमेथामित्युत्तरत आखानस्य कृष्णाजिनं पुष्करपर्णं च सँस्तृणात्यधस्तात्पृष्णाजिनं प्राग्ग्रीवमुत्तरलोममुपरिष्टान्नाभि प्राग्द्वारं पुष्करपर्णम् २५ तस्मिन्पुरीष्योऽसि विश्वभरा इति यजुषा पुरीषमा-वपत्यृग्भिस्तिसृभिश्च त्वामग्ने पुष्करादधि तमु त्वा दध्यङ्ङृषिस्तमु त्वा पाथ्यो वृषेति गायत्रीभिर्ब्राह्मणस्योत्तराभिस्त्रिष्टुब्भी राजन्यस्योत्तमाभिर्जगतीभिर्वै-श्यस्य २६ यं कामयेतर्ध्नुयादिति तस्य गायत्रीभिश्च त्रिष्टुब्भिश्च संभरेद्गा-यत्र्याभ्यादाय त्रिष्टुभा निवपति २७ अयं ते योनिर्ऋत्विय इति न्युप्तमभिमृशति २८ अपो देवीः सं ते वायुरित्यद्भिराखानमुपसृजति २९ सुजातो ज्योतिषेति पुरीषमभिमन्त्रयते ३० वासो अग्ने विश्वरूपमित्युपनह्यति मौञ्जेन दाम्नार्कमयेण वा ३१ उदु तिष्ठ स्वध्वरोर्ध्व ऊ षु ण इत्यादायोत्तिष्ठति ३२ स जातो गर्भो असि रोदस्योरिति जपति ३३ स्थिरो भव वीड्वङ्ग इति गर्दभ आदधाति ३४ शिवो भव प्रजाभ्य इति पुरीषमभिमन्त्रयते ३५ अश्वप्रथमाः प्रत्यायन्ति ३६ प्रैतु वाजीत्यश्वमभिमन्त्रयते नानदद्रासभः पत्वेति गर्दभमग्न आयाहि वीतय इति पुरीषम् ३७ ऋतँ सत्यमृतँ सत्यमिति पुरुषँ येन संगछेत तमभिमन्त्रयेत ३८ दक्षिणत आहवनीयस्य खरं कृत्वा परिश्रयति ३९ तस्मिन्दर्भाना-स्तीर्यौषधयः प्रतिगृभ्णीतेति द्वाभ्यां खरे सादयति ४० अश्वगर्दभावध्वर्यवे ददाति ४१ १

वि पाजसेति द्वाभ्याँ विष्यति १ पर्णवल्कलफाण्टाभिरद्भिरापो हि ष्ठेति तिसृभिरुपसृजति २ मित्रः सँसृज्येति द्वाभ्यां पञ्चभिः संभारैः संभारैः सँसृजत्यजलोमभिः कृष्णाजिनस्य त्रिभिश्चूर्णीकृतैः शर्कराभिर्वैणवङ्गारैरर्म-कपालैः सिकताभिश्च ३ सँसृष्टाँ वसुभिरिति तिसृभिरभिमन्त्र्य पत्न्यै प्रयछति ४ मखस्य शिरोऽसीति पिण्डमभिमृशति ५ पत्न्युखां करोति त्र्युद्धिं चतुरश्राम् ६ आम्नातं प्रमाणम् प्रथयित्वा ताँ समुन्नीयोद्धीर्मध्य आदधाति ७ क्रियमाणाँ

यजमानोऽनुमन्त्रयते वसवस्त्वा कृण्वन्त्विति प्रथमामुद्धिँ रुद्रास्त्वेति द्वितीयामादित्यास्त्वेति तृतीयाँ विश्वे त्वा देवा वैश्वानराः कृण्वन्त्विति सँलिप्यमानां ध्रुवाप्रभृतिभिः ८ पत्नी द्व्यङ्गुलेऽधस्ताद्द्वारस्यादित्या रास्नासीति रास्नां करोति ९ अदितिष्टे बिलमिति द्वारँ रास्नायाः १० दिन्नु द्वौ चतुरोष्टौ वा स्तनान्करोति ११ इन्नुशलाकया निलिप्य कृत्वाय सा महीमुखामिति विषजति १२ शेषस्य त्र्यालिखितामषाढामिष्टकां करोति १३ वसवस्त्वा धूपयन्त्वितिप्रभृतिभिर्गार्हपत्यादश्वशकेन खरदेशे धूपयति १४ अग्रेण गार्हपत्यमदितिष्ट्वा देवीत्यापाकं खनति १५ देवानां त्वा पत्नीरित्युखामाधायाषाढामादधाति १६ कुपिनैः परिश्रित्य पचनमभ्युद्य धिषणा त्वा देवीतिप्रभृतिभिर्गार्हपत्यात्पचति १७ मित्रस्य चर्षणीधृत इत्यभीद्धामुपचरति १८ देवस्त्वा सवितोद्वपत्विति पक्वामुद्वपति १९ उत्तिष्ठ बृहती भवेत्यादायोत्तिष्ठति २० अग्रेणाहवनीयं पर्याहृत्य खरे निधाय मित्रैतां त उखां परिददामीति मित्राय परिददाति २१ तप्तामजन्नीरेण वसवस्त्वाछृन्दन्त्विति-प्रभृतिभिश्चतुर्भिराछृणत्ति २२ शिरश्छित्त्वाहरति वैश्यस्य राजन्यबन्धोर्वाशनिहतस्येषुहतस्य वा २३ अयँ यो अस्य यस्य त इदँ शिर एतेन त्वँ शीर्षण्यामेधि । इति छेदेऽपिनिदधाति सप्तधा विदीर्णाँ वल्मीकवपाँ सप्त च माषान् २४ इदमस्माकं भुजे भोगाय भूयासम् ॥ इति शिरः पाणौ कुरुते २५ योऽस्य कौष्ठ्यजगतः पार्थिवस्यैव इद्वशी । यमं भङ्गश्रवो गाय यो राजानपरोध्यः ॥ यमं गाय भङ्गश्रवो यो राजानपरोध्यः । येनापो नद्यो धन्वानि येन द्यौः पृथिवी दृढा ॥ हिरण्यकेशान्सुधुरान्हिरण्याक्षानयःशफान् । अश्वाननश्वतो दानं यमो राजाधितिष्ठति ॥ अहरहर्नयमानो गा अश्वान्पुरुषान्पशून् । वैवस्वतो न तृप्यति सुरया इव दुर्मदः ॥ इति यमगाथा गायञ्शिर आहृत्य मृदा प्रलिम्पति २६ २

पञ्च साण्डानालभते प्राजापत्यमजमग्निभ्यः कामेभ्यो ऽश्वमृषभँ वृष्णिं बस्तम् १ सिद्धमा सामिधेनीभ्यः २ अनभ्यावर्तयँश्चतुर्विँशतिँ सामिधेनीरन्वाह प्र वो वाजा अभिद्यव इत्येकादश समास्त्वाग्न ऋतवो वर्धयन्त्विति दश । ज्योतिष्मतीं परिहायाप्रीरुतमा उपेमसृन्नीत्यप्सुमतीस्तिस्त्रो ज्योतिष्मत्या

परिदधाति ३ सिद्धमाधारात् ४ हिरण्यगर्भ इति स्रौचमाघारमाघारयति ५ सिद्धमा पर्यग्निकरणात् ६ उत्तरं प्राजापत्यं निधाय शिरो त्रिः पर्यग्निं करोति ७ पर्यग्निकृतानुत्सृज्य प्राजापत्येन संम्स्थापयन्त्युपाँशुदेवतेन ८ तस्याग्नये वैश्वानराय द्वादशकपालः पशुपुरोडाशः ९ उत्सृष्टानाँ शिराँसि छित्वा निदध्यात् १० ह्रदे कायान्प्रविध्येज्जिह्वाश्च यस्मादिष्टकाश्चिकीर्षेत् ११ अथैतान्पञ्चालभेताजँ वा श्वेतँ साण्डं तूपरँ वायवे नियुत्वते १२ तदाप्रीः सामिधेनीः १३ स आधारः १४ तस्य प्राजापत्यो द्वादशकपालः पशुपुरोडाशः १५ जिह्वामवदानेषु कृत्वा शिरः पशोर्निदध्यात् १६ सिद्धः पशुबन्धः १७ दीक्षणीयां निर्वपत्याग्नावैष्णवमेकादशकपालमादित्येभ्यो घृते चरुमग्नये वैश्वानराय द्वादशकपालम् १८ सिद्धमाधीतयजुभ्यः १९ आकूत्यै प्रयुज इति पञ्च हुत्वा कूतमग्निं प्रयुजँ स्वाहेति षड्जुहोति विश्वो देवस्य नेतुरिति पूर्णाहुतिम् २० सिद्धमा मुष्टिकरणात् २१ उखां प्रवृणक्त्याहवनीये प्रभूतेष्वङ्गारेषु ॥ मा सु भित्था मा सु रिष इति द्वाभ्यामुपदधाति २२ तप्तायां मुञ्जानवदधात्यन्यद्वा क्षिप्राग्निम् २३ सन्तापेनाग्निं जनयति २४ अवसृजेदाहवनीयम् २५ न कामेषु प्रवृणक्ति २६ आहृत्यावदध्यान्मथित्वा गतश्रीर्भ्रष्टादन्नाद्यकामस्य वैद्युताद्ब्रह्मवर्चसकामस्योपरि वृक्षे दीप्यमानं प्रदावादाहरेद्यं कामयेत प्रसेनेनास्य राष्ट्रं जायुकँ स्यादिति २७ उख्यँ समिध्य समिध आदधाति द्रवन्नः सर्पिरासुतिरिति क्रुमुकं घृताक्तं परस्या अधि सँवत इत्यौदुम्बरीं परमस्या परावत इति वैकङ्कतीँ यदग्ने यानि कानि चेति शमीमयीमपरशुवृक्णाँ यदत्त्युपजिह्विकेति पञ्चभिरौदुम्बरीमपरशुवृक्णां तैल्व-कीँ वाभिचरतो दँष्ट्राभ्यां मलिम्लूनग्न इत्याश्वत्थीम् २८ यो अस्मभ्य-मरातीयादिति शमीमयीमपरशुवृक्णां तैल्वकीँ वाभिचरन्नादधद्यजमानो यं द्विष्यात्तं मनसा ध्यायेत् २९ उदेषां बाहूनतिरमिति द्वाभ्यामौदुम्बरीमा-दधद्यजमानँ वाचयति ३० ब्रह्म क्षत्रँ सयुजेति समिधमादधाति ३१ ३

सौवर्णँ रुक्ममेकविँशतिनिर्बाधं दृशानो रुक्म इति प्रतिमुञ्चति १ उपरि-ष्टान्निर्बाधं बिभर्ति २ आसन्दीं निदधाति ३ तस्याः प्रादेशमात्राः पादाः ४ समानमन्यत् ५ मौञ्जँ शिक्यँ षडुद्यावं द्वादशोद्यावंम् वासन्द्यां निदधाति ६

नक्तोषासेत्युख्यमुद्यस्य शिक्येऽवदधाति ७ विश्वा रूपाणीति शिक्यपाशं प्रतिमुञ्चति नक्तोषासेति कृष्णाजिनम् ८ सुपर्णोऽसि गरुत्माँस्त्रिवृत्ते शिर इति जपति ९ सुपर्णोऽसि गरुत्मान्दिवं गछ स्वः पतेत्युख्यमुद्यम्याध्यधि नाभिमुखां धारयमाणो विष्णोः क्रमोऽसीतिप्रभृतिभिः प्राङ्चतुः प्रक्रामति १० अक्रन्ददग्निरिति क्रन्दवतीं जपति ११ अग्नेऽभ्यावर्तिन्निति चतसृभिः पुनर्व-तीभिः प्रदक्षिणमावर्तते १२ वा त्वाहार्षमित्यावृत्य जपति १३ उदुत्तमँ वरुण पाशमिति शिक्यपाशमुन्मुञ्चति १४ अग्ने बृहन्नित्युख्यमभिमन्त्रयते १५ हँसः शुचिषदिति हँसवत्यासन्द्यां निदधाति १६ सीद त्वं मातुरस्या उपस्थ इति तिसृभिः सन्नवतीभिरुख्यमुपतिष्ठते १७ दिवस्परीतिप्रभृतिभिर्द्वादशभिर्वा-त्सप्रेणोपतिष्ठते १८ मुष्टिकरणप्रभृति दैक्षं कर्म सिद्धम् १९ व्रतयिष्यन्येन देवा ज्योतिषेत्युख्यँ समिध्य समिधमादधाति घृताक्तां प्रथमाँ समिधाग्निं दुवस्यतेति गायत्र्या ब्राह्मणस्य प्र प्रायमग्निरिति त्रिष्टुभा राजन्यस्य द्वाभ्यां गायत्रीभ्याँ वैश्यस्य २० अन्नपते अन्नस्य नो देहीति घृताक्ताम् २१ देवस्य त्वा सवितुः प्रसवेऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्यामग्नये त्वा वैश्वानरा-याहरुपदध इति समिधमादधाति रात्रीमुपदध इति प्रातः २२ अत ऊर्ध्वमुदित आदित्ये क्रमा अहनि २३ प्रतिमोचनप्रभृति सिद्धमोपस्थानात्सन्नवतीभिः २४ नक्तँ वात्सप्रेणोपतिष्ठते २५ दीक्षितो भृतिँ वन्वीत २६ प्रयास्यन्नुदु त्वा विश्वे देवा इत्युख्यमादत्ते २७ हँसः शुचिषदिति हँसवत्या सन्नवतीभि-श्चानस्यादधाति । पात्र्योः समोप्य परावादधाति २८ प्रेदग्ने ज्योतिष्मा-न्याहीति प्रयाति २९ यदि खर्जेत्क्रन्दवत्यानुमन्त्रयेत ३० यद्युखा पूर्येतेष्ट-कासँयमनाय भस्म निदध्यात्पशुकामस्य पुरीषम् ३१ सहविहारो यायावरः प्रयाति ३२ आपो देवीः प्रतिगृभ्णीतेति तिसृभिरप्सु भस्म प्रवपति ३३ प्रसद्य भस्मनेति द्वाभ्यां भस्ममुष्टी प्रत्यावपति ३४ पुनर्वतीभ्यां प्रत्येत्य यथास्थानँ सादयित्वा बोधद्वतीभ्यामुपतिष्ठते ३५ न प्राजापत्येनानिष्ट्वेष्टकाः कुर्वीत ३६ तिस्रो रात्रीर्भृत्वेतिप्रभृत्याम्नातं दीक्षापरिमाणम् ३७ दीक्षिते न पुनर्वती-भिरुख्यमुपतिष्ठते ३८ मृन्मयीरिष्टकाश्चतुरश्रा ऋजुलेखास्त्र्यालिखिता दक्षि-णावृतोऽन्याः सव्यावृतश्च खण्डकृष्णलक्ष्मवर्जं नैर्ऋतीस्तिस्रः कृष्णास्तुषपक्वा निर्मन्थेन पचेद्दक्षिणाग्नेर्वा ३९ दीक्षाभ्य ऊर्ध्वं क्रमवात्सप्रँ समस्य ४

अपेत वीतेति शालामुखीयदेशं जोषयते । तस्मिन्व्यामँ विधाय मण्डलम् चतुरश्रँ वोद्धत्यावोक्ष्य चित स्थ परिचित स्थेत्यैकविँशत्या प्रदक्षिणँ शर्कराभिः परिश्रयति १ अग्नेर्भस्मास्यग्नेः पुरीषमसीति सिकता निवपति संज्ञानमसीत्यूषान् २ मयि गृह्णामि यो नो अग्निः पितर इति चेष्यञ्जपति यजमानो वा ३ व्यूह्योषसिकतमयँ सो अग्निरिति चतसृभिर्मध्येऽग्नेश्चतस्रः प्राचीः समीचीरिष्टका उपदधातीडामग्न इति द्वे समीची पुरस्ताच्चिदसि परिचिदसीति द्वे समीची पश्चात् ४ सर्वत्रेष्टकोपधानमन्त्रेष्वन्ततस्तया देवतयेत्यनुषजति ५ लोकं पृण छिद्रं पृणेत्येतया त्रयोदशभिश्चितिँ संपूरयति ॥ ता अस्य सूददोहस इत्यनुषङ्गः ६ चित्यांचित्याँ हिरण्यशकलमुपास्यति ७ पृष्टो दिवीति चात्वालदेशात्पुरीषेण चितिँ संछादयति ८ एवं प्रथमे गार्हपत्यस्य पञ्च चितीरुपदधाति तिस्रो द्वितीय एकां तृतीये ९ संचिते समितँ संकल्पेथामिति चतुर्भिरुख्यं निवपति १० मातेव पुत्रमित्युखाँ विमुञ्चति ११ न रिक्तामवेक्षेत १२ सिकताभिः पूरयित्वा निदध्याद्दध्ना घृतेन मधुना वा १३ यदस्य पारे रजस इति शिक्यमादत्ते १४ दक्षिणापरमवान्तरदेशँ यन्ति १५ स्वकृत इरिणे नैर्ऋतीरुपदधात्यसुन्वन्तमयजमानमिछेति तिसृभिः पराङ्पराङ् १६ न तयादेवतं करोति १७ यं ते देवी निर्ऋतिराबबन्धेति जालमिष्टकास्वध्यस्यति १८ रुक्मसूत्रमनुप्रहृत्यासन्द्याभिविक्रमयति १९ यदस्य पारे रजस इत्युदकुम्भेनेष्टकाः प्रसव्यं त्रिः परिषिञ्चन्पर्येति । निधाय त्रिरपरिषिञ्चन्प्रतिपर्येति २० भूत्यै नम इत्युक्त्वावर्तते २१ शं नो देवीरभिष्टय आपो भवन्तु पीतये । शँ योरभिस्रवन्तु नः ॥ शं न आपो धन्वन्याः शं नः सन्त्वनूप्याः । शं नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥ शं नो मित्रः शँ वरुणः शं नो भवत्वर्यमा । शं न इन्द्रश्चाग्निश्च शं नो विष्णुरुरुक्रमः ॥ इति तिसृभिः परोगोष्ठं मार्जयन्ते २२ अनपेक्षमाणाः प्रत्यायन्ति २३ निवेशनः संगमनो वसूनामित्यैन्द्रया गार्हपत्यमुपतिष्ठते २४ प्रायणीयाप्रभृति सिद्धमोपसद्भ्यः २५ षडुपसदः प्रवर्ग्यवत्यः २६ अनूपसदमग्निं चिन्वीत २७ प्रथमायामुपसदि पूर्वाह्णिकीं कृत्वा यूपमछैति २८ अग्रेण प्राग्वँशं त्रिषु प्रक्रमेष्वपरिमिते वावकाशे पृष्ठ्याशङ्कुं निहत्य वेदादानप्रभृति वेदिँ विदधाति यथा सोमे २९ ऊर्ध्वबाहुना यजमानेन वेणुं प्रमायोत्तरवेदिदेशे सप्तपुरुषमग्निँ विदधाति ३० तस्य चतुःपुरुष

आत्मा पुरुषमात्राणि पक्षपुछानि ३१ अरत्निं पक्षयोरत्युपदधाति प्रादेशं पुछे ३२ तुर्यपुरुषँ शिरो विधाय विहितस्य मध्यदेशे दर्भस्तम्बे हिरण्यं निधाय सजूरब्दो आयवोभिरित्यभिजुहोति ३३ प्रजापतिष्ट्वा सादयतु पृथिव्याः पृष्ठे तया देवतयाङ्गिरस्वद्ध्रुवा सीदेति विहितस्य मध्यदेशे पृथिवीमभिमृशति ३४ दक्षिणतः पक्षस्योद्योजनमन्तर्याममिति सीरे युगवरत्राणि संबध्नाति ३५ पूषा युनक्तु सविता युनक्त्विति तिसृभिर्युज्यमानमनुमन्त्रयते ३६ षड्युक्तेन कृषति द्वादशयुक्तेन वा ३७ उदस्थाद्गोजिदश्वजिदित्युच्छ्रितमनुमन्त्रयत उष्टारयोः पील्वयोरित्यनडुहः ३८ लाङ्गलं पवीरवमिति पञ्चे मामिन्द्र हस्तच्युतिमिति षष्ठी । तासामेकैकया द्वेद्वे सीते कृषति ३९ दक्षिणार्धात्पक्षस्योपक्रम्य मध्येन सीतां करोत्युत्तरस्मात्पक्षान्तात्प्रदक्षिणावृता दक्षिणां पूर्वामुदीची-मपराम् ४० एवं तिस्रस्तिस्रः सीताः कृषति दक्षिणस्याः श्रोणेरध्यो-त्तरस्मादँसात्पुछादध्या शिरस उत्तरस्याः श्रोणेरध्या दक्षिणस्मादँसात् ४१ विमुच्यध्वमघ्न्या देवयाना इति दक्षिणाप्राचो विमुञ्चति ४२ तानध्वर्यवे ददाति सीरं च ४३ ५

ओषधीरारण्या ग्राम्याश्च सर्पिषा सँसृज्य या ओषधयः प्रथमजा इति चतुर्दशभिः सर्वमग्निँ वपति १ या न विन्देत्ताभ्यो यवान्मधूद्युतान्वपेत् २ शेषेणोप्त-मग्निमुपतिष्ठेत ३ दिग्भ्यो लोष्टान्बहिर्वेदेर्मा नो हिँसीज्जनितेति चतसृभिर्मध्येऽग्नेः समस्यति ४ यां जनतां कामयेत क्षोधुका स्यादितीष-मूर्जमहमित आदीति तस्या दिशो लोष्टानाहरेत् ५ कामं कामदुघे धुक्ष्वेति सीताँसीतामभिमृशति ६ गोयुगेन चात्वालँ विदधाति ७ दशपदामुत्तरवेदिं मध्येऽग्नेर्व्याघारणान्तां कुर्वीत ८ चित स्थ परिचित स्थेत्यग्निं प्रदक्षिणँ शर्कराभिः परिश्रयति ९ अग्ने तव श्रवो वय इति षड्भिः सिकता निवपति १० आप्यायस्व सं ते पयाँसीति सौमीभ्याँ व्यूहति शिरसि पक्षपुछानां चाप्यया लोकालोका मध्येऽग्नेः स्वयमातृण्णालोके ११ उत्तरं पुछाप्ययं प्रत्यग्नेराक्रमणम् १२ अग्रेण शालामुखीयँ रोहिते चर्मण्यानडुहे प्राग्ग्रीवे लोमतश्चितीनां प्रथमेष्टकाः समादधाति १३ अनुवाचयति चित्यग्निभ्य इत्युपाँशु प्रणीय-मानेभ्योऽनुब्रूहीत्युच्चैः १४ सकृदुक्तायां चर्मणाहरन्त्यश्वमग्रतो नयन्ति १५

श्रोणेः पश्चाच्चर्म निदधाति १६ समयोत्तरवेदिमभ्यस्थाँ विश्वाः पृतना इति दक्षिणेन पादेन स्वयमातृण्णालोकेश्वमाक्रमयत्यपर्यावर्तयन्परिक्रमयति १७ प्रत्यवनीयाश्वं कुम्भेष्टका द्वादशोदकेन पूरयित्वा समन्या यन्तीतिप्रभृतिभि-र्द्वादशभिर्मध्यमासु सीतासूपदधाति कुम्भं कुम्भीं च द्वेद्वे लोकेषु चतस्रो मध्ये १८ आपो हि ष्ठेति तिस्रः कुम्भेष्टकाः समन्वीक्षमाणो जपति १९ नैवारं चरुं पयसि शृतं दिवि श्रयस्वेति दक्षिणतः पुरस्तात्स्वयमातृण्णालोकस्योपदधाति २० ६

पदे पुष्करपर्णं प्रत्यग्द्वारमधस्तान्नाभि तपो योनिरसीत्युपदधाति १ पुष्करपर्णे रुक्मं प्रत्यक्पाशमुपरिष्टान्निर्बाधं ब्रह्म जज्ञानमित्युपदधाति २ रुक्मे सौवर्णं पुरुषं प्राक्शिरसमुत्तानँ हिरण्यगर्भ इति द्वाभ्यामुपदधाति ॥ द्रप्सश्च-स्कन्देत्यभिमृशति ३ नमोऽस्तु सर्पेभ्य इति तिसृभिः सर्पनामभिरुपतिष्ठते ४ कृणुष्व पाज इति पञ्चभिर्व्याघारयति यथा नाभिम् ५ कार्ष्मर्यमयीँ स्रुचं घृतस्य पूर्णामयमग्निः सहस्रिणोऽग्नेष्ट्वा तेजसा सादयामीति दक्षिणत उपदधात्यौ दुम्बरीं दध्नः पूर्णां भुवो यज्ञस्येन्द्रस्य त्वौजसा सादयामीत्युत्तरत उपदधाति ६ स्वयमातृण्णाँ शर्करामश्वेनोपघ्राप्य भूरित्यभिमन्त्रयते ७ ध्रुवासि धरुणेति सयजुषं करोति ८ प्रजापतिष्ट्वा सादयत्विति पर्यायेगो-पदधाति पुरुषे स्वयमातृण्णां ब्राह्मणेन सहाविदुषा ९ शिरः प्रत्यातृण्णं स्यात् १० अभिप्राण्य चितिं जुहोमोत्यदाभ्यातृण्णेऽभिजुहोति ११ पृथिवी-माक्रमिषमिति यजमानो जपति १२ अविदुषे वरं ददाति १३ तेजोऽसि तेजो मे यछेति पूर्वाँ हिरण्येष्टकामुदपुरा नामासीत्यपरां मण्डपाँ यास्ते अग्न आर्द्रा योनय इति दक्षिणां कुलायिनीमुत्तरँ लोष्टं दूर्वामिश्रं काण्डात्काण्डा-त्प्ररोहन्तीति द्वाभ्यामुपदधाति यथाप्रुयुर्दूर्वाः स्वयमातृण्णाम् १४ पूर्वाँ हिरण्यमूर्ध्नीँ वामभृतं । काचावँसयोः स्याताँ ॥ यास्ते अग्ने सूर्ये रुच इति द्वाभ्यामुपदधाति १५ विराड्ज्योतिरधारयद्भूरसि भुवनस्य रेत इति रेतःसिचम् १६ स्वराड्ज्योतिरधारयत्सूरसि सुवनस्य रेत इति द्वितीयां । प्रथमायां चितावपुत्रस्य पुत्रिणो द्वितीयामुत्तमायाम् १७ सम्राड्ज्यो-तिरधारयदिति ज्योतिषो धृतिं पूर्वाँ रेतः सिग्भ्याम् १८ बृहस्पतिष्ट्वा

सादयत्विति विश्वज्योतिषम् १९ तस्याः पूर्वां घर्मेष्टकामरण्येऽधीतेनानुवाकेन २० अषाढासि सहमानेत्यषाढाम् २१ दध्ना मधुमिश्रेण पृषतं कूर्मं मधु वाता ऋतायत इति तिसृभिरभ्यनक्त्यपां त्वा गह्मन्त्सादयामीति पुरस्तात्प्रत्यञ्चमुपदधाति २२ प्रादेशमात्रमुलूखलमुसलमौदुम्बरम् यच्चिद्धि त्वं गृहेगृह उलूखलक युज्यसे । इह द्युमत्तमँ वद जयतामिव दुन्दुभिः ॥ इत्यभिमन्त्रय तस्मिन्व्रीहीनवहन्ति २३ इदँ विष्णुर्विचक्रम इति द्वाभ्यामुपदधाति दक्षिणतः पुरस्तात्स्वयमातृण्णायाः प्र तद्विष्णुरित्युदञ्चं मुसलम् २४ नक्तोषासा स्यूता देवेभिरित्यनुवाकशेषेणोखामुत्तरतः पुरस्तात्स्वयमातृण्णाया यावत्युलूखलम् २५ अग्ने युक्ष्वा हि ये तवेति द्वाभ्यामग्निँ योजयित्वा दध्ना मधुमिश्रेण समित्स्रवन्तीति शिरसां छिद्राणि पूरयित्वा हिरण्यशकलानप्यस्यत्यृचे त्वेति कर्णे रुचे त्वेति सव्ये भासे त्वेत्यक्षिणि ज्योतिषे त्वेति सव्येऽभूदिदमिति नासिकायामग्निस्तेजसेति सव्यायाँ रुक्मो वर्चसेत्यास्ये सहस्रदा असि सहस्राय त्वेति विकर्तने २६ आदित्यं गर्भमित्युखायां पुरुषशीर्षमुपदधाति प्रत्यङ्मुखमवाक्छेदम् २७ अभित इतराणि परिहारँ स्पृष्ट्वेत्युखायाँ श्रवणखैर्हनुभिः प्रतिष्ठितानि वातस्य जूतिमित्यश्वशिरः पुरस्तादजस्रमिन्दुमित्यृषभस्य पश्चात्त्वष्टुर्वरुत्रीमिति वृष्णर्दक्षिणतो यो अग्निरग्नेरिति बस्तस्योत्तरतः २८ इमं मा हिँसीर्द्विपादमित्युत्सर्गैर्यथोपहितमेकैकेनोपतिष्ठेत २९ पुरुषशिरसोऽक्षिणि चित्रं देवानामित्यर्धर्चेनाभिजुहोत्याप्रा द्यावापृथिवीति सव्ये ३० एकं चेदजशिरः स्यादुखायामुपधायोपधानैरुत्सर्गैर्लोकानुपतिष्ठेत परिहारँ वा लोकेषु तैर्मन्त्रैरुखायामुपधायोपधानैरुत्सर्गैरुपतिष्ठते ३१ पशुशिराँसि स्वयमातृण्णां चान्तरेण न व्यवेयाद्यदि व्यवेयात्त्वँ यविष्ठेति जपेत् ३२ ७

उत्तरस्मिन्नँसे पुरुषचितिमुपदधाति १ मा छन्द इतिप्रभृतयः पर्यायास्तेषामेकैकेन पर्यायेण युगपत्तिस्रस्तिस्र उपदधाति ॥ ध्रुवाः सीदतेत्यन्तेन २ उत्तरार्धात्सर्पशिरः सर्पनामभिः पराचीनमुपदधात्यनुदिशेद्वा नोपदध्यात् ३ अपाँ त्वेमन्त्सादयामीतिप्रभृतिभिरपस्या दिक्षु पूर्वार्धादुपक्रम्य प्रदक्षिणं पञ्चपञ्चोपदधाति ॥ गायत्रेण त्वा छन्दसा सादयामीतिप्रभृतिभिश्छन्दस्या उत्तरत उपदधाति ४ अयं पुरो भूरितिप्रभृतयः पर्यायास्तेषामेकैकेन पर्यायेणैकैकां

दशदश प्राणभृत उपदधाति दक्षिणस्मिन्नँसे सव्यायाँ श्रोणौ दक्षिणायाँ श्रोणौ सव्ये ऽँसे मध्ये पञ्चमम् ५ प्राची दिग्वसन्त ऋतुरिति पर्यायाः सँयत उपदधाति यथा प्राणभृतः ६ अवकास्वृतव्या ॥ मधुश्च माधवश्चेतिप्रभृतयः पर्यायास्तेषामेकैकेन पर्यायेण युगपद्द्वेद्वे चित्यांचित्यामिष्टके उपदधाति चतस्रो मध्यमायाम् ७ अग्नेरन्तःश्लेषोऽसीति यथर्तु सर्वत्रानुषजति ध्रुवे सीदतमित्यन्तेन ८ अग्नेर्यान्यसीति दश सँयान्यस्तासां द्वेद्वे चित्यांचित्यामिष्टके उपदधाति ९ त्वामग्ने वृषभं चेकितानं पुनर्युवानं जनयन्नुपागाम् । अस्थूरि नौ गार्हपत्यानि सन्तु तिग्मेन नस्तेजसा सँशिशाधि ॥ इत्यृषभेण चित्यांचित्यामिष्टका उपदधात्यृजुलेखाः पुछे समं पश्चात्प्राचीं पुरस्तात्प्रतीचीमुपदधाति दक्षिणावृतो दक्षिणत आत्मन्युदग्द्वाराः प्रत्यग्द्वाराः पक्षे सव्यावृत उत्तरत आत्मनि दक्षिणाद्वाराः प्राग्द्वाराः पक्षे १० लोकंपृणया चितिँ संपूरयति ११ अग्ने धामानीति स्वयमातृणालोके चितिंचितिमभिमृशति १२ अग्ने कह्येति स्वयमातृणालोके चितिंचितिमभिजुहोति १३ या त इषुर्युवा नामेति सर्वत्रानुषजति १४ यो अप्स्वन्तरग्निरित्येकैकया चितिहोमाननुमन्त्रयते द्वाभ्यामुत्तमम् १५ अश्वँ श्यावमालभ्य पृष्टो दिवीति चात्वालात्पुरीषेण चितिँ संछादयति संछादयति १६ ८

इति चयने प्रथमोऽध्यायः

आपराह्णिक्यौ प्रवर्ग्योपसदावुपेत्य वसन्ति १ ऊर्ध्वं पूर्वाह्णिकीभ्यामाश्विनीभिर्द्वितीयां चितिमारभन्ते ध्रुवक्षितिर्ध्रुवयोनिरितिप्रभृतिभिः पञ्च लोकेषु २ आश्विनीर्ऋतव्या अनूपधीयन्ते राजूर्ऋतुभिरितिप्रभृतिभिः पञ्च ॥ सजूर्देवैर्वयुनाधैरिति सर्वत्रानुषजति ३ ऋतव्या वायव्या अनूपधीयन्ते प्राणं मे पाहीतिप्रभृतिभिः पञ्च ४ वायव्या अपस्या अनूपधीयन्तेऽपः पिन्वेतिप्रभृतिभिः पञ्च ५ अपस्या वयस्या अनूपधीयन्ते क्षत्रँ वयो मयन्त छन्द इति चतस्रः पूर्वार्धेऽप्ययेषु पञ्चपञ्च ६ व्याख्याताः सार्वचितिक्यो लोकंपृणा पुरीषं च ७ आपराह्णिक्यौ प्रवर्ग्योपसदावुपेत्य वसन्ति ८ ऊर्ध्वं पूर्वाह्णिकीभ्यां तृतीयां चितिमारभन्ते ९ स्वयमातृणाँ शर्करामश्वेनोपघ्राप्य भुव इत्यभिमन्त्रयते १० इन्द्राग्नी अव्यथमानामिति सयजुषं करोति ११ विश्वकर्मा त्वा

सादयत्विति पर्यायेणोपदधाति १२ नात्राविद्वान्न वरदानम् १३ अभिप्राण्या- पान्य चितिं जुहोमीत्यदाभ्यातृणोऽभिजुहोति १४ अन्तरिक्षमाक्रमिषमिति यजमानो जपति १५ ज्योतिरसि ज्योतिर्मे यछेति पूर्वां हिरण्येष्टकामपराजिता नामासीत्यपरां मण्डलाम् १६ विश्वकर्मा त्वा सादयत्विति विश्वज्योतिषम् १७ राज्ञ्यसि प्राची दिगितिप्रभृतिभिः पञ्च दिश्या लोकेषु १८ आयुर्मे पाहीतिप्रभृतिभिरप्ययेषु दश पूर्वार्धे द्वादशद्वादशेतरेषु १९ मूर्धासि राडिति- प्रभृतिभिरादित्यधाम्नीः सप्त पुरस्ताद्यन्त्री राडितिप्रभृतिभिरङ्गिरोधाम्नीः सप्त पश्चात् २० व्याख्याताः सार्वचितिक्यो लोकंपृणा पुरीषं च २१ आपराह्णिक्यौ प्रवर्ग्योपसदावुपेत्य वसन्ति २२ ऊर्ध्वं पूर्वाह्णिकीभ्यामक्ष्णयास्तोमीया- भिश्चतुर्थीं चितिमारभन्त आशुस्त्रिवृदिति पुरस्ताद्व्योमा सप्तदश इति दक्षिणतो भान्तः पञ्चदश इत्युत्तरतो धरुण एकविँश इति पश्चाद्गर्भाः पञ्चविँश इति मध्ये । पञ्चदश शिष्टास्तिस्रस्तिस्रो लोकेषूपदधाति २३ स्मृत उपदधात्यग्नेर्भा- गोऽसीति पुरस्तादिन्द्रस्य भागोऽसीति दक्षिणतो नृचक्षसां भागोऽसीत्युत्तरतो मित्रस्य भागोऽसीति पश्चाददित्या भागो ऽसीति मध्ये । शिष्टाः पञ्चानूपदधाति २४ एकयास्तुवत प्रजा अधीयन्तेति सप्तदश सृष्टीर्मध्य उपदधाति २५ ऋतूनां पत्नीति पञ्चदश व्युष्टीस्तिस्रस्तिस्रो लोकेषूपदधाति २६ व्याख्याताः सार्वचितिक्यो लोकंपृणा पुरीषं च २७ आपराह्णिक्यौ प्रवर्ग्योपसदावुपेत्य वसन्ति २८ ऊर्ध्वं पूर्वाह्णिकीभ्याम् १ असपत्नयोत्तमां चितिमारभन्त अग्ने जातान्प्रणुदा नः सपत्नानिति पुरस्तात्सहसा जातान्प्रणुदा नः सपत्नानिति पश्चाच्चतुश्चत्वारिँशी स्तोमो वर्चो द्रविणमिति दक्षिणतः सादयति षोडशी स्तोम ओजो द्रविणमित्युत्तरतोऽग्नेः पुरीषमसीति पुरीषवतीं पश्चात्स्वयमातृण्णायाः १ एकश्छन्द इति चत्वारिँशतँ विराजोऽप्ययेषु दशदश २ रश्मिना क्षयाय क्षयं जिन्वेति त्रयस्त्रिँशतँ स्तोमभागा दिक्षु । पूर्वार्धादुपक्रम्य प्रदक्षिणँ सप्तसप्त पञ्च मध्ये ३ रज्ञ्यसि प्राची दिगितिप्रभृतिभिः पञ्च नाकसदो लोकेषु ४ अयं पुरो हरिकेश इति नाकसदामुपरिष्टात्पञ्चचूडाः पश्चात्प्राचीमुत्तमाम् ५ प्राच्या त्वा दिशा सादयामीति क्लृप्तीरुपदधाति शिरसि पक्षपुछेषु मध्ये पञ्चमीम् ६ विहरन्नत्रैव रेतःसिचमुपदधाति ७ परमेष्ठी त्वा सादयत्विति विश्वज्योतिषम् ८ ऋतव्ये उपधाय पुरोवातेतिप्रभृतिभिः पञ्च वृष्टिसनीर्लोकेषु ९ सँयान्ये

उपधाय वाच उपदधात्यम्बा च बुला चेति सप्त पूर्वार्धे १० सलिलाय त्वेतिप्रभृतिभिरादित्येष्टका अप्ययेषु द्वेद्वे मध्ये च ११ अधिद्यौर्नामासीत्यपरां मण्डलाम् १२ उत्तरतः पुरस्तात्स्वयमातृण्णाया अयँ सो अग्निरित्यष्टौ नानायजुष उपदधाति यथा गार्हपत्ये १३ पूर्वां पुनश्चितिँ येन ऋषयस्तपसा सत्रमासतेति मवतासामष्टाभिः १४ समास्त्वाग्न ऋतवो वर्धयन्त्विति दश द्वेद्वे लोकेषु १५ ऊर्ध्वा अस्य समिधो भवन्तीति द्वादशाप्रीरप्ययेषु तिस्रस्तिस्रः १६ प्राणादपानँ संतन्विति नव संततीः पुरस्तात्प्रतीचीरुपदधाति १७ ऋचा त्वा छन्दसा सादयामीतिप्रभृतिभिरप्ययेषु द्वेद्वे १८ दूतँ वो विश्ववेदसमिति पञ्च लोकेषु १९ इन्द्रो दधीचो अस्थभिरिति दश पूर्वार्धे २० छन्दश्चिती-रुपदधात्यप्ययेषु तिस्रस्तिस्रोऽन्तराअन्तरा अयमग्निः सहस्रिण इति तिसृभि-र्गायत्रीभिरबोध्यग्निरिति त्रिष्टुब्भिर्जनस्य गोपा इति जगतीभिः संम् समि-दित्यनुष्टुब्भिरा ते अग्न इधीमहीति पङ्क्तिभिरेना वो अग्निमिति बृहतीभिरग्ने वाजस्य गोमत इत्युष्णिग्भिर्द्वे तिस्रः करोति भद्रो नो अग्निराहुतो भद्रा रातिः सुभग भद्रो अध्वरः । भद्रा उत प्रशस्तयः ॥ भद्रा उत प्रशस्तयो भद्रं मनः कृणुष्व वृत्रतूर्ये । येना समत्सु सासहि ॥ येना समत्सु सासह्यव स्थिरा तनुहि भूरि शर्धताम् । वनेमा ते अभिष्टिभिः ॥ इति ककुब्भिः प्रेद्धो अग्न इमो अग्ने अग्निं नरो दीधितिभिररण्योर्हस्तच्युती जनयन्त प्रशस्तम् । दूरेदृशं गृहपतिमथर्युम् ॥ इति विराड्भिरग्ने तमद्येति पदपङ्क्तिभिरग्निँ होतारं मन्य इति छन्दोभिरग्ने त्वं नो अन्तमस्तं त्वा शोचिष्ठ दीदिवोऽधा ह्यग्न इति द्विपदाभिरुत्तरार्धे २१ २

महाव्रतमुपदधात्यायाहि सषुमा हि त इति तिसृभिः गायत्रीभिः शिरसि । रथंतरं पक्षेऽभि त्वा शूर नोनुम इति द्वे तिस्रस्कारं दक्षिणार्धे मध्येऽप्यये च । बृहदुत्तरस्मिँस्त्वामिद्धि हवामह इति द्वे तिस्रस्कारमुत्तरार्धे मध्येऽप्यये चात्मनि वामदेव्यं कया नश्चित्र आभुवदिति तिस्रो मध्ये । यज्ञायज्ञियं पुछे यज्ञा यज्ञा वो अग्नय इति द्वे तिस्रस्कारं पश्चार्धे मध्येऽप्यये च १ यवा अयवा इति सप्त पूर्वार्धे २ पृथिव्यसि जन्मनेतिप्रभृतिभिरप्ययेषु द्वेद्वे ३ या देव्य-सीष्टके कुमार्युपशीवरीतिप्रभृतिभिरप्ययेषु तिस्रस्तिस्रो या देव्यसीष्टक

आयुर्दा इति नवस्वनुषजत्युपशीवरीत्युपरिष्टाद्या देवीः स्थेष्टकाः सुशेवा इति मध्ये युगपत्तिस्रः ४ सवयसे त्वेतिप्रभृतिभिरप्ययेषु तिस्रस्तिस्रः ५ भूयस्कृ-दसीतिप्रभृतिभिरप्ययेषु पञ्चापञ्चीनाः प्रदक्षिणं पञ्चपञ्चोपदधाति ६ ज्योतिष्मतीं त्वा सादयामीप्रभृतिभिरप्ययेषु तिस्रस्तिस्रो द्वे मध्ये ७ कृत्तिका नक्षत्र-मग्निर्देवतेतिप्रभृतिभिर्नक्षत्रेष्टकाः पुरस्तात्प्रतीचीरुपदधात्यग्ने रुचः स्थेति सर्व-त्रानुषजति । पुरस्ताद्विशाखयोः पूर्णा पश्चादुत पूर्णा पुरस्तादुन्मध्यतः पौर्ममासी जिगाय । यस्यां देवा अभि सँविशन्त उत्तमे नाक इह मादयध्वम् ॥ इति पौर्णमासीमु परिष्टाद्भरणीनाम् यत्ते देवा अदधुर्भागधेयममावास्ये सँविशन्तो महित्वा । सा नः प्रजां कृणुहि सर्ववीर रयिं नो धेहि सुभगे सुवीरे ॥ इत्य-मावास्याम् ८ हिरण्यगर्भ इतिप्रभृतिभिरप्ययेषु द्वेद्वे ९ स्वरसि स्वर्मे यछेति पूर्वा ँ हिरण्येष्टकामृषभमुपधाय लोकंपृणया चितिँ संपूरयति १० स्व-यमातृण्णाँ शर्करामश्वेनोपघ्राप्य स्वरित्यभिमन्त्रयते ११ आयोष्ट्वा सदने सादयामीति सयजुषं करोति १२ परमेष्ठी त्वा सादयत्विति पर्यायेणोपदधाति १३ नात्राविद्वान्न वरदानम् १४ अभिप्राण्यापान्य चितिं जुहोमीत्यदाभ्या-तृण्णेऽभिजुहोति १५ दिवमाक्रमिषमिति यजमानो जपति १६ वायव्यामुत्तराँ विकर्णी ँ शर्करां प्रतिप्रथाता प्रोथदश्वो न यवस इति मध्ये युगपत्स्व-यमातृण्णालोकस्योपदधाति १७ व्याख्यातँ सार्वचितिकम् १८ पुरीषेण चितिँ सँस्थापयत्यन्यत्स्वयमातृण्णायाः १९ जानुदघ्नं प्रथमं चिन्वानश्चि-न्वीतेति व्याख्यातम् २० ३

सौवर्णानाँ शकलानाँ सहस्रेण सहस्रस्य मासीतिप्रभृतिभिः सर्वमग्निं प्रोक्ष्य घृतेन प्रोक्षति वसवस्त्वा रुद्रः पश्चात्पान्त्विति पश्चात्प्राङ्मुखो नितानस्त्वा मारुतो मरुद्भिरुत्तरतः पात्वित्युत्तरतो दक्षिणामुख आदित्यास्त्वा विश्वैर्देवैः पुरस्तात्पान्त्विति पुरस्तात्प्रत्यङ्मुखः पितरस्त्वा यमराजानः पितृभिर्दक्षिणतः पान्त्विति दक्षिणत उदङ्मुखो देवास्त्वेन्द्रज्येष्ठा वरुणराजानोऽधस्ताच्चोपरिष्टाच्च पान्त्विति मध्ये प्राङ्मुखः १ प्रतिपरिक्रम्ये मा मे अग्ना इष्टका धेनवः सन्त्विति दुहेनोत्तरं पुछाप्ययं प्रत्यारस्य जपति यजमानः २ उत्तरस्याँ श्रोणावन्त्याया-मिष्टकायाँ शतरुद्रियं जुहोत्यर्कपर्णेनाजक्षीरं गवीधुकासक्तून्वा नमस्ते रुद्र

मन्यव इतिप्रभृतिभिर्जानुदघ्ने धारयमाणो दक्षिणामुखो नमो बृहद्भ्योऽर्भकेभ्य इति नाभिदघ्न उदङ्मुखो नमो वास्तव्यायेत्यास्यदघ्ने प्राङ्मुखः ३ प्रत्यवरोहाञ्जुहोति नमो अस्तु रुद्रेभ्यो ये दिवीत्यास्यादघ्न उत्तरेण पर्यायेण नाभिदघ्न उत्तमेन जानुदघ्ने ४ अर्कपर्णमसंचरे न्यस्येद्यं द्विष्यात्तस्य पशूनाँ संचरे न्यस्येत् ५ यो रुद्रोऽप्सु यो ऽग्नौ य ओषधीषु । यो रुद्रो विश्वा भुवनाविवेश तस्मै रुद्राय नमोऽस्तु देवाय ॥ स्वाहेति तस्यामिष्टकायां गावीधुकं चरुमुपवपति ६ आयुधं तिसृधन्वमयाचितो ब्राह्मणाय दद्यात् ७ अश्मन्नूर्जं पर्वते शिश्रिया- णामित्युदकुम्भेनाग्निं प्रसव्यं त्रिः परिषिञ्चन्पर्येति । निधाय त्रिरपरिषि- ञ्चन्प्रतिपर्येति ८ आग्नेयपावमान्याँ शिरसि गायत्रं गायोद्गाता रथन्तरं दक्षिणे पक्षे बृहदुत्तरस्मिन्नात्मनि वामदेव्यँ यज्ञायज्ञियं पुछे प्रजापतेर्हृदयमनृचं दक्षिणस्मिन्निकक्षे स्तुतँ होतानुशँसति ९ परिगीतं नाक्रामेदा स्वयमातृण्णाया व्याघारणात् १० मण्डूकेनावकया वेतसशाखया

च " समुद्रस्य त्वावकया " हिमस्य त्वा जरायुणेतिप्रभृतिभिः सप्तभिः सर्वमग्निं विकर्षति । ११ । विनीय प्राणान्मण्डूकस्य विकर्षणमुत्करे प्रविध्यति । यं द्विष्यात्तमेतेनोपहन्यात् । १२ ।। इष्टो यज्ञो भृगुभिरिति छन्दमां दोहँ यजमानँ वाचयति । १३ । औदुम्बरीर्घृते वासयति । १४ । आपराह्णिक्यौ प्रवर्ग्योपसदावुपेत्य वमन्ति । १५ । ऊर्ध्वं पूर्वाह्णिकीभ्यां कृष्णाजिनस्योपानहं प्रतिमुच्याँपामिदं न्ययनं " नमस्ते हरसे शोचिष इति द्वाभ्यामग्निमाक्रामति । १६ । पञ्चगृहीत आज्ये हिरण्यशकलमेकैकमवधाय " द्रुषदे वडितिप्रभृतिभिः स्वयमातृण्णां व्याघारयति यथा नाभिम् । १७ ।। स्वर्विदे वडित्यूर्ध्वां स्रुचमुद्गृह्णाति । १८ । दधिनि मधुमिश्रे दर्भमुष्टिं पर्यासमँन्नपते अन्नस्य नो देहीति तिसृभिः सर्वमग्निं व्यवोक्षति । १९ ।। प्राणदा अपानदा इति प्रत्यवरोहति । २० । आपराह्णिकीं मद्यः सँस्थाप्योत्साद्य घर्मपात्राण्यग्नीषोमीयायौपसदं बर्हिस्तद्व्याख्यातम् । २१ । ।।४।।

" अग्निस्तिग्मेन शोचिषेति चतुर्गृहीतं जुहोति । १ । तूष्णीं षोडशगृहीतं गृहीत्वा " य इमा विश्वा भुवनानीत्यष्टौ निगद्यार्धं जुहोत्युत्तरमनुवाकं निगद्य शेषम् । २ । औदुम्बरीर्घृतेनोपितास्तिस्रः समिध " उदेनमुत्तरं नयेति तिसृभिः स्वाहाकारान्ताभिरादधाति । ३ । व्याख्यातमग्निप्रणयनम् । ४ ।। उदु त्वा विश्वे देवा इत्यग्निमादत्ते । ५ ।। पञ्च दिशो दैवीर्यज्ञमवन्तु देवीरित्युत्तरतः पृष्ठ्यादेशस्य षड्भिराग्नीध्रायन्ति । ६ । प्रणीयमानस्योत्तरतो यजमानो व्रजति ' दक्षिणतो ब्रह्माँशुः शिशान इत्यप्रतिरथं दशर्चमन्वाह । ७ ।। विमान एष दिवो मध्य आस्त इति द्वाभ्यामुपदधात्याग्नीध्रीये ऽश्मानमुपधानवेलायाम् । ८ ।। सुम्नहूर्यज्ञ आ च वक्षादिति चतुर्भिराहवनीयाद्यन्ति । ९ ।। क्रमध्वमग्निनेति पञ्चभिरग्निमाक्रामति । १० । कृष्णायाः श्वेतवत्सायाः पयसः पूर्णामौदुम्बरीं " नक्तोषासाँग्ने सहस्राक्षेति निगद्य स्वयमातृण्णामभिजुहोति । ११ । तस्यां संभारान्हिरण्यशकलं च न्युप्य " सुपर्णो ऽसि गरुत्मान्पृष्ठे पृथिव्याः सीद " आजुह्वानः सुप्रतीक इति द्वाभ्यामग्निं सादयित्वा ' समिध्य समिध आदधाति " तां सवितुर्वरेण्यस्येति शमीमयीं " विधेम ते परमे जन्मन्नग्न इत्याश्वत्थीं ' प्रेद्धो अग्न इति वैकङ्कतीम् । १२ ।। अग्ने तमद्येति पङ्क्त्या जुहोति " सप्त ते अग्ने समिध इति पूर्णाहुतिं " चितिं जुहोमीत्यनुवाकशेषेण द्वितीयाम् । १३ । अग्नये वैश्वानराय द्वादशकपालं निर्वपेत् । १४ । स्रुवं जुहूं च संमृज्याभ्युदाहरति वैश्वानरीयम् । १५ ।

---

13) cf. MS.I.4.5:53.13, 14; II. 12.3:147.3, 4.
17) C2 °मवधायं; S M2 वेडिति° N वे इति°; cf.6.1.7.5.
18) M2 वेडि°; cf.1.7.3.32.
19) C2 पर्यामात्रपते N S M2 पर्यामन्नन्नपते.
20) mss. °रोहयत्या°.
21) cf.2.2.2.1, 2.
**5** Cf. MS.II.10.2-12.3; III.3.7-4.3; Āp.Śr.17.13-20.
3) cf.6.2.4.14.
4) 2.2.2.4; 1.7.3 29-45.
8) cf. ŚBr.9.2.3.15.
12) सीद आजु° thus the mss. C2; समिध्य.
13) cf.6.2.2.21.
14-26) निर्वपेत् unto °श्चायुर्यं° not C2.
15) S जुब्.

सकृत्सर्वमवद्यति । १६ । आशयस्यान्वासिच्य द्विरभिघार्योपाँश्वग्नये वैश्वानरायानुब्रूहीत्यनुवाचयति । १७ । आश्राव्याँग्निँ वैश्नानरँ यजेति प्रेष्यति । १८ । वषट्कृते मध्ये पाणिना जुहोति । १९ । ऋजुं प्रतिष्ठितमाशयेनाभिजुहोति । २० । यदि पर्यावर्तेत ब्राह्मणव्याख्यातम् । २१ । पुरोडाशान्सप्त सप्तकपालान्तूष्णीमुपचरितान्सँस्करोति । २२ । उपस्तरणाभिघारणैः संपातं मारुतैर्गणैर्जुहोति '' शुक्रज्योतिश्च चित्रज्योतिश्चेतिप्रभृतिभिर्दक्षिणार्धे पूर्वार्धे '' ऋतजिच्च सत्यजिच्चेति दक्षिणार्धे '' ऋतश्च सत्यश्चेति दक्षिणार्धे पश्चार्धे '' ऽरण्ये ऽधीतेन गणेन पश्चार्धे '' ईदृङ्चैतादृङ्चेत्युत्तरार्धे पश्चार्धे '' ईदृक्षास एतादृक्षास इत्युत्तरार्धे '' सभरसो मरुतो यज्ञ इत्युत्तरार्धे पूर्वार्धे । २३ । वसोर्धारायै स्रुचमौदुम्बरीं महतीँ स्योनदण्डां कारयेद्यथा वैश्वानरीये धारा प्रतिष्ठास्यति तथावस्थापयेत् । २४ । तूष्णीं द्वादशानि गृहीत्वान्वारब्धे यजमाने वाचयँन्वाजश्च मे प्रसवश्च म इतिप्रभृतिभिः पञ्चभिरनुवाकैः संततँ वसोर्धारां जुहोति । २५ ॥ एका च तिस्रश्चेत्याँ त्रयस्त्रिँशतश्चतस्रश्चाष्टौ चेत्याँष्टाचत्वारिँशतस्त्र्यविश्च त्र्यवी चेति यथाम्नातं '' धेनुश्चानड्वाँश्चाँयुर्यज्ञेन कल्पते '' प्राणो यज्ञेन कल्पत इतिप्रभृतिभिः '' पतये ऽधिपतय इत्यन्तेन '' स्तोमश्च यजुश्चेति यथाम्नातमंन्ततः स्वाहाकारं कुर्यात् । २६ । स्रुचमनुप्रहृत्याज्यात्शेषे चतुःशरावं जीवतण्डुलमोदनं पक्त्वा मध्यतःकारिभ्यो दद्यात्ते'भ्यश्चतस्रश्चतस्रो धेनूः । २७ । ओषधीरारण्या ग्राम्याश्च सर्पिषा सँसृज्य वाजप्रसव्यमौदुम्बरेण स्रुवेण जुहोत्याँग्ने अच्छा वदेह न इत्यष्टाभि'र्विश्वे नो अद्य मरुत इति षड्भिः । २८ । हुत्वाहुत्वा पात्र्याँ संपातमवनयति । २९ । दक्षिणस्याः श्रोणेः पश्चादग्निपुच्छस्य वासन्द्यां कृष्णाजिनमास्तीर्य ' बस्ताजिनं पशुकामस्य ' तस्यामासीनं '' देवस्य त्वा सवितुः प्रसव इति संपातेनाभिषिञ्चति । ३० । शिरसो ऽध्या मुखादवस्रावयति '' बृहस्पतिँ साम्राज्यायेति ब्राह्मणँमिन्द्रँ साम्राज्यायेति राजन्यमँग्निँ साम्राज्यायेति वैश्यं । न वाभिषिञ्चेद्वैश्यम् । ३१ । द्वादशगृहीतेन द्वादश राष्ट्रभृतो जुहोत्यृताषाडृतधामेतिप्रभृतयः पर्याया'स्तेषामेकैकेन पर्यायेणाहुती द्वेद्वे '' तस्मै स्वाहा वडिति पूर्वां '' ताभ्यः स्वाहा वडित्युत्तराँ '' स न इदं ब्रह्म क्षत्रं पात्विति सर्वत्रानुषजति '' ता ना इदं ब्रह्म क्षत्रं पान्त्विति च ॥ बृहस्पतिर्विश्वकर्मेति द्वादशो ब्राह्मणस्य '' प्रजापतिः परमेष्ठीति राजन्यस्याँमृडयो दूरेहेतिरिति वैश्यस्य । ३२ । द्विर्गृहीतेन '' स नो भुवनस्य पत इति रथशिरस्यध्याहवनीये हुत्वा तमध्वर्यवे दक्षिणाकाले दद्यात् । ३३ ॥ समुद्रो ऽसि नभस्वानार्द्रदानुरितिप्रभृतिभिरञ्जलिना त्रिर्वार्तं जुहोति कृष्णाजिनपुटेन वा । ३४ । ॥५॥

---

16-18) cf.1.3.2.12-15.

17) S N °त्यासयस्या° M2 °त्याशयस्या°.

19-21) cf.1.6.4.19,20.

22) M2 सप्त once.

24) M2 स्योनादंडान्का° N S स्योनादंडांन्का°.

26) cf. MS I.11.3:163.13-164.2.

27) C2 °त्षशेषे N °त्सेषे S °त्सैष M2 °त्स; r. ज्योच्छेषे ?; M2 तेभ्यश्चतस्रो.

28-31) MS.I.11.4.

31) the last formula not in MS.

32) च not S M2.

पदलोभनप्रभृति सिद्धमा धिष्ण्यनिवपनात् । १ । वैहृतीभिर्धिष्ण्येषूपदधात्यश्मनवमा आग्नीध्र ' एकविँशतिँ होत्र्य ' एकादश ब्राह्मणाछँस्ये ' ऽष्टाष्टा इतरेषु ' षण्मार्जालीये पशुश्रपणे च । २। सिद्धमाग्नीषोमीयात् । ३ । अग्नये गायत्राय त्रिवृते राथन्तरायेति दशहविषँ सर्वपृष्ठामग्नीषोमीयस्य पशुपुरोडाशमनुनिर्वपति । ४ । यथा देविकाहविर्भिस्तथा प्रचरति । ५ । सिद्ध उपवसथः । ६ । श्वोभूते ऽग्निष्टोम उक्थ्यो ऽतिरात्रो वा । ७ । सिद्धमा परिधीनां परिधानात् । ८ । आघारसमिधमाधाया"ग्निँ युनज्मि शवसा घृतेनेत्यग्नियोगं जुहोति । ९ ।। इमौ ते पक्षावि"न्दुर्दक्ष इति पक्षावभिमृशति । १० ।। स्वयं कृण्वान इति पञ्चभिरन्वारोहाञ्जुहोति । ११ । सिद्धमोपाकरणात् । १२ । एकयूप एकादशिनानुपाकरोति क्रतुपशून्वा । १३ । सिद्धमा दक्षिणाकालात् । १४ । सौवर्णँ शतमानँ स्थालं मधुनः पूर्णं दक्षिणाभिः सहातिहृत्य " चित्रं देवानामिति यजमानो ऽवेक्ष्य ब्रह्मणे प्रयछति । १५ । सिद्धमाग्निष्टोमचमसेभ्यः । १६ । अग्निष्टोमचमसानुन्नीय " दिवो मूर्धासीत्यप्सुमतीभ्यामग्निँ संमृशति । १७ । सिद्धमा शँयोर्वाकात् । १८ ।। वि ते मुञ्चामि रशनाँ वि रश्मीनिति परिधिविमोकं जपति । १९ । शँय्वन्ते सँस्थिते

इमँ स्तनं मधुमन्तं धयापाँ प्रपीनमग्ने सलिलस्य मध्ये ।
उत्सं जुषस्व मधुमन्तमूर्मिँ समुद्रियँ सलिलमा विशस्व ।।

इत्यग्निविमोकं जपति । २० । सिद्धमानूबन्ध्यायाः । २१ । प्राक्समिष्टयजुर्भ्यो " यास्ते अग्ने सूर्ये रुचो " या वो देवाः सूर्ये रुचो " रुचं नो धेहीति स्रुचं जुहोति । २२ ।। तत्त्वा यामीति वारुण्या प्राग्वेदिपर्योपणाद्दधिघृते सँसृज्य " समीची नामासीति पर्यायैरभिजुहोति प्रतिदिशं द्वाभ्यां मध्ये । २३ । सँस्थाप्योदवसानीयां " दीक्षया त्वापं तपसा त्वापँ सुत्यया त्वापमवभृथेन त्वापँ वशया त्वापमिति प्रयास्यन्नाप्तिभिरैष्टकमग्निमुपतिष्ठते । २४ । अग्निचित्सँवत्सरं न प्रत्यवरोहेन्न प्रत्युत्तिष्ठेद्यावज्जीवँ वर्षति न धावेत्पक्षिणः शिरसो नाश्नीयान्न रामामुपेयाद्द्वितीयं चित्वा नान्यस्य भार्यां ' तृतीयं चित्वा न

---

6 Cf. MS.II.12.3-4; III.4.4, 5, 7, 8; Āp.Śr.17.20-25.
1) C2 धिष्णि° N S M2 धिष्ण्या°; 2.2.2.5-4.3.
2) mss. °नवमाग्नीध्र; N S M2 °शति होत्र्या; 2.2.4.4; 2.3.6.13 होत्रीय°; C2 °णाश्शि ॥ सिने N S °णान्शँसिने M2 °णान्सँशिने; cf.10.2.2.10; वैहृतीभिर् cf.1.4.1.17.
3) 2.2.5.5, 19.
4) MS.III.15.10.
5) cf.2.5.5.11-15.
6) 2.2.5.19-35.
7) mss. अग्नि°.
8) 1.2.6-8, i.e. 2.3.1.11.
11) cf. MS.II.13.22; III.5.5; Āp.Śr.17.13.1, 2.
12) 2.3.6.15.
13) cf.5.2.12.46.
14) 2.3.6.16-2.4.5.1.
16) 2.4.6.1-2.5.2.17.
18) 2.5.2.18-5.3, cf.2.1.3.27; 1.4.2.19.
19) N S M2 परिवि°; cf.1.4.2.20.
20) N S M2 प्रपीतम°.
21) 2.5.5.5.
22) cf.2.5.4.16; 6.1.7.15.
23) cf.2.5.5.18, MS.II.13.21.
24) N S M2 °सानीयं; C2 प्रवसंत्रापुभिरे° S प्रयास्यनिताभिर° N प्रयस्यन्नामीभिरै° M2 प्रयत्नाधिभिरै°; 2.5.5.24-27; KS.22.8:65.1-4.

कांचन । यद्युपेयान्मैत्रावरुण्यामिक्षया यजेत । २५ ।

ये अग्नयः पुरीषिण आविष्टाः पृथिवीमनु ।

तेषामसि त्वमुत्तमः प्र नो जीवातवे सुव ।।

इति प्रवासादेत्यैष्टकमग्निमुपतिष्ठत " उप त्वाग्ने दिवे दिव इति तृचेनान्येषाम् । २६ । अग्निं चित्वैष्टिक्या सौत्रामण्या यजेत । २७ । पुनश्चितिस्तिस्रश्चितयः । २८ ।। येन ऋषयस्तपसा सत्रमासतेत्यष्टौ नानायजुष उपाधायाष्टौ लोकंपृणाः पुरीषेण चितिँ संछादयत्येकादश द्वितीयस्यां ' द्वादश तृतीयस्याम् । २९ । सोमेन यजमान ऋद्धिकामः पुरा चिते पुनश्चितिं चिन्वीत ' चित्वा वा व्याघारमाणो व्याघारितायामुत्तरवेदौ । ३० । येष्वग्निर्न संभवेत्तेषु पुनश्चितिमयँ सो अग्निरित्यष्टौ नानायजुषस्त्रयोदश लोकंपृणास्ता एकविँशतिः । ३१ ।। अयं ते योनिर्ऋत्विय इत्यग्निं निदधाति निदधाति । ३२ ।   ।।६।।

**।। इति चयने द्वितीयो ऽध्यायः ।।**

**।। इति मानवसूत्रे चयनकल्पः समाप्तः ।।**

---

26) N S M2 इत्यृचे°.
27) cf.5.2.4.1.
28) cf. KS.22.2:58.14.
28-29) cf.10.1.4.7, 8.
29) N S M2 येना; cf.6.2.2.14.
30) यजमान not N S M2; N S M2 °व्याघारितामु°; cf.6.2.4.17.
31) mss. °पृणा: सा एकविँशत्य°; cf. 6.2.2.13.

शरदि वाजपेयेन यजेत स्वाराज्यकामो ब्राह्मणो राजन्यो वा । १ । सप्तदश दीक्षास्तिस्र उपसदः । २ । सुराँ संधापयेत्परिश्रिते । ३ । सिद्धमा खरकरणात् । ४ । दक्षिणस्य हविर्धानस्य पश्चादक्षं प्रतिप्रस्थाता द्वितीयं खरं करोति समुत्खातमनाहार्यं पुरीषम् । ५ । सिद्धमा तक्षणात् । ६ । खादिरश्चतुरस्रः सप्तदशारत्निर्यूपो गोधूमपिष्टानां चषालम् । ७ । नोर्ध्वं चषालादतिरेचयति । ८ । सिद्धमा रशनाकालात् । ९ । रशनां परिवीय सप्तदशभिर्वासोभिर्यूपँ वेष्टयति । १० । सिद्ध उपवसथः । ११ । श्वोभूते सप्तदशो वाजपेयः षोडशिमान् रथन्तरपृष्ठः । १२ ॥ देव सवितः प्रसुव यज्ञं प्रसुव यज्ञपतिं भगायेति सवनादिषु जुहोति । १३ । सिद्धमा पात्रप्रयोजनात् । १४ । आग्रायणस्थालीं प्रयुज्य पञ्चैन्द्राण्यतिग्राह्यपात्राणि प्रयुनक्ति । १५ । दक्षिणस्मिन्नँसे सप्तदश प्रजापतिपात्राणि वायव्यानि प्रयुनक्ति । १६ । सध्रुवाणि प्रयुज्यापरस्मिन्खरे प्रतिप्रस्थाता सप्तदश मार्त्तिकानुपयामान्वालद्रोणं च । १७ । सिद्धमा सवनीयकलशानाँ सादनात् । १८ । सुराकलशं प्रतिप्रस्थातोत्करदेश आग्नीध्रस्य मूर्धनि सादयित्वापरया द्वारा प्रपाद्य स्वस्मिन्खरे सादयति । १९ । निग्राभ्यासु यजमानँ वाचयित्वा दधिग्रहपात्रे होतृचमसाददाभ्यं गृह्णात्यँग्निः प्रातः सवनादिति तृतीयग्रहँ " विश्वे देवा मरुत इति द्विभाग"मिदं तृतीयँ सवनमिति संपूरयति । २० ॥ अग्नये त्वा प्रवृहामीति प्रभृतिभिरेकैकेन पर्यायेण द्वौद्वावँशू प्रवृहति । २१ । तानेकधा संगृह्य "' रेशीनां त्वा पत्मन्नाधूनोमीति प्रभृतिभिर्द्वाभ्यांद्वाभ्यां मन्त्राभ्याँ सकृत्सकृद्ग्रहमाधूनोति । २२ ॥ उपयामगृहीतो ऽसि शुक्रं त्वा शुक्र शुक्राय गृह्णामीत्यभिमृशति । २३ । असन्नो हूयते । २४ । उत्तरेण होतुर्गच्छति । २५ । दक्षिणेनाभिप्रयम्य ग्रहं दक्षिणं परिधिसंधिं प्रत्यवस्थाय " ककुभँ रूपँ वृषभस्य रोचत इति जुहोति । २६ । प्रतिपरिक्रम्य यथास्थानं पात्रँ सादयति । २७ ॥ उशिक्त्वं देव सोमेति प्रभृतिभिरेकैकेन पर्यायेण द्वौद्वावँशू प्रत्यवसृजति । २८ । दक्षिणा ददाति वासो ऽधीवासो हिरण्यं धेनूश्चतस्रो ऽष्टौ द्वादश वाँश्वदाभ्ययोः । २९ । उपाँशुसवनादानप्रभृति सिद्धमाधिषवणफलकयोरभिमन्त्रणात् । ३० । भूतिकामस्याँशुं गृह्णीयात् । ३१ । उपसर्जनप्रभृति न व्यवानेदा होमात् । ३२ । यदि व्यवानेत

---

1 Cf. MS.I.11.1, 4-6; Āp.Śr.18.1, 2.
4) 2.2.3.4.
6) 1.8.1.9.
9) 1.8.2.23.
10) M2 B2 N S परिचीय.
11) 2.2.5.19-35.
12) C2 °मानरथंतर° (cf. MS.I.11.9: 171.3-6).
14) 2.3.1.14.
15) M2 B2 N S °ग्रयण°; C2 °त्राणि वायव्यानि.
17) C2 प्रयुवक्त्य°; M2 वालुप्तोणं.
18) 2.3.1.19.
19) cf.5.2.4.14; Baudh.Śr.11.3: 66.13.
20-38) cf.MS.I.3.36; IV.7.7; Āp.Śr.12.7.17-8.14.
20) 2.4.6.26; 2.5.4.17; cf. KS.30.6:188.3-6.
21) thus six; Āp.Sr., Baudh.Śr. three.
22) मंत्राभ्यां not M2 B2 N S.
24-27) 2.3.2.30-34.
29) M2 B2 N S धिवासो, °भ्योयोरु° C2 °भ्याद्व°.
30) 2.3.3.1-9.
33) mss. अधिमृतमिति (M2 °मति); cf.TS.3.3.3.3.

आ नः प्राण एतु परावत आन्तरिक्षाद्दिवस्परि ।
आयुः पृथिव्या अध्यमृतमसि प्राणाय त्वा ॥

इति हिरण्यमभिव्यानयति । ३३ । होतृचमसात्सकृदुपसृज्य सकृदभिषुणोति । ३४ ॥ कया नश्चित्र आभुवदित्येतां मनसानुद्रुत्य दधिग्रहपात्रे ऽञ्जलिना सकृदानयति । ३५ ॥ दधन्वे वा यदीमन्विति जुहोति । ३६ ।

इन्द्राग्नी मे वर्चः कृणुतां वर्चः सोमो बृहस्पतिः ।
वर्चो मे विश्वे देवा वर्चो मे धत्तमश्विना ॥

इत्यप उपस्पृशति । ३७ । अँश्वदाभ्यौ गृह्णीते सहस्रदक्षिणे सर्ववेदसदक्षिणे सत्रे विश्वजिति सर्वपृष्ठे वाजपेये राजसूये ऽश्वमेधे च । ३८ । उपाँश्वभिषवप्रभृति सिद्धमा मन्थिनो ग्रहणात् । ३९ । अन्तरुक्थ्य आग्रायणं गृहीत्वो"पयामगृहीतो ऽसि द्रुषदं त्वेति प्रभृतिभिः पञ्चैन्द्रानतिग्राह्यान्गृह्णाति । ४० । सध्रुवान्गृहीत्वा न शुक्रधारां समतिपावयेत् । ४१ । द्रोणे वालं वितत्य प्रतिप्रस्थाता " पुनातु ते परिस्रुतमिति सुरामतिपावयति । ४२ ॥ कुविदङ्ग यवमन्त इति शुक्रधारयाध्वर्युः सप्तदश प्राजापत्यान्ग्रहान्गृह्णात्य"या विष्ठेति प्रतिप्रस्थातोपयामेषु सुराग्रहान् । ४३ । व्यत्यासं प्राजापत्यानां ग्रहणं सादनं च । ४४ । ॥१॥

सिद्धमा रशनाकालात् । १ । रशनां परिवीय पशूनुपाकरोत्याग्नेयमजमैन्द्राग्नमजमैन्द्रं वृष्णिं सारस्वतीं मेषीं मारुतीं पृश्निं वशां सारस्वत्यौ मेष्यौ सप्तदश प्राजापत्यानजाञ्श्यामाँस्तूपरानेकरूपान् । २ । यथाम्नातं वपाभिश्चरन्ति । ३ । सिद्धमा माध्यंदिनीयानां निर्वपनात् । ४ । माध्यंदिनीयान्निरुप्य नैवारं निर्वपति बार्हस्पत्यं सप्तदशशरावम् । ५ । सिद्धमाधिश्रयणात् । ६ । माध्यंदिनीयानधिश्रित्य नैवारं पयसि श्रपयति । ७ । सिद्धमा प्रचरणात् । ८ । माध्यंदिनीयैः प्रचर्य नैवारेण प्रचरति " बृहस्पतये ऽनुब्रूहि " बृहस्पतिं यजेत्युपांशुदेवतेन । ९ । समानं स्विष्टकृत्समानामिडां हृत्वा नैवारं चात्वाले ऽवदधाति । १० । सिद्धमा दक्षिणाकालात् । ११ । षोडशर्त्विजो हिरण्यस्रज आबध्नीते । १२ ॥

35-36) MS.II.13.9:159.4, 5; 5: 154.4, 5.

37) cf. TS.3.3.3.3.

38) cf. ŚBr.4.6.1.15.

39) C2 °पांशुरभि° B2 N S °पाँश्चोरभि° M2 °पाँश्चोतरभि°; 2.3.3.11-2.3.5.8.

40) M2 B2 N S °ग्रयणं; mss. °द्राग्य° for °द्रान°.

40-41) cf. 2.3.5.10-14.

41) M2 B2 N S begin: °त्युक्थं गृह्णाति C2: °त्युर्वत· C2 सध्रुवां M2 B2 S N सध्रुवं; M2 B2 S N नाशुक्रधां.

42) cf. 5.2.4.18.

2 Cf. MS.I.11.1, 2, 7, 9, 10; Āp. Śr.18.2-6.

1) 2.3.6.15.

2) C2 °सूपरानेक° S °क्रुषरानेक° N °स्क्रुषरानेक° M2 B2 °स्क्रुषराजेक°.

3) 1.8.4.8-39.

4) 2.4.2.21.

5-6) not M2.

6) cf. 2.3.2.5; 1.2.3.20.

8) 2.4.4.23.

9) cf. Baudh.Śr.11.7:74.2.

10) C2 °त्समानीयैडोध्रित्य N S °त्समानानी [N मी] डोधृ M2 B2 °त्समानी-[B2 ना] नीडाधृ.

11) 2.4.5.1

12) M2 B2 N S आबंधने.

वाजस्य नु प्रसवे मातरं महीमिति रथमुपावहरति दक्षिणतः प्राग्वँशस्याहितम् । १३ ।। अप्स्वन्तरमृतमप्सु भेषजमित्यश्वान्स्नपयन्ति '' वायुर्वा त्वा मनुर्वा त्वेति युनक्ति । १४ ।। अपाँ नपादाशुहेमन्निति रराटानि प्रतिमार्ष्टि । १५ । तूष्णीं षोडश रथा युज्यन्ते । १६ । दाक्षिणौ होमौ हुत्वा सप्तदश सप्तदशानि ददाति सप्तदश निष्कान्सप्तदश दासीः सप्तदश हस्तिनः सप्तदश गवाँ शतानि सप्तदशावीनाँ सप्तदशा-जानाँ सप्तदश रथान्सप्तदशारोहणानि । १७ । सप्तदश सप्तदशानि पुष्कलैः पूरयित्वा यजुर्युक्त-मध्वर्यवे ददाति । १८ । गा अग्रतो नयन्ति ' मध्यत इतराणि ' पश्चाद्रथान् । १९ । नीतासु दक्षिणासु चात्वालान्ते यजुर्युक्तो ऽवतिष्ठत ' उत्तरत आग्नीध्रस्येतरे । २० । माहेन्द्रकाले शिल्पानि व्यायातयन्ति । २१ । दिक्षु दुन्दुभयो वदन्ति । २२ । उत्तरतश्चात्वालस्य रथाक्षं निघ्नन्ति । २३ । तस्मिन्रथचक्रं प्रतिमुञ्चत्यौदुम्बरँ सप्तदशारम् । २४ । सप्तदशोषपुटानश्वत्थपर्णेषूपनद्धाँश्चतुर्षु वँशेषूपनह्यति चतु-रश्चतुरः ' पञ्चैकस्मिन् । २५ ।। देवस्य सवितुः प्रसवे सत्यसवसो वर्षिष्ठं नाकँ रुहेयमिति ब्रह्मा रथचक्रमारुह्य प्रदक्षिणं त्रिरावध्यति । २६ ।। वाजिनाँ साम गायेति प्रेष्यति । २७ । उज्जितीर्यजमानँ वाचयत्य"ग्निरेकाक्षरामुदजयदिति त्रीन्पर्यायान"ग्नय एकाक्षराय छन्दसे स्वाहेति सप्तदशाहुतीर्जुहोति । २८ ।। विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि विष्णोर्विक्रमणमसीति यजमानँ यजुर्युक्ताय प्रक्रमयति । २९ ।

अङ्कौ न्यङ्कावभितो रथँ ये ध्वान्ता वाताग्निमभिसंचरन्ति ।
दूरेहेतिः पतत्री वाजिनीवाँस्ते नो ऽग्नयः पप्रयः पालयन्तु ।।

इति चक्रे ऽभिमन्त्रयते '' वनस्पते वीड्वङ्ग इत्यधिष्ठानम् । ३० ।। देवस्य वयँ सवितुः प्रसवे सत्यसव-नस्य बृहस्पतेर्वाजिनो वाजजितो वाजं जेष्मेति रथमारोहति । ३१ ।। वाजँ वाजिनो जयतेत्यनुवाकं निगद्यावरोहति । ३२ । अवरूढे प्रतिहितो राजपुत्र आरोहति । ३३ ।। अश्वाजिनि वाजिनि वाजेषु वाजिनीवतीत्यश्वाजिनीमादत्ते । ३४ ।। अर्वासि सप्तिरसीत्यश्वानधिक्षिपति । ३५ । विश इतरानारोहन्ति । ३६ । उत्तरतश्चात्वालस्य सप्तदशस्विषुप्रत्यासेष्वौदुम्बरी" स्थूणां निघ्नन्ति । ३७ । तां '' काष्ठेत्याचक्षते । ३८ । तां प्रदक्षिणं कृत्वा प्रत्यायन्ति । ३९ । ।।२।।

---

13) M2 B2 S N °पावरोहति.

17) C2 adds सप्तदश मालां; mss. रथाः.

21) 2.4.6.17; M2 B2 N S व्यापार-यंति, cf.7.2.7.1.

22) C2 दीक्षुभ M2 B2 S N दीक्षित; cf.7.2.7.9; Baudh.Śr.11.2:66.2-4; 11.12:81.1-2.

26-28) रुहेयमि° unto °र्यजमानँ not M2 B2 S N.

26) cf. Āp.Śr. a.o. आवर्तयति.

27) C2 वाजियाम गायत्रि C4 वाजिम्नाम गायेति.

28) mss. °न्पर्यायाग्नय.

29) cf. 7.1.3.17; ŚBr.5.4.2.6.

30) cf. TS.1.7.7.2; MS.III.16.3: 186.7, 8.

33) M2 प्रहितो C2 प्रतिहतो, cf.7.1.3.33; Āp.Śr.18.3.14.

34) cf. TS.1.7.8.1; वाजेषु not in the mss.

35) MS.III.12.4:161.10.

38-39) cf. Baudh.Śr.11.7:76.4-7.

माहेन्द्रं गृहीत्वा स्तोत्रमुपाकरोति । १ । पत्नी दर्भमयँ वासः परिधत्ते ' तार्प्यँ यजमानः क्षौमँ सर्पिषि पर्यस्तमभ्यञ्जने वा । २ । यूपमारोक्ष्यन्यजमानः " स्वो रोहावेहीति पत्नीमामन्त्रयते " स्वो रोहावेति प्रत्याह । ३ ॥ अहं नावुभयोः स्वो रोक्ष्यामीत्युक्त्वा युयंज्ञेन कल्पते प्राणो यज्ञेन कल्पत इति सृगयारोहति । ४ ॥ स्वर्देवा अगामेत्यारुह्य जपति यजमानः । ५ ॥ वाजाय स्वाहा प्रसवाय स्वाहेति त्रयोदशाहुतीर्जुहोति । ६ । विश उपतल्पेषु तिष्ठन्तो " ऽन्नाय त्वा वाजाय त्वा वाजजित्यायै त्वेत्यूषपुटैराघ्नते । ७ । तंतमभिपर्यावर्तते । ८ ॥ आ मा वाजस्य प्रसवो जगम्यादिति रथेषु पुनरासृतेषु जुहोति । ९ ॥ इन्द्राय वाचँ वदतेति दुन्दुभीन्वदतो ऽनुमन्त्रयते । १० ॥ अजीजपत वनस्पतय इन्द्राय वाचँ विमुच्यध्वमिति रथविमोचनीयं जुहोति । ११ । आजिसृद्भ्यः कृष्णलमेकैकं प्रयछति । १२ ॥ वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागमवजिघ्रतमिति यजुर्युक्तस्य धुर्यौ नैवारमुपघ्रापयति। १३ ॥ वाजिनौ वाजजितौ वाजं जित्वा बृहस्पतेर्भागे निमृज्येथामिति पृष्ठ्चयोर्मुखयोर्जैयं निमार्ष्टि । १४ ॥ यन्त्री राड्यन्त्र्यसि यमनी धर्त्र्यसि धरुणा कृष्यै त्वा क्षेमाय त्वेत्यवरोहति । १५ ॥ तेजो ऽसीति हिरण्यमभ्यवरोहते " पुष्टिरसीति बस्ताजिनम् । १६ ॥ सम्राडसीत्यासन्द्यां कृष्णाजिनमास्तीर्य ' बस्ताजिनं पशुकामस्य " विष्णोः क्रान्तमसि विष्णोर्विक्रान्तमसि विष्णोर्विक्रमणमसीति यजमानमासन्दीं प्रक्रमयति । १७ ॥ दिवं प्रोष्ठनीमारोह तामारुह्य प्रपश्यैकराण्मनुष्याणां " कृष्यै क्षेमाय रय्यै पोषाय त्वेत्यासन्दीमारोहन्तमनुमन्त्रयते । १८ । ओषधीरारण्या ग्राम्याश्च सर्पिषा सँसृज्य वाजप्रसव्यमौदुम्बरेण स्रुवेण जुहोत्यग्ने अछा वदेह न इति सप्तभिः । १९ । व्याख्यातो ऽभिषेकः । २० । अथास्मै छत्त्रँ प्रयछन्त्यौदुम्बरँ सप्तदशशलाकम् । २१ ॥ छदिरसीति यजमानः प्रतिगृह्णाति । २२ । समाप्ते शस्त्रे ग्रहमादत्ते ऽध्वर्युर्मुख्यं चातिग्राह्याणां माहेन्द्रम् । २३ । अतिग्राह्यानुपतिष्ठन्ते । २४ ॥ इन्द्राय स्वाहेति वषट्कृते जुहोत्यग्रे ऽतिग्राह्याणाम् । २५ । तूष्णीमनुवषट्कृते ऽतिग्राह्यान्भक्षयते यथा माहेन्द्रम् । २६ । सिद्धमा षोडशिचमसेभ्यः । २७ । अपावृत्तेषु षोडशिकेषु वाजपेयकानुन्नयति होतृचमसमुख्यान् । २८ । सर्वं

---

**3** Cf. MS.I.11.3, 4, 7, 8; Āp.Śr. 18.4-7.
2) C4 तार्प्यँ C2 तार्प्यँ M2 B2 N S तीर्थँ.
3) M2 B2 N S °मारोच्चं C2 °मारोच्चणं.
4) स्वो not in the mss., cf. TS.1.7.9.1; B2 S सगया° (निश्रेणा°) N निश्रेणाया°.
7) M2 B2 N S उपतल्पे उपतिष्ठंतो C2 उपतदल्येषु तिष्ठंतो C4 उपतल्पेषु तिष्ठंतो; cf. TBr.Comm.3.162. 15: आश्वत्थानुपतल्प्यान्.
8) तं not M2 B2 N S.
9) °ति रथेषु unto 7.2.1.5. °मुपस° not C2.
9-14) belong to the end of 7.1.2.
10) M2 वदते B2 N S वदति.
12) mss. कृष्णमे°.
13) mss. धुर्यौनैं° (M2 धू°).
14) mss. पृष्ठयोमु°; M2 °जैंय्यम्, cf. Āp.Śr. लेपान्.
15) MS.II.8.3:108.19; 109.1.
16) cf. 6.1.7.14.
17) MS.II.8.3:108.8; cf.7.1.2.29.
18) mss. तमा°; corr. from Āp.Śr. 18.6.4, mss. प्रपश्येत् । एकता; MS. II.8.3:109.1, 2.
19-20) cf. 6.2.5.28-31.
25) M2 °त्यग्ने B2 S N °त्यत्रे.
27) 2.5.3.5; mss. षोडशी°.
28) mss. °वृतेषु.
29) mss. अध्वयुर्मुख्यं.

पूतभृतो होतृचमसमादत्ते ऽध्वर्युर्मुख्यं च प्राजापत्यानाम् । २९ ।। संपृच स्थ सं मा भद्रेण पृङ्क्तेति पूर्वया द्वारा प्राञ्चः सोमैरुत्क्रामन्ति '' विपृच स्थ वि मा पाप्मना पृङ्क्तेत्यपरया द्वारा प्रत्यञ्चः सुरोपयामैः । ३० ।। प्रजापतये स्वाहेति वषट्कृते जुहोति प्राजापत्यानाम् । ३१ । तूष्णीमनुवषट्कृत उदीचो ऽङ्गारानुपोह्य सुराग्रहान्व्युन्मर्शँ सोमभक्षान्सर्वे भक्षयन्ति । ३२ । अर्धवशां च सुरोपयामाँश्चाजिसृद्भ्यो हरन्ति ' मधुष्ठालं ब्रह्मणे सौवर्णँ राजतँ वा ' ककुभं प्रतिहिताय मुख्यँ सुराग्रहाणाम् । ३३ । अनुयाजैः प्रचर्य सिद्धा सँस्था । ३४ । न वाजपेययाजी कंचन प्रत्यवरोहेन्न प्रत्युत्तिष्ठेद्यथावयसं चेद्वाजपेययाजिनम् । ३५ ।। सम्राडित्येतमाचक्षीरन् । ३६ । ।।३।।

## ।। इति वाजपेये प्रथमो ऽध्यायः ।।

उभयं द्वादशाहः सत्त्रमहीनश्च । १ । एको बाहवो वा । २ । अपीवानो ऽहीनेन यजेरँस्तानदीक्षिता याजयेयुः । ३ । तेषाँ याजने दोषस्त्रयोदशानाम् । ४ । उपसत्स्वेको दीक्षेत । ५ । गृहपतिसप्तदशाः समानकल्पाः । ६ । स्वयमृत्विजो ब्राह्मणः सत्त्रमुपेयुः । ७ । तेषां दानं निवर्तेतादितो वरुणनिर्देशश्च । ८ ।। यास्मिन्यज्ञ ऋद्धिः सा नः सहेत्युक्त्वा गृहपतेरग्निषु मध्यतःकारिप्रभृतयो ऽग्नीन्संनिवपेयुः । ९ ।। भवतं नः समनसाविति जपेद्योयो निवपेद्येषां चाधिनिवपेयुः । १० । सावित्राणि हुत्वा व्यपादायाग्नीन्पृथगग्निहोत्राणि जुहुयुः । ११ । सिद्धमोखायाः करणात् । १२ । गृहपतेरग्निषु धूपनपचनं कुर्युः । १३ । संन्युप्य पशुबन्धेन यजेरन् । १४ । यथैष्टकाः प्रागुपसद्भ्यः स्युः । १५ । स्वकर्माविप्रतिषेधे सर्वेषाँ याजमानमेकवदाम्नातमूहेत बहुषु । १६ । सिद्धमा प्रवरात् । १७ । एवँ होतारँ वृत्वा सर्वान्प्रवृणीते । समानगोत्रानव्यवहितान्संकृत्सकृत्प्रतिपुरुषँ व्यवहितान् । १८ । समाप्ते व्यपादायाग्नीन्पृथगग्निहोत्राणि जुहुयुः । १९ । सिद्धमा दीक्षणीयायाः । २० । चैत्रीपक्षस्य सप्तम्यां

---

30) mss. पृङ्क्तेति, सोमैरु°; मा not in the mss ; M2 प्रङनेत्य° N S पृङ्नेत्य° B2 पृङ्त्य°; mss. सुरोपयामि; cf. TBr.1.3.3.6.

32) mss. °कृतानु, °न्धुन्मर्शान्सो°; cf. 2.5.4.7; mss. °न्समे.

33) M2 ककुभे B2 ककुं भं N ककुभ S ककुदं, cf.MS.I.11.7:169.12,13; r. मुख्यं च.

35) M2 प्रत्युष्ट्ये° B2 S N प्रत्युष्टेंद्य°, cf.6.2.6.25.

36) B2 S N °त्येनमा°.

1 Cf. Āp.Śr.21.1-6, 13.

1) mss. सत्राम°.

4) mss. दोषत्र°.

8) C2 वरुणं; M2 °र्देशारचा; cf. Āp. Śr.21.2.4.

9) M2 B2 N S यस्मि°, मान.

10) M2 B2 N S चाधिनिचापयुः ; cf. 3.3.4.

11) cf.6.1.1.5-7.

12) 6.1.2.6.

15) B2 N S यथैष्टका M2 C2 यथेष्टका.

16) M2 B2 सुककर्मा° N S सूककर्मा°; M2 N °मुदेहेत B2 S °मूहेहेत.

17) M2 प्रवेश° S N प्रवश° B2 प्रावश°; 2.3.6.16.

18) for the first सकृत् M2 सत् B2 S N सकृ, not C2; cf. Āp.Śr. 21.3.4.

20) 6.1.3.18.

प्राग्वंशे संन्युप्य दीक्षेरन्सर्वे सुन्वन्तः । २१ । सर्वे यजमानभागं प्राश्नन्ति । २२ । अभ्युन्दनप्रभृति पावनान्तमेकैकस्य गृहपतिमुखानध्वर्युर्मध्यतःकारिणो दीक्षयति प्रतिप्रस्थाता पत्नीरध्वर्युमुखान्प्रतिप्रस्थातार्धिनो नेष्टा पत्नीः ' प्रतिप्रस्थातृमुखान्नेष्टा तृतीयिन उन्नेता पत्नीर्नेष्टृमुखानुन्नेता पादिनः स एव पत्नीरन्यो ब्राह्मण उन्नेतारम् । २३ । सिद्धमा पूर्णाहुतेः । २४ । कृष्णाजिनदीक्षादि प्रावरणान्तमेकैकस्य सिद्धं समिदाधानम् । २५ । रुक्मप्रतिमोचनादि वात्सप्रान्तमेकैकस्य ' मुष्टिकरणाद्या-वेदनान्तमेकैकस्य दैक्षं कर्म सिद्धम् । २६ । व्रताक्ताभञ्ज्यात्सर्वेषां व्रतेष्वहीने भृतिं वन्वीरन् । २७ । द्वादश दीक्षाः । २८ । सिद्धमा क्रयात् । २९ । सषोडशिके ऽधिकर्णी राजक्रयणी । ३० । द्वादशोपसदः । ३१ । प्रथमायां व्यूहनान्तं कृत्वा वसन्ति । ३२ । श्वोभूते चितिमन्यस्मिन्नहनि पुरीषमन्यस्मिन्नहन्येकादशायां विकर्षणान्तं कृत्वा वसन्ति । ३३ । श्वोभूते सर्वे ऽभिषिच्यन्ते । ३४ । प्रवृते मैत्रावरुणाय दीक्षितदण्डान्प्रयच्छन्ति । ३५ । सिद्ध उपवसथः । ३६ । श्वोभूते प्रायणीयो ऽतिरात्रः । ३७ । सिद्धमा राज्ञ उपावहरणात् । ३८ । अन्येन वाससा द्वादशं भागमुपावहरति । ३९ । सिद्धमा सतनुकरणात् । ४० । सतनुकृतं पञ्चधा व्युदुह्य प्राणग्रहैरभिमृशत्ययं पुरो भूरिति पर्यायैः प्रतिदिशं पञ्चमेन मध्ये । ४१ । प्रायणीयोदयनीययोर्दशमे चाहन्यंश्वदाभ्यौ प्राणग्रहाश्च । ४२ । सिद्धमा प्रवरात् । ४३ । अष्टाविध्मशकलानादायाश्रावमृतुप्रैषादिभिर्वृणीते ' यथाम्नातं होतारमग्निर्देवीनां विशां पुरएतेमे सुन्वन्तो यजमाना मनुष्याणामित्यूहेन यजमानाः । ४४ । सिद्धमा भक्षणात् । ४५ । गृहपतिर्यजमानचमसं भक्षयति । ४६ । सिद्धमा दक्षिणाकालात् । ४७ । दाक्षिणौ होमौ हुत्वेदमहं मां कल्याण्यै कीर्त्यै स्वर्गाय लोकायामृतत्वाय दक्षिणां ददामीति दक्षिणापथेन कृष्णाजिनानि धून्वन्तो ऽहरहराव्रजेयुः । प्रासर्पकं च दद्युर्हिरण्यं वासो गवां स्वादन्यादहीने सहस्रम् । ४८ । समधा विभज्यान्वहं दद्युः । ४९ । उत्तमे ऽहनि विषाणाप्रासनं सख्यविसर्जनं च । ५० । सवनान्तेषु व्युत्सर्पन्ति । ५१ । पुरस्ताद्यज्ञायज्ञियस्य वसतीवरीर्गृह्णाति । ५२ । सिद्धमा हारियोजनात् । ५३ । अतिप्रेषित अग्नीध्रः स्वस्य

---

23) the first °मुखा° only C2 C4; C2 एव M2 एष B2 S N ए.
24) 6.1.3 20.
25) 2.1.2.2. seq. ; 6.1.3.31.
26) 6.1.4.1-19.
27) M2 °भंजान्स° B2 S N °भंज्यान्स°.
29) 2.1.4.8.
30) cf. 2.1.3.30.
32) 6.1.5.4.
33) only C2 C4; C2 C4 एकादशां; cf.6.2.4.11.
34) cf. 6.2.5.30, 31.
35) B2 N S °दंडन्प्र°; M2 B2 N S °यछति.
36) cf. 6.2.6.6.
38) 2.1.5.8.
40) 2.3.3.5.
41) MS.II.7.19.
42) M2 B2 N S °दाभ्यै C2 °दाभ्यो.
43) 2.3.6.16.
44) mss. विषां; M2 B2 N S यजमान twice C2 °नो, °नाः ; cf.2.3.6.17.
45) 2.4.1.31.
47) 2.4 5.1.
48) Kauṣ.Br. 15.1; च not M2; mss. स्वाद°.
49) M2 B2 N S समविधा.
50) M2 C2 N °प्राशनं; cf.2.4.5.18; 2.5.4.13.
53) mss. हार्योजना°; 2.5.4.2.
54) mss. सोमेभ्यः.

धिष्ण्यस्य पश्चात्सद्यःसुत्यामिन्द्राग्निभ्यां प्रब्रवीमि मित्रावरुणाभ्यां विश्वेभ्यो देवेभ्यो ब्राह्मणेभ्यः सोम्येभ्यः सोमपेभ्यो ' ब्रह्मन्वाचँ यच्छेत्यावेदयति । ५४ । पत्नीसँयाजान्तान्यहानि संतिष्ठन्ते । ५५ । तदनु वाचँ यच्छन्ति । ५६ ॥ अयाश्चाग्ने ऽसीति सर्वप्रायश्चित्तं हुत्वा समिध आदधाति । ५७ । इध्माबर्हिः संनह्य परिहृतासु वसतीवरीषु वाचँ विसृजन्ते । ५८ । ॥१॥

अन्वहं पृष्ठ्यः षडहस्तायते । १ । तस्य सद्यस्त्रिवृदग्निष्टोमो रथंतरसामा । २ । सिद्धमा बहिष्पवमानात् । ३ । प्रायणीयोदयनीययोर्बहिः स्तुवते ' सदसीतरेषु । ४ । महेन्द्रस्य रथशब्देन दर्भाभ्याँ स्तोत्रमुपाकरोति । ५ । सर्वत्र पृष्ठ्यशिल्पेषु दर्भौ । ६ । बहिर्वेदि रथँ वर्तयति । ७ । अहरहर्योगविमोकान्वारम्भान्वारोहाप्सुमत्यावहसंतानाश्च वसतीवरीरिध्माबर्हिः पयसां दोहनम् । ८ । श्वःसुत्यामत ऊर्ध्वमाग्नीध्रमावेदयति । ९ । पञ्चदश उक्थ्यो बृहत्सामा । १० । दुन्दुभिशब्देन स्तोत्रमुपाकरोति यदि न स्तनयेत् । ११ । सप्तदश उक्थ्यो वैरूपसामा । १२ । उपवीजनेन स्तोत्रमुपाकरोति । १३ । विधिरतिग्राह्याणाँ यथा वाजपेये । १४ । एकविँशः षोडशी वैराजसामा । १५ ॥ अग्न आयूँषि पवस इत्याग्नेयमतिग्राह्यं गृह्णात्य"ग्नेश्च त्वा ब्रह्मणश्च तेजसा जुहोमीति जुहोत्य"ग्न आयुःकारेति भक्षयतः । १६ । अरणीभ्याँ स्तोत्रमुपाकरोति । १७ । अवकामास्तीर्योद्गातुरूरावग्निं मन्थति । १८ । तमध्वर्यु"र्भवतं नः समनसावित्याहवनीये हुत्वा " प्रेद्धो अग्न इति विराजाभिजुहोति । १९ । त्रिणव उक्थ्यः शाक्वरसामा । २० ॥ ओजस्तदस्य तित्विष इत्यैन्द्रमतिग्राह्यं गृह्णाती"न्द्रस्य च त्वा क्षत्रस्य चौजसा जुहोमीति जुहोती"न्द्रौजस्कारेति भक्षयतः । २१ । अद्भिः सावकाभिः स्तोत्रमुपाकरोति । २२ । सँह्लादयमानासु स्तुवते । २३ । समाप्ते मार्जालीये निनयन्ति । २४ । त्रयस्त्रिँश उक्थ्यो रैवतसामा । २५ ॥ अदृश्रन्नस्य केतव इति सौर्यमतिग्राह्यं गृह्णाति " सूर्यस्य च त्वौषधीनां च वर्चसा जुहोमीति जुहोति " सूर्य भ्राजस्कारेति भक्षयतः । २६ । स्वयमृतुयजुः षष्ठमहः । २७ । प्रैषेण याज्याँ संदधाति । २८ ॥ ये३ यजामहे ऽश्विनाध्वर्यू आध्वर्यवादृतुना सोमं पिबतम्

अश्विना पिबतं मधु दीद्यग्नी शुचिव्रता । ऋतुना यज्ञवाहसा ॥

इति समूढे । २९ ।

अर्वाञ्चमद्य यय्यं नृवाहणँ रथँ युञ्जाथामिह वाँ विमोचनम् ।

---

57) cf. 1.3.5.20.

2 Cf. Āp.Śr.21.6-8.

2) सद्यस् not M2 S N.

3) M2 बर्हिः° B2 S N बहिः° C2 वहि°; 2.3.6.1.

4) M2 ससीतरेषु B2 N S समी°.

6) M2 प्रष्ठयाष्ट° B2 N S पृष्ट्यष्ट° C2 पृष्टि°; cf. ŚBr.4.2.5.3.

7) N रथं M2 रयं.

8) M2 B2 N S अहरयेतिविमोका; C2 °रोहासु° M2 °रोहाशु°.

14) cf. 7.1.1.15, 40; 3.23-25.

16, 21, 26) cf. MS.I.3.31-33; IV.7.3:96.6-14.

19) cf. 3.3.4; 5.1.1.39.

20) mss. त्रिनव.

23) M2 B2 सँह्लादयमानान् सुस्त [B2 स्तु] वते N S सँह्लादयमानासुस्तुवते C2 संह्लादयमानास्तुवंते.

27) M2 °तुर्यजु'ष्वश्छमहः B2 °तुर्यजु'षष्ठमहः N S °तुर्यजंषछमहः.

29) cf. 2.4.2.11.

30) Ṛ.V.2.37.5.

पृङ्क्तँ हवीँषि मधुना हि कं गतमथा सोमं पिबतँ वाजिनीवसू ॥

इति व्यूढे । ३० ॥ अग्निं गृहपतिं गार्हपत्यादिति समूढे । ३१ । व्यूढे ऽन्या त्रिष्टुबाम्नाता । ३२ । गवाँ साँवाशनेन स्तोत्रमुपाकरोति । ३३ । तृतीयसवन उक्थ्येषु शिल्पं प्रतिगरः । ३४ । वालखिल्यान्मैत्रावरुणो विहरति । ३५ । वृषाकपिं ब्राह्मणाच्छँसी शँसत्येवयामरुतमच्छावाकः । ३६ । षडहे सँस्थिते मध्वश्नन्ति घृतँ वा । ३७ । उक्थ्याश्छन्दोमास्तायन्ते चतुर्विँशश्चतुश्चत्वारिँशो ऽष्टाचत्वारिँशः । ३८ । ॥२॥

चतुर्विँशो ऽग्निष्टोमो दशममहरविवाक्यम् । १ । तस्मिन्नपहताय प्रतिरूपैः शब्दैः परिहरेयुः । २ । तथा चेन्न शक्नुयुर्ब्रह्मा गृहपतिरुपद्रष्टारो वा विब्रूयुः । ३ । यावक्षरौ विब्रूयुस्तौ होत्रे वेदयेरन् । ४ । तामनुष्टुभं परोक्षँ संपादयेत् । ५ । पत्नीसँयाजान्ते प्राञ्चो ऽभ्युदेत्य

अयँ सहस्रमानवो दृशः कवीनां मतिर्ज्योतिर्विधर्म ।
ब्रध्नः समीचीरुषसः समैरयत् ।
अरेपसः सचेतसः स्वसरे मन्युमन्तश्चिता गोः ॥

इत्याहवनीयमुपतिष्ठन्ते । ६ । सदः प्रसृप्योपविशन्ति । ७ । हविर्धानं प्रपद्याध्वर्युर्मानसं ग्रहं गृह्णाति । ८ । इमां पात्रं कृत्वा वायुँ सोममुँपयामगृहीतो ऽसि प्रजापतये त्वेति मनसा ग्रहणसादने स्तोत्रोपाकरणं च । ९ । सार्पराज्ञीषु पराचीषु स्तुत्वा होतारमीक्षते । १० । तास्वध्वर्युर्मनसा प्रतिगृणाति । ११ ॥ अध्वर्यो ब्रह्म वदावेत्यामन्त्रयते । १२ ॥ ओँ होतरित्यध्वर्युः । १३ । व्यवसायं चतुर्होतॄन्होता व्याचष्टे सह षड्ढोत्रा 'सप्तहोतारमन्ततः । १४ ॥ ओँ होतस्तथा होतरिति प्रतिगृणाति । १५ । प्रतिगीर्य चतुर्होतॄन्होतरित्युक्त्वा प्रजापतिँ सप्तदशँ व्याचष्टे । १६ । अध्वर्युर्होता येषाँ वाध्वर्युः प्रजापतिँ सप्तदशँ यज्ञे ऽन्वायत्तँ वेदका ऋध्नुवन्ति वैते सत्रिणः । १७ । नैषाँ यज्ञो व्यथते ' प्रजापतौ यज्ञेन प्रति[illegible]न्ति । १८ ॥ ओ श्रावयेत्याम्नातम् । १९ । एष वै प्रजापतिः सप्तदशो यज्ञे ऽन्वायत्तः । २० । यद्यन्[illegible]याया एति यदि याज्याया अतश्च देवेनैति । २१ । नैषाँ यज्ञो व्यथते ' प्रजापतौ यज्ञेन प्रतितिष्ठन्ति ।२२ ॥ ओमध्वर्यो

---

31) cf. Baudh.Śr.16.5:251.1.
33) M2 वाभनेन B2 वाश्वनेन N वापृचनेन S वाप्सनेन C2 सांवासनेन.
34) M2 B2 N S शिचं C2 शिद्यः
34-36) cf. Baudh Śr.16.5:251.10-12. masc. also Baudh.Śr.16.6:253.7; mss. °स्तानि inst. of °स्तौ.
**3** Cf. Āp.Śr.21.9-13.
3) M2 शत्रुत्र° B2 N S शत्रुन° C2 शक्तुयुब°.
4) C2 C4 यावक्षिरत्तरौर्विशृ.यु° (C4 °त्रयु°), not M2 B2 S N; dual.
6) mss. यशः inst. of दृशः; M2 B2 N S मन्युमिश्चदागौ° C2 मन्युमिश्वदागो°; cf.SV.1.458.
8-9) C2 गृह्णातीमां S N गृह्णानमां B2 ग्रहानमां M2 गृह्णाजमां.
9) cf.2.3.2.29.
10) C2 स्तुत्वा, r. भुत्वा ?
11, 15, 23) M2 B2 N S °गृह्णाति.
12) C2 वदेत्या° M2 °न्वदायोत्या°, cf. 4.14.
1[illegible] व्याचष्टे unto सप्तदशं not C2.
17) mss. ध्वर्युर्होतर्ये°; mss. वेदस्क [C2 स्क] भ्रुवंति.
19) M2 N [°त्य]श्रावये°; cf.1.3.1.24.
23) mss. °ध्वर्योस्तथाध्वर्योरिति (C2 °र्युस्त°, °र्ध्यु°रि°).

तथाध्वर्यं इति प्रतिगृणाति । २३ । प्रतिगीर्य समाप्ते शस्त्रे ग्रहादानप्रभृति मनसा कुर्वन्त्या भक्षणात् । २४ । समीक्षणमुपह्वः । २५ । जगच्छन्दसा भक्षयन्ति । २६ । अपिधाय सद " इह धृतिरिह स्वधृतिरिति प्रभृतिभिरौदुम्बरीमारभ्य वाचँ यच्छन्ति । २७ । आधिवृक्षसूर्यादा वा नक्षत्रदर्शनादनतिक्रामन्तौ धिष्ण्यानध्वर्यू कृष्णाजिनमन्वारभेते । २८ । समन्वारब्धाः प्राञ्चो ऽभ्युदेत्य

युवं तमिन्द्रापर्वता पुरोयुधा यो नः पृतन्यादप तंतमिद्धतँ वज्रेण तंतमिद्धतम् ।
दूरे चत्ताय छन्त्सद्गहनँ यदिनक्षत् ।
अस्माकँ शत्रून्परि शूर विश्वतो दर्मा दर्षीष्ट विश्वतः ॥

इत्याग्नीध्रीयमुपतिष्ठन्ते । २९ । द्वयोः समिध आदधते वरांश्च वृणते । ३० । उदयनीयो ऽतिरात्रः प्रायणीयेन व्याख्यातः । ३१ । स सिद्धः संतिष्ठते । ३२ । वापनकाले सशिखानि वापयन्ते । ३३ । पृथगुदवसानीया । ३४ । ॥३॥

द्वादशाहे ग्रहाग्राणि । १ । ऐन्द्रवायवाग्रं प्रायणीयोदयनीययोर्दशमे चाहन् । २ । पूर्वस्मिन्पृष्ठ्यत्र्यह ऐन्द्रवायवाग्रँ शुकाग्रमाग्रायणाग्रम् । ३ । समूढ उत्तरस्मिन्पृष्ठ्यत्र्यहे छन्दोमेषु च त्र्यनीकानभ्यस्येदथ व्यूढ आग्रायणाग्रमैन्द्रवायवाग्रं द्वे शुक्राग्रे आग्रायणाग्रमैन्द्रवायवाग्रम् । ४ । उपाँश्वभिषवो द्वादश कृत्वो ऽष्टौ कृत्व एकादश कृत्वो ' ऽथ छन्दोमेष्वेकादश कृत्वो द्वादश कृत्वो ऽष्टौ कृत्वः । ५ । एतेन कपालयोगा व्याख्याता भक्षमन्त्राश्च पवमानानुमन्त्रणानि च । ६ ॥ महँ इन्द्रो य ओजसेति गायत्री माहेन्द्रस्य पुरो ऋग्भुवस्त्वमिन्द्रेति छन्दोमेषु च । ७ । पशुकल्पः । ८ । विहृतानेकादशिनानालभते । ९ । आग्नेयो ऽज उदयनीये । १० । सत्त्रादुदवसाय पृष्ठशमनीयैरग्निष्टोमैः सहस्रदक्षिणैर्यजेरन् । ११ । द्वादशाहप्रकृतयः सत्त्राहीनाः । १२ ।

गवामयनाय माघीपक्षस्य द्वादश्यां दीक्षेरन् । १३ । सिद्धमा प्रायणीयातिरात्रात् । १४ । तस्मादूर्ध्वमुक्थ्यश्चतुर्विँशः प्रायणीयः । १५ । ततो ऽभिप्लवः षडहो ' ज्योतिरग्निष्टोमो गौरुक्थ्य आयुरुक्थ्यो गौरुक्थ्य आयुरुक्थ्यो ज्योतिरग्निष्टोमः । १६ । तं चतुरभ्यसेत्पृष्ठ्यँ षडहमुपयन्ति ' स मासः । १७ ।

---

27) MS.III.12.4:161.12.
29) mss. °रब्धौ; cf. ŚBr.4.6.9.14.
30) M2 B2 N S द्वयी C2 द्वौ.
31) 7.2.1.37.
32) M2 B2 N S समिद्धः C2 ससीद्धः.
34) cf. 2.5.5.24.
4 Cf. Āp.Śr.21.13-15, 21.
2) mss. °वाग्रौ; C2 दशामंचाहः M2 B2 S दिशामन्वाह N दिशामचाह.
4) for द्वे शुक्राग्रे आ° M2 द्वे शुक्राय° B2 S द्वे शुक्रा° N द्वे शुक्र° C2 द्वे शुक्राग्रमा°.
7) MS.I.3.24; mss. ऋग्भवस्त्वमिंद्रेनि; MS.IV.12.6:197.6.
9) mss. विहुता°, cf.7.2.8.6 and Hir.Śr.
11) M2 B2 N S सशदु° for सत्त्रादु°.
14) 7.2.1.37.
16) after the second गौरुक्थ्य M2 B2 N S have ॥ ४ ॥, prob. an attempt to end the khaṇḍa before the *gavāmayana*.
17-19) तं unto पृष्ठ्यः not C2.
17) mss. °यति (B2 °याति C4 °यंति)

तेन चतुरो मासान्यन्ति । १८ । त्रयो ऽभिप्लवाः षडहाः पृष्ठ्यः षडहो ऽभिजित्त्रयः स्वरसामानो ऽग्निष्टोमा उक्थ्या वा । १९ । तेष्वन्वहं संतनोत्यतिग्राह्यान्सर्वत्रोपयामसादनं च । २० ॥ उपयामगृहीतो ऽसि प्रजापतये त्वा प्रजाभ्य इति गृह्णात्येष ते योनिः प्रजापतये त्वा प्रजाभ्य इति सादयति " प्रजापतये प्रजाभ्य इति जुहोत्यन्तरिक्षाय त्वा वनस्पतय इति गृह्णात्येष ते योनिरन्तरिक्षाय त्वा वनस्पतय इति सादयत्यन्तरिक्षाय वनस्पतय इति जुहोत्यद्भ्यस्त्वौषधीभ्य इति गृह्णात्येष ते योनिरद्भ्यस्त्वौषधीभ्य इति सादयत्यद्भ्य ओषधीभ्य इति जुहोति । २१ । असावादितो द्व्यहः ' स मासः । २२ । पूर्वपक्ष एकसंभार्यः । २३ । तस्मादूर्ध्वं विषुवान्सदिवाकीर्त्यं ॥४॥

एकविंशो ऽग्निष्टोमः । १ । उदिते प्रातरनुवाकमुपाकरोति । २ । तस्मिन्नतिग्राह्यान्गृह्णाति वृत्तान्संतनीनुदु त्यं जातवेदसमिति सौर्यमावृत्तान्संतनीनोषधीभ्यो ऽद्भ्यो वनस्पतिभ्यो ऽन्तरिक्षाय प्रजाभ्यः प्रजापतये " वाचस्पतिमिति वैश्वकर्मणमया विष्ठेति प्राजापत्यम् । ३ । सौर्यो ऽजः श्वेत उपालम्भ्य उपांशुदेवतः । ४ । यद्यस्तमिते हार्यो ऽजो न स्यात्सूर्यो दिवो दिविषद्भ्यो " विश्वान्मुञ्चत्वंहसः " स नः पर्षदति द्विष इति जुहोति । ५ । उत्तरस्मिन्पक्षस्यावृत्ताः स्वरसामानो ऽभिप्लवाश्च । ६ । ऊर्ध्वं विषुवतः स्वरसामानः । ७ । तेष्वावृत्ताः संतनयः । ८ । तेषां प्रथमे " सुत्रामाणमित्यादित्यमतिग्राह्यं गृह्णाति । ९ । श्वोभूते वैश्वकर्मणान्तौ व्यत्यासमा महाव्रतादगृह्णाति । १० । विश्वजिच्छिल्पः सर्वपृष्ठो ' माध्यंदिने पृष्ठेषु शिल्पानि । ११ । पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणः । १२ । त्रयो ऽभिप्लवाः षडहाः । १३ । पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणश्चत्वारो ऽभिप्लवाः षडहाः ' स मासः । १४ । तेन चतुरो मासान्यन्ति । १५ । त्रयो ऽभिप्लवाः षडहा आयुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहानि । १६ । ऊर्ध्वं विषुवतो ऽष्टाविंशत्यहो महाव्रतं चातिरात्रश्च मासः । १७ । इति द्विसंभार्यमथैकसंभार्यम् । १८ । पृष्ठ्यः षडहस्त्रयस्त्रिंशारम्भणश्चत्वारो ऽभिप्लवाः षडहाः ' स मासः । १९ । तेन पञ्च मासान्यन्ति । २० । द्वावभिप्लवौ षडहावायुश्च गौश्च द्वे अहनी द्वादशाहस्य दशाहान्यूर्ध्वं विषुवतश्चतुरहो महाव्रतं चातिरात्रश्च मासः । २१ । ॥५॥

---

18) five months in all, as also the first ततस् 7.2.8.25 proves; in 7.2 5.15 on the contrary four months in all are meant.
20) mss. संतनोति ग्राह्याः.
21) M2 B2 N S mix the formulas up, all in the same way, and give them incomplete; cf. MS I.3.35, 11; KS.30.5. (वनस्पतिभ्यः).
22) thus sū.14, 15, 19 form the sixth month.

**5** Cf. Āp.Śr.21.15, 16, 21, 23.
1) begins already with तस्मादूर्ध्वं°.
3) mss. संततीनु°; M2 B2 S N °न्संततीनौ° C2 संतनीतो°; cf.2.4.5. 4; 6.2.5.2; 1.1.2.15.
5) cf. KS.13.11:193.9-11; MS. III.11.10:157.2b; IV.10.6:158 7.
9) cf 5.1.2.5.
18) M2 B2 N S द्वे संभार्यम°.

महाव्रतं पञ्चविँशो ऽग्निष्टोमः । १ । उदिते प्रातरनुवाकमुपाकरोति । २ । तस्मिन्नतिग्राह्यपात्राणि प्रयुनक्त्यर्कग्रहाय पञ्च ' पूर्वं दक्षिणमुत्तरमपरं मध्य आत्मनीनं । पृष्ठेभ्यो वृत्तेभ्यः संतनिभ्यः ' सौर्याया' वृत्तेभ्यः संतनिभ्य ' आदित्यवैश्वकर्मणप्राजापत्येभ्यो । वृष्टिग्रहाय मार्त्तिकं चतुस्तनं । सारस्वताय षोडशं ' पृश्निप्राणग्रहेभ्यः पचन्दश ' वैष्णवं द्वात्रिँशं ' बार्हस्पत्यं त्रयस्त्रिँशम् । ३ । अँश्वदाभ्यौ यथाकालं पृश्निप्राणग्रहैरभिमृशति । ४ ॥ वायुरसि प्राणो नाम स्वाहा त्वा देवाय सवित्रे '' वर्चो मे दा ॥ आयुरसि चक्षुर्नाम स्वाहा त्वा देवाय धात्रे '' श्रोत्रं मे दा ॥ रूपमसि वर्णो नाम स्वाहा त्वा देवायेन्द्राय '' क्षत्रं मे दाः ॥ श्रुतमसि सत्यं नाम स्वाहा त्वा देवाय बृहस्पतये '' रायस्पोषं मे दा ॥ भूमिरसि भूतिर्नाम स्वाहा त्वा देवेभ्यः पितृभ्यो '' ऽपामोषधीनां गर्भं मे दा ॥ ऋतस्य त्वा व्योम्ने गृह्णाम्यृ॑तस्य त्वा विधर्मणे गृह्णाम्यृ॑तस्य त्वा ज्योतिषे गृह्णाम्यृ॑तस्य त्वा सत्याय गृह्णाम्यृ॑तस्य त्वा मात्रायै गृह्णाम्य॑यं पुरो भूरिति पृश्निप्राणग्रहान्यथाकालं गृह्णाति । ५ ॥ इन्द्रमिद्गाथिन इति पूर्वार्धादु॑पयामगृहीतो ऽसीन्द्राय त्वार्कवत इति गृह्णात्ये॑ष ते योनिरिन्द्राय त्वार्कवत इति सादयत्यँभि त्वा शूर नोनुम इति दक्षिणार्धे '' त्वामिद्धि हवामह इत्युत्तरार्धे

इमा नु कं भुवना सीषधेमेन्द्रश्च विश्वे च देवाः ।
यज्ञं च नस्तन्वं च प्रजां चादित्यैरिद्रः सह सीषधातु ॥

इति पश्चार्धे

तदिदास भुवनेषु ज्येष्ठँ यतो जज्ञ उग्रस्त्वेषनृम्णः ।
सद्यो जज्ञानो नि रिणाति शत्रूननु यँ विश्वे मदन्त्यूमाः ॥

इत्यात्मनीने यथा प्रयुक्तम् । ६ । इतराँश्चतुस्तने

क्षेत्रस्य पते मधुमन्तमूर्मिं धेनुरिव पयो अस्मासु धुक्ष्व ।
मधुश्चुतं घृतमिव सुपूतमृतस्य नः पतयो मृडयन्तु ॥

इत्यु॑पयामगृहीतो ऽस्यदित्यै त्वा चतुरूध्न्या इति तृतीयग्रहं '' महीमू षु मातरमिति द्वितीयभागँमिदं तृतीयँ सवनमिति संपूरयत्ये॑ष ते योनिरदित्यै त्वा चतुरूध्न्या इति सादयति ॥ पावका नः सरस्वतीति सारस्वतँ ॥

---

**6** Cf. Āp.Śr.21.17, 13, 21, 22.

3) mss. व्रतेभ्यः; the first संतनिभ्यः only C2 C4; mss. सूर्याया°, °कर्मणः; C2 °प्राजापत्यो; after the five *pātras* for the *arkagraha* the same nine and one as in 7.2.5.3,9 are meant, that makes fifteen.

4) cf. also Baudh.Śr.16.17:263. 8-10.

5) mss. चत्रं (मे) दा; cf.TS.3.3.5; MS.IV.2.7:28.14; 9.3:124.3, 4; Mān.7.2.1.41.

6) mss. in the last mantra °स्त्वेषु° for °स्त्वेष°; cf. MS.II.13.6: 154.15; 9:158.14, 18; SV.2. 460-461; ṚV.10.120.1.

7) for °रूध्न्या (twice) mss. °रुद्धन °रुध्व °रुद्धत °रुधत; cf. KS.30.4; Mān.5.1.2.5; 2.5.4.17; MS.IV. 10.1:142.7; Mān.1.2.5.16; 5.1. 9.20.

वायुरसीति पृश्निप्राणग्रहानिँदँ विष्णुरिति वैष्णवं ॥ बृहस्पतिः प्रथमं जायमान इति बार्हस्पत्यम् ।७। ॥६॥

माहेन्द्रकाले शिल्पानि व्यायातयन्ति । १ । उपरिषद्युक्थम् । २ । आसन्द्युद्गातुः प्रेङ्खो होतुः फलकमध्वर्योः कूर्च इतरेषाम् । ३ । वाणः शततन्तिरौदुम्बरपात्रो मौञ्जीभिस्तन्तिभिः खादिरदण्डो वीणाकृतिर्वेतसत्वचापिहितः । ४ । तँ वेतसशाखया समुल्लिख्योद्गात्रे प्रयछन्स्तोत्रमुपाकरोति । ५ । तँ यजमानाय प्रयछति । ६ । तँ सँवादयत्या स्तोत्रनिधनात् । ७ । सर्वाणि वीणाजातानि पत्न्य उपवादयन्त्या काण्डवीणाभ्यः । ८ । दिक्षु दुन्दुभयो वदन्ति ' भूमिदुन्दुभिः पञ्चमः पश्चादाग्नीध्रीयस्य जानुदघ्नो ऽर्धमन्तर्वेदि सवनीयचर्मणाभिहितो लाङगूलवादिनः । ९ । अष्टौ दास्यः कुम्भिन्यो हतवसना मार्जालीयं द्वेद्वे

गाव एव सुरभयो गावो गुग्गुलगन्धयः ।
गावो घृतस्य मातरस्ता इह सन्तु भूयसीः ॥

इति गायन्तीदं मधूकमध्विवति पादौ निहत्य प्रदक्षिणं परीतः ।

न वै गावो मङ्गीरस्य गङ्गाया उदकं पपुः ।
पपुः सरस्वत्यां नद्यां ताः प्राचीरुज्जिगाहिरे ॥

" इदं मध्वित्यपरे ।

यदा राघाराद्यँ वदतो ग्राम्यमाङ्गीरदासकौ ।
क्षेमैर्ऋध्येते ग्रामो वानड्वाँस्तप्यते वहन् ॥

" इदं मध्वित्यपरे ।

एता वयं प्लवामहे शम्याः प्रचरतामिह ।
निगीर्य तुभ्यं मध्व आकर्षे कुष्ठो यथा ॥

इति निनीय प्रतिपरियन्ति । १० । अग्रेण मार्जालीयँ शूद्रार्यौ चर्म व्यायछेते वाशँ श्वेतं परिमण्डलमिँम उद्वासीकारिण इमे दुर्भूतमक्रन्निति बहिर्वेदि शूद्र " इमे ऽरात्सुरिमे सूदमक्रन्नित्यन्तर्वेद्यार्यः । संजित्य प्रसदस्यादधाति । ११ । दक्षिणस्यां वेदिश्रोणौ परिश्रिते वृषलमिथुनौ भवतो ऽपगराभिगरौ । पूर्वो " बहु वा

---

7 Cf. Āp.Śr.21.17-22.

1) C2 व्याख्यातयंत्यु° the oth. यातायंत्यु°, cf 7.1.2.21.

2) mss. °क्थ्यमा°.

3) C2 प्रेंपो the oth. प्रेंपो.

4) mss. °स्तंतीभिः.

9) r. °वादी.

10) M2 B2 N S C4 गायतीदं C2 गापयतीदं, r. गायन्त्याविदं ? M2 B2 N S मधुक°, परितः C2 परोतः C4 परैतः ; mss. यथेतं for यथा ॥ इति, perhaps यथेदं मध्वित्यपरे is meant, for this and probably a last verse are missing. (in M2 the third verse is given below in sū.13); in the 3*d* verse : S N राद्याराद्यं C2 रैध्वाराद्यं; mss. वदंतो; C2 क्षेमैं° the oth. क्षिभि°; mss. °स्तल्पते वहानि°; cf. also Baudh.Śr.16.22, 23.

11) mss. °मा उद्धासिचारिण इमे दुर्भू°-दम°; C2 प्रसदसा°; cf. TBr.1.2.6 7.

इमे ऽस्मिन्सत्रे ऽकुशलमचार्षुरपीक्लोजानपवमानानिति बहिर्वेद्यपगरो '' बहु वा इमे ऽस्मिन्सत्रे कुशलमचार्षुः पीक्लोजान्पवमानानित्यन्तर्वेद्यभिगरो पूर्वः । १२ । ब्रह्मचारी पुँश्चली चा"नार्यकर्मन्नवकीर्णि दुश्चरितं निराकृतमिति बहिर्वेदि पुँश्चली '' धिक्त्वा जारं परस्य जनस्य निर्मार्जनि पुरुषस्यपुरुषस्य शिश्नप्रणेजनीत्यन्तर्वेदि ब्रह्मचारी । १३ । उत्तरतस्तीर्थस्यापयानायावकाशं कृत्वोपरिष्टाद्ग्रीवँ वाशँ श्वेतं चर्म विघ्नन्ति । १४ । यस्या राजभक्तिस्तस्यास्तल्पो राजपुत्रो ब्राह्मणो राजन्यो वा । १५ । अग्रेण यूपावटँ संनह्यति । १६ । संनद्धकवचः प्रदक्षिणँ विहारं परीत्य त्रिरायम्य त्रिरावध्यति भसदि मध्ये ग्रीवासु । प्राङ्ुद्यम्य चतुर्थमस्ता निवर्तयति । १७ । फलकमारुह्य प्रतिगृह्णाति '' त्वे क्रतुमपि वृञ्जन्ति विश्व इति पूर्वार्धाद्"द्विर्यदेते त्रिर्भवन्त्यूमा इति दक्षिणार्धात्"स्वादोः स्वादीयः स्वादुना सृजा समित्युत्तरार्धाद्"दः सु मधु मधुनाभि योधीरिति पश्चार्धात् । १८ । वृष्टिग्रहं दधिग्रहपात्रे ऽवनयति । १९ । आदित्ये माहेन्द्रेण हुते द्युग्रहणमात्मनीने ऽवनयति । २० । आह्रीयमाणान्भक्षान्प्रत्यवरोहन्ति । २१ ॥ महस्ते भक्षयामि भर्गस्ते भक्षयामि स्तोमं ते भक्षयामि यशस्ते भक्षयाम्यन्नाद्यं ते भक्षयामीत्यात्मनि तं भक्षयतः । २२ । व्याख्यातो ऽभ्यस्तमिते होमः । २३ । ॥७॥

द्वादशाहिकानामुक्तो ग्रहकल्पः । १ । ऐन्द्रवायवाग्रँ शुक्राग्रमित्यभिप्लवे ऽभ्यस्येदावृत्ते शुक्रप्रभृति । स्वरसाम्नां प्रथमोत्तमयोरावृषि चैन्द्रवायवाग्रँ शुक्राग्रमतो ऽन्यत् । २ । पशुक्लृप्तिः । ३ । एकादशिनाः प्रायणीयोदयनीययोरैन्द्राग्नौ ऽन्तर्धावपि वा क्रतुपशवः सर्वस्मिन्नैन्द्राग्नो वा । ४ । षडुपालम्भ्या । बार्हस्पत्यः शितिपृष्ठस्त्रयस्त्रिँशे ऽहनि ' द्यावापृथिवीया धेनुश्छन्दोमे ' तस्या वत्सो वायवे द्वितीये ' वाचे पृश्निस्तृतीये' ऽदित्यै वशाविवाक्ये ' वैश्वकर्मण ऋषभस्त्रिरूप एत उभयतो महाव्रते । ५ । अपि वैकादशिनान्विहृतानभ्यसेत् । ६ । ऐकविँशास्ततो ऽतिरिक्ताः पशवो । वैष्णवो वामन एकविँशे त्रिणव उपालम्भ्य उपाँशुदेवत आग्नेयो ऽजः । ७ । उत्सृज्यमानानां गवामयने द्वादशोत्सर्जनानि । ८ । सिद्धमा त्रयस्त्रिँशात् । ९ । त्रयस्त्रिँशे ऽह्नीन्द्राय सांनाय्याय वत्सानपाकरोति । १० । पुरा वसतीवरीणां परिहरणाद्दोहयति । ११ । परिहृतासु वसतीवरीषु द्व्यहेमुत्यामाह्वयत्युपोदयँ श्वःसुत्यामुदिते । १२ । वाग्यताः प्राजापत्येन सँस्थापयन्ति । १३ । सिद्धमा सामिधेनीभ्यः । सामितूष्णीकेन चैककपालेन सामिधेनीरनुवाचयति । १४ । उपाँ-

---

13) cf. Drāhy.Śr.11.3.9, 10.
14) M2 B2 N S °स्यापयणाया°; mss. निघ्नंति.
15) mss. यास्य.
18) Ṛ V.10.120.3.
20) M2 B2 N S °दित्य, द्युर्ग्रहणा° C2 °क्वर्ग्रहणा°; cf.7.2.6.3.
22) भर्गस्ते भक्षयामि only C2; *iti* not in the mss; M2 B2 N S भक्षयतां.

**8** Cf. Āp.Śr.21.22-25.
4) C2 एकादशिनाप्रा° the oth. °नान्प्रा°; C2 °तर्धापि the oth. °तर्धापि.
4-5) cf. KS.34.1.
5) mss. °लभ्या, धेनुर्छं°, वसो; M2 °स्त्रिरुपश्चेतुभ° N °स्त्रिरुपश्चेत उभ° S °स्त्रिरुपश्चेत उभ° C2 °स्वरुपश्चेत उभ° B2 °स्त्रिपुरुपश्चेत उभ°.
7) mss. °लभ्य.
9) cf.7.2.2.25; 4.17.
14) M2 सामिधातू° S N B2 सामिधात्त° C2 स्वामितू°; 1 8.1.1-3.10, cf. 1.3.1.1.

शुदेवतस्य वपया प्रचर्याग्नये वसुमते प्रातरष्टाकपालं निर्वपति । १५ । अतप्ते प्रातर्दोहे सायंदोहमानीय समासाद्य प्रचरत्युच्चैः प्रैषवद्भ्यचाम् । १६ । आग्नीध्रभागान्ते सोमपानैश्चमसैर्दध्नस्तृतीयं भक्षयन्ति । १७ । इन्द्राय मरुत्वत एकादशकपालं मध्यंदिने समासाद्य प्रचरत्युच्चैः प्रैषवद्भ्यचाम् । १८ । आग्नीध्रभागान्ते सोमपानैश्चमसैर्दध्न इतरार्धं भक्षयन्ति । १९ । विश्वेभ्यो देवेभ्यो द्वादशकपालमपराह्णे समासाद्य प्रचरत्युच्चैः प्रैषवद्भ्यचाम् । २० । आग्नीध्रभागान्ते सोमपानैश्चमसैर्दध्नः शेषं भक्षयन्ति । २१ । पत्नीसँयाजान्ते सँस्थिते श्वःसुत्यामाह्वयति । २२ । श्वोभूते सोतुमेवोपक्रमन्ते । २३ । तेषामेतत्प्रथममुत्सर्जनम् । २४ । ततश्चत्वारि मासिमासि ' प्रागभिजितः षष्ठमूर्ध्वँ विश्वजितः सप्तमं ' ततो ऽष्टाविँशत्यहे ' ततश्चत्वारि मासिमासि । २५ । तानि चेदधिकानि स्युरमावास्यायां दीक्षेरनथ चेत्संपूरणानि द्वादश्यां द्वादश्याम् । २६ । ॥८॥

॥ इति वाजपेये द्वितीयो ऽध्यायः ॥

॥ इति मानवसूत्रे वाजपेयसूत्रं समाप्तम् ॥

---

20-21) not C2.
24) cf. sū.9, 12.
25) the last ततश्च° only C2.
24-25) The first suppression follows on the day with the 33 verses, the last day of the first "month"; it is the 33d day of the first half of the year, the first day of the first abhiplava period, a jyotis. The four next ones, on the 63d, 93d, 123d, 153d days are exactly so. The sixth suppression falls before the abhijit, on the 176th day, the last pṛṣṭhyaday. In the second half of the year they are exactly reversed. The seventh suppression follows on the viśvajit; it is the 5th day after the viṣuvat, the first pṛṣṭhya-day. The eighth falls on the 28th day, the last day of the last abhiplava period, a jyotis. The ninth until twelfth are exactly so, always the last day of a "month", they are on the 58th 88th 118th 148th day.
26) cf. Jaim.Br.2.393-396.

अथानुग्रहान्व्याख्यास्यामः । १ । सायँहोमँ वोपोदयं जुहुयात्प्रातर्होमँ वोपास्तमयम् । २ । कालेन कालं नातिक्रमेदग्निहोत्रस्य दर्शपूर्णमासयोश्चातुर्मास्यपर्वणां पशुबन्धस्याग्रायणस्य च । ३ । वर्षास्वभ्रसंघाते यद्यनस्तमिते जुहुयात्पुनरस्तमिते । यद्यव्युष्टायां पुनर्व्युष्टायाम् । ४ । न स्कन्देन्न व्यथत इति ह विज्ञायते । ५ । ऋषयो ह प्र आसन्प्रयोगिका आसँस्ते ऽर्धमासायार्धमासायाग्निहोत्रमजुहवुः । ६ । तस्माद्यायावर आमयाव्यार्तो वा सो ऽर्धमासायार्धमासायाग्निहोत्रं जुहोति । ७ । चतुर्दश चतुर्गृहीतानि सक्रुदुन्नयत्ये'का समित्सकृद्धोमः । सो ऽर्धमासाय कल्पते । ८ । होमान्स्रुच्युन्नयेत्स्रुवपूर्णाँश्चतुर्दश गार्हपत्यदक्षिणाग्न्योस्तं-थापरान् । ९ । यथाश्रुतं तथा मन्त्राहोमौ सभ्यावसथ्ययोः । १० । एतेनैव चतुर्होमेण प्रातर्होमो व्याख्यातः । ११ । षण्मासाहुते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रायणेन पशुना वाग्नये तन्तुमते ऽग्नये पथिकृते ऽष्टाकपालौ निरुप्याग्रायणं कुर्वीत । १२ । सँवत्सराहुते ऽग्निहोत्रे दर्शपूर्णमासाभ्यामनिष्ट्वाग्रायणेन पशुनाग्नये तन्तुमते ऽग्नये पथिकृते ऽष्टाकपालावग्नये वैश्वानराय द्वादशकपालं निरुप्यान्तरितान्होमाञ्जु-हुयादपि वा पूर्णाहुतिँ हुत्वा नाद्रियेत होमान् । १३ । अग्निहोत्रं दर्शपूर्णमासौ पश्वाग्रायणमिति सर्व-मवाप्नोति । १४ । आग्रायणं कृत्वाहवनीये वरं दद्याद्'गौर्वासो वाश्वस्थाने विज्ञायते । १५ । इन्द्रियेण वा एष वीर्येण व्यृध्यते यस्य पिता पितामहः सोमं न पिबेदिति । १६ । तस्माद्वृक्षाणां भोज्यानां मूलानां फलानामपि वा पूर्णपात्रं दद्यान्न त्वेव न यजेत । १७ । ॥१॥

आज्यं निर्वपति । १ । तदलाभे तैलं प्रतिनिधिस्तदलाभे दधि पयो वा ' तदलाभे यवपिष्टानि तण्डुलपिष्टानि वा । २ । अद्भिः सँसृज्याज्यार्थान्कुर्वीत । ३ । दर्भाः परिस्तरणे । ४ । तेषामलाभे पर्व-वतीभिः काण्डवतीभिरौषधीभिः स्तरणार्थान्कुर्वीत कटसीरशूषशुण्ठनलपरिवाहमूतपवल्वजवर्जम् । ५ । द्विः-प्रादेशानीध्मकाष्ठानि । ६ । अरणिश्चतुरङ्गुलोत्सेधा षडङ्गुलविस्तारा चतुर्विँशत्यङ्गुलदीर्घा । मूलाद-ष्टाङ्गुलमुत्सृज्य भूयश्चान्यत्त्र्यङ्गुलं देवयोनिरिति ख्याता तत्र मन्थेद्धुताशनम् । ७ । अरत्निमात्राः परिधयः शाखा पवित्रं च प्रादेशमात्रावलँ विपाणितलचतुर्भागस्तु कपालप्रमाणम् । ८ । तान्यष्टौ मृदा सँसृज्य गार्हपत्ये प्रथयति । ९ । एतेनैवा त्रयस्त्रिँशादा त्रयस्त्रिँशाद्ध्रसीयोह्रसीयः कपालप्रमाणँ वर्षीयो-वर्षीयः प्रत्युपकर्षः स्यात् । १० । सर्वाणि कपालानि प्रथयत्यश्वशफमात्रमिति । ११ । यदुक्तं तदव्यक्त-मु'च्चावचा ह्यश्वा भवन्ति । १२ । त्रिहायणस्यैवाश्वस्य चतुमु'ष्टिः पुरोडाशो भवति द्यावापृथिवीयो ऽपि

---

1 Cf. Baudh.Śr.28.12, 13.
6) mss. प्रा आसन्प्रायो°; r. पुरासन्प्र° ? cf. Hir.Śr.29.4.15; Baudh.Śr. 364.12.
9) mss. होमात्स्रच्यु° (N S °मां°), °त्स्रुवः.
10) mss. °थास्रुतस्तथा.
12) M2 °पौर्ण°; mss. °ग्रयणं.
14-15) mss. °ग्रयण°.
17) mss. चेव, cf.8.10.5; Baudh. Sr.367.3.
2 Cf. Baudh.Śr.28.13.
5) r. °शुष्क°, °परिव्याधकुतप°, cf. Baudh.Śr.366.9, 6.
7) mss. अरणि च°.

। १३ । एवमेवावशिष्टं पिष्टलेपं कुर्वन्ति । १४ । तृतीयाधेये नाज्यभागा इज्येते इति गौतमस्तौ न शौनसोम इति वात्स्यः । १५ । क्रियते । चक्षुषी वा एते यज्ञस्य यदाज्यभागौ । १६ । यदाज्यभागावन्तरियाच्चक्षुषी यज्ञस्यान्तरियादिति ह विज्ञायते । १७ । ॥२॥

यदि वत्सेष्वपाकृतेषु गा राजा चौरा अवाहरेरन्नाविद्येरन्प्रमीयेरन्वा कथँ सांनाय्यस्य प्रतीयादित्याहुराचार्याः । १ । प्रागर्धरात्रात्सायँदोहमाकाङ्क्षेत्प्राङ्मध्यंदिनादिति प्रातः । २ । तासाँ यद्यागछेत्तां त्रिर्विग्राहं दोहयेद् द्वितीयां द्विर्विग्राहं ' तृतीयां त्रिर्विग्राहम् । ३ । यदि सर्वा यथाम्नातम् । ४ । यदि नैवागछेत्कँ हन इति राजगृहीतासु जपेद्याः सेना इति चौरगृहीतासु '' वागग्रेगा इति नष्टासु ' यमगाथाः प्रमीतासु । ५ । एवं कृते चेदागछेत्तूष्णीं दुग्ध्वा ब्राह्मणेभ्यः पयो दद्यात् । ६ । यत्पयो ऽधिगछेत्त्रिर्विग्राहं दोहयेत् । ७ । अनधिगते चेत्पयस्यैन्द्रं पञ्चशरावमोदनं पिष्टयवागूर्वा द्रव्यँ स्यात् । ८ । विज्ञायते ह ' पशूनाँ वा एतत्पयो यद्व्रीहियवाविति । तस्मादेतज्जुह्वति । ९ । ॥३॥

पुत्रे जाते ऽश्वत्थस्य शमीगर्भस्यारणी आहरति दशाङ्गुले द्वादशाङ्गुले वा । १ । ताभ्यामग्निं मथित्वा तस्य कुमारस्य जातकर्म करोति । २ । तस्मिन्नाम कुर्यात्तस्मिँश्चूडां कारयेत्तस्मिन्नेवोपनयेत्तस्मिन्व्रतचर्यां कुर्वीत तस्मिन्भार्यामुद्वहेत् । ३ । स शालाग्निः स औपासनीयः पितुरग्नौ वा सँस्कारः । ४ । आत्मा वै पुत्रनामासीति दर्शनात् । ५ । तं ब्राह्मौदनिकं कृत्वात्रैतमरण्योः समारोपयन्ति । ६ । समारोपितं पुनर्मन्थन्ति । ७ । मथित्वा तत्रापरिमितैः क्रतुभिर्यजेत । ८ । ॥४॥

पञ्चाग्निकँ व्याख्यास्यामः । १ । सायंप्रातराधानवदग्निप्रणयनँ शुन्धनसमिन्धनपरिस्तरणपर्युक्षणँ व्याख्यातँ होमश्च । २ ॥ अग्ने सभ्य परिषद्य जुषस्व स्वाहेति सभ्ये जुहोत्यग्न आवसथ्य परिषद्य जुषस्व स्वाहेत्यावसथ्ये होमशेषम् । ३ । व्याहृतिभिर्यथाम्नातँ हुत्वोत नो ऽहिर्बुध्न्य इति सर्वकाल आग्रायणे च सभ्यावसथ्ययोर्जुहोति । ४ । प्रणीते सभ्यावसथ्यौ प्रणयति । न काम्यासु । ५ । विज्ञायते ह ' पञ्च वा एते प्राणापानसमानव्यानोदानास्तेषाँ वा एते धृत्यै गुप्त्यै पञ्चाग्नयः प्रणीयन्ते । ६ । पाङ्क्तो यज्ञो । यावानेव यज्ञस्तमालब्धः । ७ । ॥५॥

---

15) °सोम not M2.
**3** 1) mss. राजाश्चौरावा°.
3) mss. °गछतां.
5) cf. ṚV.1.81.3d; MS.II.7.7:83. 15, 16; Mān.2.3.6.4.
5-6) कँ unto चेदागछेत् not B2.
6-7) तूष्णीम् unto ऽधिगछेत् not M2 B1.
**4** 3) mss. °श्चूडा; mss. exc. B2 °मुद्वाहे°.
5) cf. Bṛh.Up.6.4.26 Mādh.
6) mss. ब्रह्मौ°, °त्रैतारण्ययोः.
**5** Cf.1.5.
4) cf.1.5.5.10.
6) B2 N S °स्त्वेषाँ M2 °स्येषाँ.

अथ प्रमायुको ऽग्नीनादधीत । १ । नतुँ न नक्षत्रं न जोषयितुं न संभारानाद्रियेत । २ । न सार्पराज्ञीरन्वाह न घर्मशिरः प्राह । ३ । ब्रह्मौदनं न पचेत् । ४ । को ह तद्वेद यच्छ्वो भविष्यतीति संभारार्थे वल्मीकवपां दर्भाँश्च न्युप्य मन्त्रानावर्तयेत् । ५ । विज्ञायते ह ' पृथिवी शमिस्तस्या एष गर्भो यदश्वत्थः । ६ । तस्मादरणी आहृत्य ताभ्यामग्निं मथित्वा " भूरिति गार्हपत्यमादध्याद्"भुव इति दक्षिणाग्निँ " स्वरित्याहवनीयं " भूर्भुवः स्वरिति सभ्यावसथ्यौ । ७ । यदि प्राक्पूर्णाहुतेः प्रमीयेत हुत्वा पूर्णाहुतिमाहिताग्निविधिना दाहयेयु'र्यद्यूर्ध्वमाग्नेयीँ सँस्थाप्य ' यद्यूर्ध्वमाग्नेय्या इष्टिसँस्थं कुर्यादम्रियमाणे चात ऊर्ध्वमपरिमितैः क्रतुभिर्यजेत । ८ । ॥६॥

प्रवसन्तमेव समीज्योपादानमेतान्सोमार्थानग्नीनुत्पाद्य यजेत । १ । इष्ट्वा वाग्नीनामुत्सर्गो न वा श्रुतिप्रामाण्यात् । २ । वीरहा वा एष देवानाँ यो ऽग्निमुत्सादयत इति । तस्मान्नोत्सृजेत् । ३ । पूर्वेष्वग्निषूत्तरान्सहारणिकान्भँवतं नः समनसावित्यनुप्रहृत्याग्नये ऽग्निमते ऽष्टाकपालं निर्वपेत् । ४ । ॥७॥

अग्निहोत्राण्यग्निहोत्रेणैव यजेत न सोमैर्न हविर्यज्ञैः । १ । तस्याग्रायणं । गार्हपत्य ओदनँ श्रपयित्वाग्रायणदेवताभ्यो हुत्वा प्राश्नीयादपि वा नवेषु गामुत्सृज्य तस्याः पयसाग्निहोत्रं जुहुयात् । २ । सा दक्षिणा वत्सो वा प्रथमजः । ३ । ॥८॥

वसन्ते वेणुयवानाँ सौम्यं चरुं निर्वपेत् । १ । ग्राम्या वा अन्या ओषधय आरण्या अन्याः । २ । यद्योषधयो न पच्येरन्नपि वा नवेषु गामुत्सृज्य तस्याः पयसाग्निहोत्रं जुहुयात् । ३ । सा दक्षिणा वत्सो वा प्रथमजः । ४ । ॥९॥

पयसा जुहोति यवाग्वा वाज्येन वा दध्ना वा तिलैर्वा तण्डुलैर्वा पुष्पैर्वाद्भिर्वा माँसेन वा सोमेन वा । १ । दध्याज्यतिलतण्डुलपुष्पफलसोमानामधिश्रयणं न स्यादभिघारणं च । २ । नासोमयाजिनः सोमं जुहुयात्फलैररण्यवासिनां बदरकुवलकर्कन्धुवर्जम् । ३ । यदि सर्वं न विन्देच्छुन्धनादि यथालाभं कृत्वाहवनीये " सत्ये सत्यं जुहोमि स्वाहेत्येवं ब्रूयान्न त्वेव न यजेत । ४ । ॥१०॥

पञ्चदशदाक्षायणयज्ञेन स्वर्गकामो यजेत । १ । तत्रोभाविज्याकालौ द्वे पौर्णमास्यौ द्वे चामावास्ये

---

**6** 2) M2 B1 न ऋतु B2 N S न रुतुर्न; mss. °यितुर्न.
3) cf.1.5.3.14b, 12.
4-5) mss. पचत्को.
5) mss. °श्चा.
6) Hir.Śr. इयं वै शमी तस्या etc.
8) mss. °सँस्थ.
**7** 1) mss. °न्तमेवमी° r. °न्तैन समी° ?
3) M2 विरह N विरहा; cf. Pañc.Br. 16.1.12.
4) cf.3.3.4.
**8** 1) B2 N S °होत्रायण्य°.
**9** 3) mss. यद्योषयो.
**10** 1) mss. यवाग्वा आज्येन.
3) mss. °ाररण्य°.
**11** Cf. Āp.Śr.3.17.4-11.

। २ । तत्र या पूर्वा पौर्णमासी सानुमतिर्योत्तरा सा राका ' या पूर्वामावास्या सा सिनीवाली योत्तरा सा कुहूः । ३ । तास्वाग्नेयः पुरोडाशो । ऽग्नीषोमीयो द्वितीयः पूर्वास्यां पौर्णमास्यामैन्द्राग्नी ऽमावास्याया- मैन्द्रं दध्युत्तरस्यां पौर्णमास्यां मैत्रावरुण्यामिक्षोत्तरस्याममावास्यायाम् । ४ ।। इन्द्रं वो विश्वतस्पर्या" ते शुष्म इति दध्न " आ नो मित्रावरुणा " प्र बाहवेत्यामिक्षाँ वैश्वदेवं च वाजिनम् । ५ । हिरण्यं दक्षिणा । ६ । ।।११।।

अथ यूपावटस्य विधिं व्याख्यास्यामः । १ । स्थूलः कुब्जो बहुलो विपुलो व्यावृत्तः कुटिस्कन्धः सृककुब्जो गलुलः शुष्काग्रो वल्ल्यावेष्टितः सुषिरो लोहितो लयजग्धो घुणजग्धो ऽल्पसारो ऽम्बुसार इत्यनिष्टाः । धनुःप्रकारो ऽनुपूर्व्या समो बहुशाखो बहुपर्ण इति प्रशस्ताः । २ । एतेषामेवानुपूर्व्यात्प्रचारान् व्याख्यास्यामः । ३ । मरणहृद्रोगाबाधो वर्षात्यय । आगारं दाहेनास्य नश्यति । ४ । प्रजा युवमरणिका भवन्ति । कुष्ठो गण्डमाला श्रामयाव्यः । ५ । श्राद्धकल्पानिति पूर्वेषूत्तरेषु ' प्रतिष्ठाकामँ योगक्षेमं ब्रह्मवर्चसँ स्वर्गगमनमित्युत्तरेषु ' सर्वेषु वापि स्वर्गगमनम् । ६ । ।।१२।।

अथ यूपस्य छेदने वक्ष्यामः । १ । प्राञ्चं पातयेत् । २ । यद्यूर्ध्वमुत्पतेत्पत्न्यन्यस्मिन्मनः करिष्यतीति विद्याद्यदि मूले सुषिर उदराबाधो यदि तले शिरसो यद्यनुवेष्टितः पार्श्वाविबाधो । यद्यग्निष्ठा विच्छिद्येत प्रमायुको यजमानः स्याद्यदि पृष्ठ्या पत्नी यदि दक्षिणा ज्येष्ठः पुत्रो यद्युत्तरानुज्येष्ठो यदि दक्षिणपूर्वा ब्रह्मा यदि दक्षिणापरोद्गाता यद्युत्तरापरा होता यद्युत्तरपूर्वाध्वर्युः । ३ । यजमानमनाम्नातँ वा जुहुयात्त्रातारमिति काजवं " त्वं नो अग्ने " स त्वं नो अग्न इत्यनाम्नातम् । ४ । यदि यूपावटे खायमाने ऽस्थि- भस्मतुषकपालकेशा वा विद्येरन्निदमहँ यज्ञस्य दुरिष्टं निष्क्रन्तामीत्युत्करे निवपेदन्यत्र वा । ५ । नातिस्थूलः कार्यः ' क्षुधं प्रजानीयुर्नो ऽत्यणुरुभयमेवान्तरा यज्ञेन वै देवा अनुक्रमिष्यामः । ६ । यजमानस्याङ्गुलिपरिग्रहो रशनाबन्धने । शुल्बेन तिर्यङ्निमाय न शुल्बमङ्गुलिपर्वभिर्मिमीते । ७ । अन्ताभ्यामङ्गुलिपर्वणि दशभाग- मधस्ताद्रशनारत्न्यन्तरे लक्षणस्यापचय । एवमेवोपरिष्टाद्रशनारत्न्यन्तरे लक्षणस्यापचयः । ८ । कुष्ठ- संमितं खरं करोति । ९ । चात्वालकर्म व्याख्यातम् । १० । यद्यवदाय पुनरुद्ध्रियेत प्रमायुको यजमानः स्यात् । ११ । पुनरन्यथावस्यनिदं जपेन्माँ यज्ञँ हिँसिष्टमिति । १२ । पञ्चभागोपरा यूपा भवन्त्युत्तरा षड्वा विभज्यन्त आ द्वादशरत्नेस्त्रिरत्निरित्युत्तरेषाम् । १३ । ।।१३।।

---

5) cf. MS IV.11 4:170.9-12; 2: 166.11-14; वो not in the mss.

**12** 2) cf.1.8.1.4; B1 गुलुलः, cf. गडुलः; mss. वल्या°, लया°, प्रकारो; r. °पूर्व्यतमो ?

4) mss. आगारदा°, नश्यंति.

5) mss. °रणीका; M2 S कुष्टाड° N कुंष्टांड° B2 B1 कुष्टांड°.

6) mss. °क्षेम.

**13** 3) mss. °वाधो twice.

4) mss. यजमा°; M2 काजवव B1 काजव, r. याजमानं ?? cf. MS.IV. 12.3:182.15; Mān.3.1.6.

6) r. देवाननु° ?

7-8) mss. °ते ताभ्याम°.

8) mss. °पर्वाणि; cf. 1.8.2.23-28.

12) mss. °वास्यमिदं; cf. MS.I.2.7: 16.9.

अलेखो होतुश्चमस उत्सृष्टो ब्रह्मणः स्मृतो ऽवमृष्ट उद्गातॄणां पार्श्वावमृष्टो यजमानस्यैकलेखो मैत्रावरुणस्य द्विलेखो ब्राह्मणाछँसिनस्त्रिलेखः पोतुर्मयूखो नेष्टुरजपादो ऽछावाकस्याभ्रिराग्नीध्रस्य । १ । ॥१४॥

अथ सावनस्य पशोरुद्धृतवपावदानस्य विभागँ व्याख्यास्यामः । १ । हनू सजिह्वे प्रस्तोतुः कण्ठः काकुदाग्नीध्रस्य श्येनँ वक्ष उद्गातुर्दक्षिणं पार्श्वमध्वर्योः सव्यं प्रतिप्रस्थातुर्दक्षिण ऊरुर्ब्रह्मणः सव्यः सदस्यानामुभौ मतस्नौ नेष्टुरछावाकस्य चौष्ठ एनयोः साधारणः पादौ गृहपतेरवाक्स्कन्धाश्च मणिकास्तिस्रश्च कीकसा [अर्धँ वैकर्तं च] होतुस्तिस्रश्च कीकसा अर्धँ वैकर्तं चोन्नेतु[स्तिस्रश्च कीकसा] अर्धँ वैकर्तं च शमितुः । २ । तच्छमिता ब्राह्मणाय दद्याद्यो ऽब्राह्मणः स्यात् । ३ । जाघनी पत्न्यास्ताँ सा ब्राह्मणाय दद्यात् । ४ । शिरः सुब्रह्मण्यस्य । यच्छ्वःसुत्यां प्राहास्याजिनम् । ५ । ता एवैताः षट्त्रिँशतमेकपदा यज्ञँ वहन्ति षट्त्रिँशदक्षरा बृहती बार्हताः पशवो बार्हतः पुरुषो य एवँ विद्वान्विभजेत् । ६ ।... यथैव पिशाचाः सौनिका वा...तादृक् । ७ ।... ह्यवदाय वायव्यायामानुषः पुरोवाच । तत इदं मनुष्या विदुः । ८ । ॥१५॥

षड्ढोताग्रहपाशुक्चारम्भणीयादक्षिणादानमिति पराङगभूतासु निवर्त्येरन् । १ । पृष्ठ्याबर्हिः संनह्यातिथ्यबर्हिः शुल्बप्रभृतिमन्त्रवत्संनह्यतीध्मं च तत्परिधिम् । २ । पयस्या चेदनूबन्ध्या सवने स्वरुहोमः । ३ । अवभृथादुदेत्य यूपानुदेशः । ४ । तिस्रः पयस्या इत्येके । ५ । यः कामयेत सर्वो मे यज्ञः स्यात्सरसा इति स एतास्तिस्रो वशा आलभेत यज्ञस्य सर्वत्वायाथो सरसत्वाय मैत्रावरुण्यै च । ६ । उत्तरतो गार्हपत्यस्य पात्रेभ्यः सँस्तीर्य पात्राणि प्रयुनक्ति । ७ । स्रुक्स्रुवमाज्यस्थालीं दोहपात्राणि चमसान्सँसाद्य प्रोक्ष्य पात्राणि दोहं दोहयित्वाज्यं निरुप्य पर्यग्निं कृत्वा स्रुक्स्रुवं प्रमृज्योत्पूय पयस्यामभिघार्योद्वास्यालंकृत्य पश्चादुत्तरवेद्याः सादयति । ८ । आज्यभागाभ्यां प्रचर्य पयस्ययानूबन्ध्यादेवता यजत्याज्येन देविकाः । ९ । इडान्तं कर्म । १० । ॥१६॥

---

**15** Cf. Ait.Br.7.1; Gop.Br.3.18; Āśv.Śr.12.9.
1) B2 N S °धृतोवपावदा° (M2 °पादा°).
2) mss. कंटं ककुद°, चत्तुरु°, °मुभौ नौसव नेष्टुरुरश्वामुक्रवोष्टूचनयोः साधारणौ तौ गृहपतेरवँस्कंधाः; cf. for the whole chapter Ait.Br. 7.1.
3) mss. °द्य ब्राह्मण.
4-5) mss. दद्याछिरा सुब्रह्मण्य य छिरः सुत्याहवाजिनं.
6) mss. एवाताः.
7) M2 शोनिका B2 N S सैनिका B1 सौनिका; r. e.g. अथ ये ऽतो ऽन्यथा- - - -वा विमथ्नीरँस्तादृक्तत्.
8) mss. वायव्यायमा°; cf. Ait.Br. गिरिजाय बाभ्रव्याया°; r. तामु ह etc.; probably there is left out more.

**16** 1) S °ग्रपा°.
2) mss. °त्परिधि.
4) mss. °दुन्नेत्य.
6) mss. सर्वत्वायाद्यासर°; cf. MS.IV. 8.6.
8) mss. चमसँसाद्य प्रोक्.
9) mss. पयस्यायानु°.

अथोभायाजिकल्पं कामलायिनः समामनन्ति । १ । वसन्ते वैश्वदेवेनेष्ट्वा ग्रीष्मे पुनर्वैश्वदेवेन यजेत । २ । वर्षासु वरुणप्रघासैरिष्ट्वा शरदि पुनर्वरुणप्रघासैर्यजेत । ३ । हेमन्ते साकमेधैरिष्ट्वा शिशिरे पुनः साकमेधैर्यजेत । ४ । तत्रोभाविज्याकालौ । ५ । श्वोभूते शुनासीर्यँ सद्यो वा । ६ । अथ परिप्लवैर्यजेत । तस्य हविषामेकैकेनाहरहो यजेत । ७ । प्रसाद्यस्कैर्यजेत । ८ । प्रकारान्तरे प्रातराहुतिँ हुत्वा पूर्वाह्णे वैश्वदेवेन यजेत मध्याह्ने वरुणप्रघासैरपराह्णे साकमेधैः । श्वोभूते शुनासीर्यँ सद्यो वा । ९ । अथ समस्तैर्यजेत । १० । श्वोभूते वैश्वदेवँ श्वोभूते वरुणप्रघासा द्व्यहँ साकमेधाः श्वोभूते शुनासीर्यँ सद्यो वाञ्जसा वा । ११ । एष यथा स्वर्गलोकमेति यः समस्तैश्चातुर्मास्यैर्यजेत । १२ । स एतैरिष्टयन्तैः पश्वन्तैः सोमान्तैर्वा यजेत । १३ । अपि वा वरुणप्रघासान्ते वैश्वानरपार्जन्यादीनां च विँशतिहविषामिष्टिं निर्वपति । १४ । त्र्यम्बकपुनरुक्तवर्जँ समानो ऽवभृथः । १५ । पितृयज्ञश्च साकमेधिकस्तन्त्रावयवः । सद्यः समानुयात् । १६ । ॥१७॥

व्याख्यातो ऽश्वमेधः पुरुषमेधश्च । सर्वमेधँ व्याख्यास्यामः । १ । तस्याहर्गणस्त्रीण्याश्वमेधिकानि पञ्च पौरुषमेधिकानि वाजपेयो ऽप्तोर्यामः । २ । यदहरप्तोर्यामस्तदहः सर्वाणि । ३ । सर्वाणाँ वनस्पतीनां पुरस्तात्स्विष्टकृतो रसं जुहोत्येष एव निरर्गलः । ४ । दक्षिणाकाले सर्वस्वं दद्यात् । ५ । सकुल्यानामन्त्यात्मन्यग्नीन्समारोपयेत् । ६ । विज्ञायते हैतद्वा अग्निधानँ हस्तस्य यत्पाणिस्तंस्सात्पाणौ समारोपयेत् । ७ । विज्ञायते ह ' यस्य वा अमुष्य दिशि यद्यग्नयस्तामभिमुखो जपेत् । ८ । विज्ञायते ' यत्र वा एतत्क्व चं यजमानँ सन्तँ यज्ञस्याशीर्गच्छेदिति श्रुतिः । ९ । तत्र यानि साँस्पर्शिकानि न तानि क्रियेरन्धर्मपात्राणि । १० । देवता द्रव्यमिति सामान्यसंनिपाते ऽक्षरसामान्याद्विशेषः । ११ । ॥१८॥

अथाहिताग्नेः प्रमीतस्य विधिँ व्याख्यास्यामः । १ । अभिवान्यान्यस्या गोर्वत्सेन या गौर्दुह्यते साभिवान्या गौः । २ । दुग्धमधस्तात्स्रुग्दण्डे समिधं धारयमाणो हुत्वा जुहोति । ३ । यदि नक्तं प्रमीयेत प्रातराहुतिं प्रपाद्यापरपक्षे प्रमीयेताग्निहोत्रदर्शाभ्यां पूर्वपक्षँ संपादयेत् । ४ । यदि दक्षिणायने प्रमीयेताग्निहोत्रेण दर्शपूर्णमासाभ्यामिष्ट्वा शरीरदाहादहतेन वाससा पादतोदशेन प्रच्छाद्य " प्रेहि प्रेहीति दक्षिणपूर्वस्यां दिशि

**17** 1) mss. अथ ओँया°; r. कामकायिनाः ?
6-7) mss. वाद्य परि°.
7) M2 °नात्यवह the oth. °नात्थवह.
9-11) श्वो° unto साकमेधा: not M2 B2.
14) mss. °पि वरु°; B2 N B1 °प्रधानांतं S °प्रधानांतं M2 °प्रपांनांतं.
**18** Cf. Āp.Śr.20.25.3-21.
2) M2 प्तोर्यामाणा the oth. प्तोर्यामाणो; ऽप्तोर्यामा also possible, cf. 2.3.2.28. etc.
4) mss. सर्वा°.
7) not M2 B1.
8) mss. वामुष्य दिश्य.
11) mss. अक्षर°, r सँस्कार° ?
**19-23** Cf. *W. Caland* Die altindischen Todten- und Bestattungs-gebräuche, Verh. Kon. Akad. Lett. N.R. I 1896.
**19** 2) mss. exc. B2 भि अन्यस्या, cf. Āp.Śr.9.11.5, 8.
3) mss. हुत्वा.
4) after प्रपाद्य probably a hiatus; mss. °होत्रं°.
5) cf. MS.IV.14.16:242.12.

नाययेत् । ५ । चक्रीवता वाहयेच्छिरमग्रतो नयति । ६ । तस्य वर्त्मानुनयन्त्यग्रतो विहारान्नाययेद्यज्ञपात्राणि पश्चाद्‌ज्ञातयो ऽन्वेयुः । ७ । पश्चाच्चत्वार ऋत्विज उष्णीषिणो ऽहतानि वासाँस्यपसव्यमावृत्य दक्षिणपूर्वस्यां दिश्यग्निं प्रणीयेष्टिं कुर्वन्ति । ८ । सोमाय पितृमते षट्कपालः पुरोडाश । उत्तानानि कपालानि । तूष्णीं तमनवेक्षमाणाः प्रचरेयुर्यथा पित्र्यायाम् । ९ । लुप्येत याजमानँ सपत्नीकमाँविर्भूयासमुत्तरमिति चे॑डान्ता संतिष्ठते । १० । अग्रेण गार्हपत्यमपरेणाहवनीयँ यजमानमात्रीं कर्षूं खात्वा तस्यां चितिं चिन्वीत । ११ । कृष्णाजिनमास्तीर्य तिलैरवकीर्यातीर्थेन शरीरं प्रपाद्य चित्यामारोप्य तिलैरवकीर्या"सौ स्वर्गाय लोकाय स्वाहेति मनसा पूर्णाहुतिं जुहुयात् । १२ । छिद्रेषु हिरण्यशकलान्यस्यत्य्"चे त्वेति दक्षिणस्मिन्कर्णछिद्रे " रुचे त्वेति सव्ये " भासे त्वेति दक्षिणस्मिन्नक्षिछिद्रे " ज्योतिषे त्वेति सव्ये " ऽभूदिदमिति दक्षिणस्मिन्नासिकाछिद्रे " ऽग्नेर्वैश्वानरस्येति सव्ये " ऽग्निस्तेजसेत्यास्ये । १३ ॥ हिरण्यगर्भ इत्यास्ये जुहुयाद्व्याहृतिभिश्च । १४ । आसेचनवन्ति पात्राणि पयसः पूरयित्वा दक्षिणस्मिन्नँसे जुहूँ सहप्रस्तराँ सादयति ' सव्य उपभृतमु॑रसि ध्रुवां ' मुखे ऽग्निहोत्रहवनीं ' नासिकयोः स्रुवौ॑ललाटे प्राशित्रहरणँ ' शिरसि कपालान्याज्यधानीँ वेदं चा॑स्ये सहिरण्यशकलं पुरोडाशं ' कुक्ष्योः सांनाय्यधान्यावु॑पस्थे ऽरणी ' वक्षसि शम्यां ' पार्श्वयोः स्फ्योपवेषावु॑दर इडापात्रीमू॑र्वोरुलूखलं मुसलं॑पादयोः शकटमन्तरोरू इतराणि यज्ञाङ्गानि । १५ । अग्निचितिश्चेदेकविँशतिमिष्टकाः कृष्णाः समन्तादुपदध्यादथ वा लोहिताः । १६ । अजां गाँ वैकवर्णां दक्षिणापरस्यां दिशि शवनिर्हरणस्य प्रथिना घातयेत् । १७ । तस्या वपामुत्खिद्य मुखं प्रछाद्य तिलैरवकीर्याङ्गेष्वङ्गान्यभिविदधाति दक्षिणेषु दक्षिणानि सव्येषु सव्यानि शिरसि शिरश्चर्मणा प्रछाद्य । १८ । यदि तां न घातयेद्गार्हपत्ये पयः श्रपयित्वा तस्य सन्तानमुद्धृत्य मुखं प्रछाद्य तिलैरवकीर्योलपराजीभिस्तिसृभिरादीपयेत् । १९ । यदि गार्हपत्यात्प्रथमः शरीरं प्राप्नुयाद्देवलोकं गमिष्यतीति विद्याद्यदि दक्षिणाग्नेः पितृलोकँ यद्याहवनीयाद्ब्रह्मलोकँ यदि युगपत्सर्वाँल्लोकान्गमिष्यतीति विद्यात् । २० । सँसृष्टेष्वग्निषु छन्दोगस्त्रिः प्रथमँ साम गायति " नाके सुपर्णमिति " त्वेषस्ते धूम ऋण्वतीति धूम उदिते " ऽग्ने मृड महं असीति प्रज्वलिते । २१ । हिरण्येत शकलेन परिलिखे॑त्ताँ हिरण्यलखां मनसाध्वर्युस्त्रिः परिषिञ्चेद्यथा पित्र्यायाम् । २२ ॥ तूष्णीं प्रतिपरीत्य पादतो ऽवस्थाय " नमो महिम्न इति पञ्चभिरुपतिष्ठते । २३ । ॥१९॥

---

9) M2 तमत्र° S तत्रम° B2 N तंत्रम° B1 तमत्रम°.

12) cf. ŚBr.12.5.2.15; mss. °कीर्य-ती°, cf. 3.8.4; Lāṭy.Śr.3.4.5.

13) mss. °न्कर्णे°, °न्नासिकाँ°; cf. 6.1.7.26.

14) cf. 3.5.18.

15) mss. °चनेवंति, सादति, अरणीँ; B2 N S °दरेडां° M2 °दरेसहेडां°; mss. °तरोरू.

16) M2 S B1 °चितश्चे° B2 N °चिचितश्चे°; mss. °दथ लोहितानाम°.

17) mss. प्रथिनां, cf. ṚV.1.8.5, or r. प्रथितां.

21) mss. °ष्वग्नि; cf. 4.3.22; 1.5.3.4; ṚV.4.9.1; mss. महम°.

22) mss. शकलं परिलिखेति ताँ.

23) mss. प्रपरीत्य; cf. 3.5.18.

अनाहिताग्नेः प्रमीतस्य विधिँ व्याख्यास्यामः । १ । शालाग्निना दहनं निर्मन्थेन वा । २ । बालश्चेत्प्रमीयेत " पृथिवी शरीरमसीति मनसा भूम्याँ शरीरं निखनेदरणी च । प्राक्चूडाकरणात्स्नात्वा सद्यः शौचँ यज्ञाध्ययनानि च । ३ । व्रतोपेतश्चेत्प्रमीयेत व्रतँ विसृज्य काष्ठानां चितिँ संपूर्यापसव्यमादाहं कृत्वानपेक्षमाणाः प्रत्यायन्ति । ४ । स्थिरोदकेनोपस्पृश्य यत्रौषधयो बहुला अभिजायन्ते तत्रोपविश्य यमगाथां गायन्ति । ५ । दूर्वाकाण्डप्रवालानाँ शमीवटापामार्गप्रवालानां मूर्धनि कृत्वा गवां पृष्ठतो ग्रामं प्रविशेयुः । ६ । गोष्ठद्वार्यक्षतमश्मानमग्निमुपस्पृश्य प्रविशेयुः । ७ । बहिर्द्वारि कर्षूं खात्वाश्मानं प्रतिष्ठाप्य पयोऽद्भिः सँसृज्य प्रेतस्य नामगोत्रे गृहीत्वा"त्र पिब स्नायस्वेति च ब्रूयाद्यथाकालं च पिण्डनिधानं । द्वादशेऽहनि श्राद्धं कुर्वीत । ८ । बहूनन्नविकारानुपकल्पयेदेकस्यैकान् । ९ । उद्दिष्टं कुर्यान्नाग्नौ कुर्यात् । १० ॥ अभिरम्यतामिति विसर्गो । मासिमासि नियतं ब्राह्मणं भोजयेदा सपिण्डीकरणात् । ११ । ॥२०॥

देशान्तरस्थे प्रेते संग्रामहते वा शरीरमाहृत्य विधिना दाहयेत् । १ । यदि तन्न विन्देदस्थीन्याहृत्य तैः पुरुषाकृतिं कृत्वा मधुसर्पिषाभ्यज्य चित्यामारोप्य विधिना दाहयेत् । २ । यदि सर्वं न विन्देदिष्टं कृत्वा कक्षमादीपयेद्यज्ञपात्राणि च । ३ । सर्वे ज्ञातय उदकं कुर्वन्ति । दौहित्रानप्येके । ४ । सव्यकनिष्ठिकया दर्भान्तर्हितयाँमुष्मै प्रयच्छामीत्युदकान्ते ऽञ्जलिं निनयेदेकमेकस्यां चतुश्चतुर्थ्यां सप्त सप्तम्यां दश दशम्याम् । ५ । दशरात्रमाशौचवतां गुप्ताशनँ ' संचयनं च चतुर्थ्याम् । ६ । अयुग्मान्ब्राह्मणान्भोजयेत् । ७ । दशादमवकाँ शमीँ वस्त्रावकृत्य च हरिद्रं क्षीरोदकेनास्थीन्यभिषिच्य सव्यकनिष्ठिकया पलाशवृन्तेन चास्थीनि पत्रपुट प्रास्यति । ८ । दक्षिणपूर्वस्यां दिशि कर्षूं खात्वा " वागिति निवपेत् । ९ । दक्षिणां ददाति दश धेनूर्दशानडुहो दश वासाँसि दश काँस्यानि । १० । प्राणापानाभ्याँ वा एते वृध्यन्ते ये मृताय कुर्वन्ति । ११ । तस्मात्सँवत्सरं तपश्च योगशीलः स्यात्षण्मासमित्येके । १२ । पितरं भ्रातरमुपाध्यायँ वा याजयित्वानुलिप्यते । १३ । एवं कृते चेदागच्छेदग्नीनुत्पाद्यायुष्यैरिष्ट्वात ऊर्ध्वमपरिमितैः क्रतुभिर्यजेत । १४ । ॥२१॥

अशीत्यर्धँ शिरसि दद्याद्ग्रीवायां तु दशैव तु ।
बाह्वोस्तु शतं दद्यादङ्गुलीषु दशैव तु ।
उरसि विँशतिं दद्यात्त्रिँशतिं जघनोदरे ।
अष्टार्धँ वृषणयोर्दद्याद्द्वादशार्धं प्रजनने ।

**20** 3) Cf. MS.IV.13.4:203.11.
5) mss. बहुलाभि°.
8) mss. °त्वाश्मशानं.
**21** 6) B2 N दशरात्रमामाशौ°.
7) r. °जयेद्दशाहम् । ७ । अवकाँ ?
8) mss. °वकृतं.
13-14) mss. न लिप्यत्येवं.
14) mss. °ग्नीमु°.

**22** mss. exc. S शते; mss. जघनोत्तरे ॥ अध्यर्धँ, प्रजनने तथा; cf. Śāṅkh.Śr.4.5.19-21.

ऊर्वोस्तु शतं दद्यात्षष्टयर्धं जानुजङ्घयोः ।
पादाङ्गुलीषु दशैव एष प्रेतविधिः स्मृतः ॥२२॥

पत्यौ प्रेते ऽनग्निकायायाज्या स्त्रीति शाकल्यः । १ । सा कथं पञ्चभागं परिचरेत्परिचर्ययेत्याह मारुकः । २ । यदि विचारिता सुव्रता स्यादध्वर्युः पत्नीमनुब्रूयादावसथ्यमिमं परिचरेत् । ३ । यदि वित्ता सुव्रतेति चित्रसेनो वात्स्यायन आचार्यः प्रेतपत्न्या विचारे । ४ । पतित्वे प्रयुक्ता तद्व्रता तद्दुःखा तदाचारा मलदिग्धैकवेणी शुचिवासा । ५ । नोत्सवेषु गछेन्नाकाले स्नायान्नं हृष्येदे'ककालमश्नीत ' परिचरेच्छ्वश्रूँ श्वशुरं गुरुम् । ६ । सुगन्धस्रग्विवर्जितावसथ्यं परिचरेत्पाकयज्ञधर्मेण । ७ । पौर्णमास्याममावास्यायामाग्नेयः स्थालीपाकः सायंप्रातर्होमः । पर्वकाले चेमा देवता यजेत सोमं त्वष्टारं देवानां पत्नी राकाँ सिनीवालीमग्निं गृहपतिम् । ८ । आज्येनैव जुहुयात् । ९ । सहावदेतौ मिथुनौ संभवतः सहाग्नीनाधत्तः सह प्रजाः प्रजनयतः । १० । पूर्वो यजमानस्य लोको ऽपरः पत्न्याः । ११ । दक्षिणार्ध्या यस्मात्प्रोषितस्याशक्तिवतो पत्नी व्रतं धारयेत्तस्मादर्धभागिनी भवति । १२ । याज्याः स्त्रियो ' ऽर्धभात्पत्नी यज्ञे यजमानस्य । १३ । यदाहवनीये जुहोति तदिष्टँ यज्ञँ यजमानस्य ' गार्हपत्ये हुतं पत्न्याः । १४ । समवाये च " सं पत्नी पत्या सुकृतेषु गछतामिति । १५ । सह संबन्धदर्शनान्मिथुनस्य स्त्रिया विकृतत्वान्मन्त्रब्राह्मणकल्पेष्वेवमेव दर्शयति श्रुतिः । १६ । तत्रैके मृतां पत्नीँ शालाग्निना दहन्ति निर्मन्थेनान्ये सर्वैरग्निभिरपरे । तन्न सूक्तम् । १७ ।

यो दहेदग्निहोत्रेण स्वेन भार्यां कथंचन ।
स स्त्री संपद्यते तेन भार्या चास्य पुमान्भवेत् ॥ १८ ।

गार्हपत्यमुपसमाधाय तस्मिन्नुखामादधीत । १९ । तप्तायां कार्पासं गोशकृच्चूर्णं मुञ्जावलोपँ शणँ शरेषिकाः क्रमुकँ सर्पिः क्षिप्रमग्निजनन्या वाप्यौख्यमग्निमवतारयेत् । २० ॥ या ते अग्ने योगवती प्रिया तनूः स्वर्शोखाराद्वाखात तयेद पात्रमारोहति तस्मै ते नमः स्वाहेति हुत्वौख्येन विधिना दाहयेत् । २१ । अथ यदि यजमानः पूर्वं प्रमीयेताधानानुपूर्वेण पञ्चधाग्नीन्विहृत्यावसथ्यः पत्न्यै प्रदेयः । २२ । आवसथ्यश्चेन्न स्याद्गार्हपत्यात्पञ्चभागः प्रदेयः । २३ । नारणी स्त्रियो ह्येवापत्याः । २४ । तमग्निमुपसमाधायाँयं नो अग्निर्वरिवस्कृणोत्विति भूषणानि निष्टपेयुः । २५ । निष्टप्तेषु

**23** 1) mss. शाकल्याः (S °ल्या).
3) r. °थ्यमियं ?
3 4) सुव्रता unto वित्ता not S.
4) mss. विता सुव्रतानीति.
5) mss. °वेश्यः.
6) mss. °मश्नुते.
10) r. सहैव हैतौ ?
12) B2 दक्षिणार्धा ऽयस्मा° the oth. °र्धाँयस्मा°; mss. °शक्तु°.
13) mss. याज्या.
15) cf. 1.3.5.5.
16) M2 B1 स्त्रिया विकृतस्य स्त्रिया; mss. दर्शयतीति.
17) mss. सूक्त्य.
20) mss. तप्तया कार्यामं, °लोम; cf. 1. 5.3.1.
21) r. e.g. स्वर्षुखद्वाराख्याता तयेदं पात्रमारोह.
22) mss. °धानु°.
24) mss. द्वयेवापत्न्यस्त°.
25) cf. 2.4.5.12.
26) mss. प्रातक्वाः (M2 °क्वां).

विश्वं जातँ विश्वं जनित्रँ वैश्वानरँ विश्वकर्मन्हुवेम ।
सभ्यावसथ्यौ बहुधा निलीनौ योषाग्नयः संभवन्ति प्रातर्काः ॥
स्वाहेति जुहोति । २६ । स्वयमनुगते सर्वं आयन्ति । २७ ॥ ओजो ऽसि सहो ऽसि बलमसि भ्राजो ऽसीति स्वानिस्वानि भूषणानि पुनरग्निकाले शालाग्नौ निष्टपेयुः । २८ । यस्ततो ऽभिसंक्रामेत्तमग्निमुपसमाधाय परिचरेत् । २९ । मृतायां याम्यश्चरुः सौम्यो नैर्ऋतो वा । ३० । ॥२३॥

अथातस्त्रयोदशे दिवसे त्रिपक्षे सँवत्सरे वृद्धौ वा श्राद्ध एकोदपात्रस्य सपिण्डीकरणकल्पँ व्याख्यास्यामः । १ । पश्चादग्नेः समेषु दर्भेषु चत्वार्युदपात्राणि प्रयुनक्ति । २ । तत्रैकं प्रेतीयं पात्रं त्रीणि पितृभ्यः । ३ । तत्प्रेतपात्रं पितृपात्रेष्वासिञ्चति " ये समानाः समनस इति द्वाभ्याम् । ४ । एवमेव पिण्डपितृयज्ञेन विधिर्व्याख्यातः । ५ । ॥२४॥

अथातः संन्यासविधिँ व्याख्यास्यामः । १ । गृहस्थे प्रयोगो । ऽपत्यमुत्पाद्य दृष्ट्वापत्ये ऽपत्यानि वा तेषाँ वृत्तिं कल्पयित्वा गुणवति पुत्रे कुटुम्बमावेश्याथास्याग्निविनियोगः । २ । अग्नये पथिकृते ऽष्टाकपालमग्नये वैश्वानराय द्वादशकपालं निर्वपेत् । ३ । व्याख्यातः प्रयोगः सिद्धं निर्वपणम् । ४ । दक्षिणाकाले सर्वस्वं दद्यात् । ५ । सकुल्यानामन्त्र्यात्मन्यग्नीन्समारोपयेत्सखा ह्यग्निर्वै साक्षी सुकृतस्य दुष्कृतस्येत्ययमर्थः । ६ ॥ अयं ते योनिर्ऋत्विय इत्याहवनीये गार्हपत्ये दक्षिणाग्नौ चात्मानं प्रतापयेत् । ७ । सर्वाणि यज्ञपात्राण्यन्तर्वेदि पुरुषाकृतिं कृत्वोलपराजीभिस्तिसृभिरादीपयेत् । ८ । अद्यात्र त्रय्या वाचा वदति । ९ ॥ यो नो अग्निर्मयि गृह्णामीत्याहवनीयाद्गार्हपत्याद्दक्षिणाग्नेश्च भस्ममुष्टिं गृह्णाति । यथायं भस्ममुष्टिर्दिग्भ्य आहृतो दिग्भ्य एव गछत्येवम् । १० ॥ अथ भवेत्यन्ते ऽपिविध्यत्यनपेक्षमाणो व्रजति । ११ । यत्सायं प्राश्नाति सो ऽस्य सायँहोमो यत्प्रातः सो ऽस्य प्रातर्होमो यद्दर्शे तद्वा दर्शँ यत्पूर्णमासे तत्पौर्णमास्यम् । १२ । यन्नवस्याश्नाति तेनास्याग्रायणमवाप्नोति । यद्वसन्ते केशश्मश्रु वापयते सो ऽस्याग्निष्टोमः । १३ । एष संन्यासो । ऽरण्यँ व्रजति मूलफलभक्षो ऽत्यन्तभैक्षभक्षो वा । १४ । अत ऊर्ध्वमग्निप्रवेशनँ वीराध्वानमनाशकँ वा वृद्धाश्रमँ वागछति । १५ । न पुनरागछति । यद्यागछति वीरहा भवति । १६ । ॥२५॥

---

27) mss. सर्वा यजंति.
28) cf. 5.1.7.45.
**24** 4) cf. 5.2.11.30.
**25** 2) mss. तेष्वाँ.
3) mss. °कपालोग्नये.
4) mss. प्रयोग.
7) cf. 1.5.2.8.
9) mss. त्रया.
10) cf. 1.5.3.7, 13.
11) mss. भवंत इत्यपिवि°, cf. MS. IV.11.1:161.13d.
13) mss. यन्नवयस्या°, °प्रयण°, यद्वसन्ति, वापयते सोपयते सो.

अथातस्तीर्थसंचारान्व्याख्यास्यामः । १ । आहवनीयोत्करावन्तरा तीर्थं चात्वालोत्करावन्तरा द्वितीयं चात्वालाहवनीयावन्तरा तृतीयमाहवनीयँ स्रुचश्चान्तरेण चतुर्थं दक्षिणस्मिन्परिधिसंधौ पञ्चमम् । २ । आग्नेयं प्रथमँ वारुणं द्वितीयँ वायव्यं तृतीयमाश्विनं चतुर्थँ वैष्णवं पञ्चमम् । ३ । एतेषामानुपूर्व्या प्रचारान्व्याख्यास्यामः । ४ । आहवनीयोत्करावन्तरा पात्राणां पत्नीनां कन्यानामुदकानामाज्यानाँ हविषाँ समिधाँ सँस्कारसमाहरणदोहनतीर्थम् । ५ । चात्वालोत्करावन्तरर्त्विजां प्रवेशनँ यजमानस्य च सदसश्चोपगमनम् । ६ । चात्वालाहवनीयावन्तरा जाघनीपरिक्रमणं पशुपरिक्रमणँ वपाया यूपस्य चान्वाहारम् । ७ । आहवनीयँ स्रुचश्चान्तरेणाध्वर्युयजमानयोर्दक्षिणातिक्रमणं प्रतिक्रमणमनुव्याख्यातम् । ८ । दक्षिणस्मिन्परिधिसंधावाश्रावणप्रेषणस्वाहाकारवषट्कारनमस्कारसमिदाहुतिलोकतीर्थम् । ९ । एतानि वै पञ्च तीर्थानि भवन्ति । १० । ये पञ्च सँवत्सरास्तीर्थेषु प्रतिष्ठिताः पङ्क्तिरिति विज्ञायते । ११ । अतीर्थप्रपन्ना ऋत्विजः पुरायुषः प्रमायुका भवन्ति । तीर्थप्रपन्नाः सर्वमायुर्यन्ति । १२ । य एवँ विद्वान्प्रचरेत्सर्वे कामा अस्य समृध्यन्ते । १३ । अतो यदन्यथा प्रचरेदर्धमस्य यज्ञस्य वरुणपाशैर्बध्यते । नास्य यज्ञो देवंगमो भवति नास्य यज्ञो देवंगमो भवतीति । १४ । ॥२६॥

॥ इत्यनुग्राहिको ऽध्यायः समाप्तः ॥

---

**26** 6) mss. °रा ऋत्वि°; M2 B1 सदृशश्चो°.
8) M2 B1 प्रत्यतिक्रमण°.
9) °नमस्कार° not B2.
11) mss. °ष्ठिता; B2 N पङ्तिरि° S पंङ्तिरि° M2 B1 षड्भिरि°.
14) mss. °दध्यर्धम°.

अथ राजसूयसूत्रप्रारम्भः । राजा राज्यकामो राजसूयेन यजेत । १ । भार्गवो होता । २ । आश्वयुज्याममावास्यायाँ वा यजनीये ऽहन्यग्निष्टोमाय ज्योतिष्टोमाय दीक्षते । ३ । स सिद्धः संतिष्ठते । ४ । श्वोभूते ऽनुमत्या अष्टाकपालं निर्वपति । ५ । सिद्धमाधिवपनात् । ६ । प्रागधिवपनात्शम्याशिष्टं दृषदा समं कुर्यात् । ७ । ये प्रत्यञ्चः शम्यामतिशीयन्ते तन्नैर्ऋतमेककपालम् । ८ । तूष्णीं दक्षिणाग्नौ श्रपयत्यानुमतं गार्हपत्य । उभौ सह शृतौ कुर्वन्ति । ९ । सिद्धमा प्रचरणात् । १० । आज्यभागाभ्यां प्रचर्य '' वीहि स्वाहाहुतिं जुषाण इति दक्षिणाग्नौ जुषं जुहोति । ११ । दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय विस्रँसिकायाः काण्डाभ्यां जुहोति '' जुषाणा निर्ऋतिर्वेतु स्वाहेति जुहोति । १२ । वासः कृष्णं भिन्नान्तं दक्षिणा । १३ ॥ स्वाहा नमो य इदं चकारेति गार्हपत्ये हुत्वानुमतेन प्रचरन्ति । १४ । दक्षिणाकाले धेनुर्दक्षिणा । १५ । सिद्धमा वेदस्तरणात् । १६ । अथ य उदञ्चः शम्यामतिशीयन्ते तानुदक्परेत्य वल्मीकवपामुद्धृत्ये"दमहममुष्यामुष्यायणस्य क्षेत्रियमवयज इत्युक्त्वा जुहोती"दमहममुष्यामुष्यायणस्य क्षेत्रियमपिदधामीति लोष्टेनापिदधाति । १७ । श्वोभूत आदित्येभ्यो भुवद्वद्भ्यो घृते चरुरितिप्रभृति यथाम्नातम् । १८ । श्वोभूत आग्रायणो । वत्सः प्रथमजो दक्षिणा । १९ । श्वोभूते चातुर्मास्यानि पौर्णमास्यामारभ्य सँवत्सरे ऽपवर्जयेत् । २० । श्वोभूत इन्द्रतुरीयमाग्नेयो ऽष्टाकपालो वारुणो यवमयश्चरू रौद्रो गावीधुकश्चरुरैन्द्रं दधि । धेनुरनड्वाही दक्षिणा । २१ । अपां न्ययनादपामार्गानाहरन्ति । तान्सक्तून्कृत्वा श्वोभूते प्रागुदयादपामार्गेण प्रचरन्ति । २२ । दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय पर्णमयेन स्रुवेण '' देवस्य त्वा सवितुः प्रसव इति जुहोति । २३ ॥ हतँ रक्षो ऽवधिष्म रक्ष इत्यनूपतिष्ठते । वरो दक्षिणा । २४ । सायं पञ्चेध्मीयानवनीय पञ्चधा व्युदूह्येध्मानादधाति । २५ ॥ ये देवाः पुरःसद इति पूर्वार्धे जुहोति ' प्रदक्षिणमुत्तरैरनुपरिक्रामं न प्रतिपरिक्रम्य पञ्चमेन मध्ये । २६ ॥ इदमहँ रक्षो ऽभिसमूहामीति प्रभृतिभिराहवनीयँ समूह्याँग्नये पुरःसदे स्वाहेति पूर्वार्धे जुहोति ' प्रदक्षिणमुत्तरैरनुपरिक्रामं न प्रतिपरिक्रम्य पञ्चमेन मध्ये । २७ । रथः पञ्चवाही दक्षिणा । २८ । अमावास्यायां निशि पञ्चेध्मीयेन यजेत यो[1] रक्षोभ्यो बिभीयात्पिशाचेभ्यो वा । २९ । श्वोभूते देविकापष्ठौही दक्षिणा । ३० । श्वोभूते त्रिषँयुक्तमाग्नावैष्णव[2] एकादशकपाल ऐन्द्रावैष्णवश्चरुर्वैष्णवस्त्रिकपालो । वामनो दक्षिणा । ३१ । श्वोभूत उत्तरँ ' सौमापौष्ण एकादशकपाल ऐन्द्रापौष्णश्चरुः पौष्णश्चरुः । श्यामो दक्षिणा । ३२ । श्वोभूते वैश्वानरँ वारुणमग्नये वैश्वानराय द्वादशकपाल इयान्वारुणो यवमयश्चरुर्हिरण्यं चाश्वश्च दक्षिणा[2] । ३३ । श्वोभूते बार्हस्पत्यश्च-

---

1 Cf. MS.II.6.1-6; IV.3.1-9; Āp. Śr.18.8-10.

4) mss. exc. B2 समिद्धः.

6) 1.2.2.28.

7) mss. °शिष्टाद्दृष° (S °दश°), r. °शीर्षं ? cf.1.2.2.27.

9) mss. श्रितौ.

10) 1.3.2.1.

16) 1.3.5.19.

17) क्षेत्रियम° unto °ष्यायणस्य not M2 B1; mss. लोष्टेनापिदधामि.

18) mss. भूव°.

24) mss. exc. B2 हुतँ; mss. इत्यनु°.

25) M2 B1 व्युदह्ये° B2 व्यदुह्ये°, N S व्यदुघे°, cf. Baudh.Śr.12.4 निरूह्य.

30) not S.

31) mss. त्रिसँ°, cf.5.2.7.16.

रुर्ब्रह्मणो गृह इति प्रभृतयो रत्निनः । ३४ । त इष्टिपरिवेषं दद्युर्येषां गृहेष्वन्वहँ यजेत । ३५ । अङ्गुष्ठपर्वमात्रो नैर्ऋतश्चरुर्नखनिर्भिन्नानां । तूष्णीं दक्षिणाग्नौ श्रपयति । ३६ । दक्षिणा परेत्य स्वकृत इरिण एकोल्मुकं निधाय प्रदरे वा " निर्ऋत्यै स्वाहेति जुहोति । ३७ । रत्निभ्य ऊर्ध्वः पुनरैन्द्र एकादशकपालो राज्ञो गृह । ऋषभो दक्षिणा । ३८ । श्वोभूते प्रयोगाविन्द्रायाँहोमुच एकादशकपालं निर्वपेदिन्द्राय सुत्राम्ण एकादशकपालमृ्षभो दक्षिणा । ३९ । अन्वहँ यजेत । ४० । पार्वणः पर्वणि । ४१ । त्रैधातव्ययान्यत्सहस्रं दक्षिणा । ४२ । ॥१॥

मैत्राबार्हस्पत्यमभिषेचनीयस्य दीक्षणीयायाम् । १ । स्वयँरुग्णाया अश्वत्थशाखायाः पात्रं भवति । २ । पुरस्ताच्छ्वेताँ श्वेतवत्सां दुहन्ति । ३ । तत्स्वयं मूर्छति स्वयं मथ्यते स्वयँ विलीनमाज्यं भवति । ४ । अथ मैत्राबार्हस्पत्यँ हविर्निर्वपति । ५ । अर्धं बर्हिषो लुनात्यर्धँ स्वयँलूनम र्धमिध्मस्य करीत्यर्धँ स्वयंकृतम र्धँ वेद्याः करोत्यर्धँ स्वयंकृतम् । ६ । ये क्षोदिष्ठास्तण्डुलास्तं बार्हस्पत्यं चरुँ शृतं कुर्वन्ति । ७ । तत्राज्यमाधाय स्वयँविलीनमासिच्य स्थविष्ठानावपन्ति । ८ । उभौ समाहृत्य सह शृतौ कुर्वन्ति । ९ । सिद्धमा सादनात् । १० । अनुद्धते मैत्रमासादयत्युद्धते बार्हस्पत्यम् । ११ । सिद्धमा प्रचरणात् । १२ । मैत्रेण पूर्वेण प्रचरन्ति । १३ । अश्वो मैत्रस्य दक्षिणा शितिपृष्ठो बार्हस्पत्यस्य श्वेता वा सवत्सोभयोः । १४ । द्वादश दीक्षाः । १५ । सिद्धमा क्रयात् । १६ । सह सोमौ क्रीणन्त्यभिषेचनीयदेशे यथोद्दे्शैर्वत्सतरैः साण्डैः । १७ । दाशपेयिकं ब्रह्मणो गृहे निदधाति । १८ । सिद्धमाग्नीषोमीयात् । १९ । अग्नये गृहपतय आपतन्तानामित्यष्टौ देवसुवाँ हवीँष्यग्नीषोमीयस्य पशुपुरोडाशमनुनिर्वपति । २० । यथा देविकाहविर्भिस्तथा प्रचरति । २१ । सिद्धमा स्विष्टकृतः । २२ । प्राक्स्विष्टकृतः " सविता त्वा प्रसवानाँ सुवतामिति ब्रह्मणो हस्तमालभ्य यजमानमाश्रवयन्ति । २३ ॥ अमुमिति नाम गृह्णात्यँामुष्यायणमिति गोत्रमँमुष्याः पुत्रमिति मातुरँमुष्याँ विशीति स्वाराज्यमाशासते विशि " महते क्षत्राय महते जानराज्यायेति सर्वत्रानुषजति । २४ । सिद्ध उपवसथः । २५ । श्वोभूतेऽभिषेचनीयः सप्तदश उक्थ्यो बृहत्पृष्ठः । २६ । सिद्धमा मध्यंदिनीयानां निर्वपणात् । २७ । मध्यंदिनीयान्निरुप्य मारुतमेकविँशतिकपालं निर्वपति । २८ । सिद्धमोपधानात् । २९ ॥ शुक्रज्योतिश्च चित्रज्योति-

35) mss. °युस्तेषां.
37) mss. प्रवरे, cf. Baudh. Śr.12. 1:85.15; cf.5.2.10.27.
42) cf. 9.1.5.49.
**2** Cf. MS.II.6.6-8; IV.3.9-4.2; Āp.Śr.18.11-13.
2) M2 S °रुग्नाया B2 N B1 °रूग्नाया.
6) cf. KS. 15.5:212.11.
7) mss. चरुँ श्रितं.
8) mss. तत्राश्वमा°.
9) mss. श्रितौ.
11) mss. °नुध्यते, °ध्यतेमे.
14) mss. एवं ता for श्वेता.
16) 2.1.4.8.
17) M2 यथोद्देश्यैव° S यथो:श्यैव° B2 N B1 यथोद्देश्यैर्वे°.
18) mss. दाक्रीशपेयकंत्या (N दाकी°).
19) 2.2.5.5.
20) mss. देवस्त्वां.
22) cf. 1.3.2.22.
24) mss. पुत्र इति.
27) 2.4.2.21.
29) mss. °पद्दधानात्; cf.1.2.3.2.
30) M2 पयसी the oth. पयसि; 33)

श्चेति प्रभृतिभिर्गणैरेकविँशतिं कपालान्युपदधाति वैश्वदेवीं च पयसीं तूष्णीँ सँस्करोति । ३० । सिद्धमा दक्षिणाकालात् । ३१ । एवमसंमिता दक्षिणा ददात्ययुतँ वा । ३२ । मरुत्वतीयैः प्रचर्य मारुतेन प्रचरति पयस्या च । ३३ ॥ देवीरापो अपां नपादित्यभिहवमपां च त्रीणि गृह्णाति । ३४ ॥ देवीरापो अपां नपादिति सारस्वतीनाँ ॥ राष्ट्रदा स्थ राष्ट्रममुष्मै दत्तेति सर्वत्रानुषजति । ३५ ॥ वृषोर्मिरसीति प्रतीपसारिणीनाँ '' वृषसेनो ऽसीत्यन्वीपसारिणीनामँपां पतिरसीति नदादँप्रहावरी स्थेति स्थावराणां '' परिवाहिणी स्थेति वाहिनीनामोँजस्विनी स्थेति या उञ्शीय धावेयुँर्मान्दा स्थेति मन्दँ वहन्तीनाँ '' व्रजक्षित स्थेति कूप्यानाँ '' सूर्यवर्चस स्थ सूर्यत्वचस स्थति या आतपति वर्षति याश्च परिदद्रुश्रे '' मरुतामोज स्थेति ह्रादुनीनाँ '' वशा स्थेति पुष्पाणाँ '' शक्वरी स्थेति गोरुल्ब्यानाँ '' विश्वभृत स्थ जनभृत इति दध्नः श्लक्ष्णस्याँनाधृष्टासीति घृतस्याँपामोषधीनाँ रस इति मधुनः । ३६ ॥ देवीरापो मधुमतीः सँसृज्यध्वमिति विस्तृते पात्रे सँसृज्योत्तरेण होत्रीयं परिक्रम्याँनाधृष्टाः सीदतेति पश्चात्पोतुर्धिष्ण्यस्य सादयति । ३७ । ॥२॥

दर्भयोः प्रतिमुच्याँनिभृष्टमसीति रुक्ममादत्ते । १ ॥ शुक्रा वः शुक्रेण पुनामीति रुक्मेणोत्पुनाति । २ ॥ स्वाहा राजसूया इति रुक्ममन्ववसृजति । ३ ॥ सधमादो द्युम्न्या ऊर्जा एका इति व्यानयति पाला-शाश्वत्थौदुम्बरनैयग्रोधैः । ४ ॥ रुद्र यत्ते गिरिपरं नामेति शेषमाग्नीध्रीये जुहोति । ५ ॥ सोमा इन्द्रो वरुण इति यजमानँ वाचयति । ६ । दधि मधु शष्पाण्यौदुम्बरे यजमानमाशयति । ७ ॥ क्षत्रस्य योनिर-सीति तार्प्येण दीक्षितवसनमभिधत्ते ॥ क्षत्रस्योल्बमसीति पाण्डरँ सँशुद्धम् । ८ ॥ क्षत्रस्य नाभिरसीत्युष्णी-षेण संनह्यति । ९ । नवनीतेन संधाप्य पञ्चाशता दक्षिणमक्षि चाङ्क्त एकपञ्चाशता । १० । अप उपस्पृश्याँवित्तो अग्निर्गृहपतिरिति गार्हपत्यान्ते यजमानमावेदयत्येँष ते जनते राजेति यजमानमाह ॥ सोमो ऽस्माकं ब्राह्मणानाँ राजेति जपति । ११ ॥ इन्द्रस्य वज्रो ऽसि वार्त्रघ्न इत्यधिज्यं धनुः प्रयच्छति । १२ ॥ शत्रुबाधना स्थेति त्रीन्बाणवतः प्रदाय '' पात प्राञ्चं पात प्रत्यञ्चमिति जपति । १३ ॥ मित्रो ऽसीति दक्षिणमुपावहरति '' वरुणो ऽसीति सव्यँ सहेषुभिः । १४ ॥ हिरण्यवर्णमुषसो व्युष्टा इत्येताभिरभि-मन्त्रयेत । १५ ॥ समिधमातिष्ठेति प्रभृतिभिर्दिशो ऽनुनिक्रामति मनसा न पदाभ्याम् । १६ । अग्रेण सदः

mss. पयस्य; cf. 9.1.3.33.

31) 2.4.5.1.

32) M2 एवसंमिता the oth. एवमानसंमिता.

36) M2 नदाजप्र° the oth. नदात्प्र°; mss. उत्सीर्य धावयु°; परिवृढाश्चेति for परिदद्रुश्रे, पृष्याणां for पुष्पाणाँ, धृतस्या°; cf. MS.I.3.12:34.10.

37) mss. पश्चात्पातुर्हिरण्यस्य.

**3** Cf. MS II.6.8-11; IV.4.2-5; Āp.Śr.18.13-19.

1) cf. Baudh.Śr.12.9:98.15.

4) mss. पलाशाश्वत्थोदुंबर°; B2 N S °नैय्य° M2 B1 °नय्य°.

7) M2 शष्यानौ° S शष्यान्नौ° B2 N शष्यानौ°; B2 N S °नमशयति M2 B1 °नशमयति.

8) corr. uncertain; mss. तीर्थेन दीक्षितंचसमभिसंधात्, cf. ŚBr. 5.3.5.25; M2 °मसीवि the oth. °मसिवि; mss. पाण्डः सँसुजा (M2 B1 °शु°), cf. Vārāha Śr 3.3.2. 30 क्षौमं संशुद्धम्; cf. MS.IV.4.3:52.13.

10) cf. MS.IV.4.3:52.15.

14) r. °मुपच्छति cf. MS.IV.4.3:53.16.

16) mss. नुनिःक्रामति.

" सोमस्य त्विषिरसीति व्याघ्रचर्म विवेष्टय प्राग्ग्रीवलोममास्तृणाति । १७ । तदारुह्य जपति यजमानः " प्रत्यस्तं नमुचेः शिर इति पदा सीसं पण्डगाय प्रत्यस्यत्यँवेष्टा दन्दशूका इति लोहितायसं केशवापाय । १८ ।। मृत्योः पाहीति राजतँ रुक्ममधस्तात्पादयोरुपकर्षति सौवर्णँ रुक्मम् । १९ ।। अग्नये स्वाहा सोमाय स्वाहेति षट्पार्थानि जुहोति । २० ।। सोमस्य त्वा द्युम्नेनेति समया सौवर्णमभिषिञ्चति पालाशेन दक्षिणतो ब्रह्मा श्वत्थेन पश्चाद्वैश्य ' औदुम्बरेणोत्तरतो भ्रातृव्यः ' पुरस्ताद्यो जन्यो मित्रँ स नैयग्रोधेन । २१ । पालाशे संपातानवनीयाग्नीध्रे सादयति । २२ ।। इन्द्राय स्वाहेति षट्पार्थानि जुहोति । २३ ।। इन्द्रस्य योनिरसीति विषाणामनुमन्त्रयते " समाववृत्रन्नधरागुदक्ता इत्यभिषेकमूर्ध्वं नाभेस्त्रिः । २४ ।। इन्द्रस्य वज्रो ऽसि वाजसनिरिति चात्वालान्ते रथमुपावहरति " मित्रावरुणयोस्त्वा प्रशास्त्रोः प्रशिषा युनज्मीति युनक्ति । २५ ।। विष्णोः क्रमो ऽसीति चक्रे पादमादधाति " सपत्नहेत्यारोहति । २६ ।। मरुतां प्रसवे जयेति यान्तमनुमन्त्रयते । २७ ।

असाविदेवं गोऋजीकमन्धो न्यस्मिन्निन्द्रो जनुषेभुवोच ।
बोधामसि त्वा हर्यश्व यज्ञैर्बोधा न स्तोममन्धसो मदेषु ।।

इत्यैन्द्रचा त्रिष्टुभा ब्रह्मान्वेति । २८ । राजन्यं जिनाति । तस्मै तामिषुमस्यति । २९ । व्रतं गृहीत्वा"प्तं मनः समिन्द्रियेणेत्युक्त्वा वर्तते । ३० ।। एष वज्रो वाजसातमस्तेन नौ पुत्रो वाजँ सेदिति पत्न्यै धन्वानि प्रयच्छति । ३१ । तान्यञ्जलिना प्रतिगृह्णाति । ३२ । मारुतस्य पयस्याश्च समवदायानिरुक्तेन स्विष्टकृता प्रचर्य रुक्माननुमन्त्रयत ।।३।।

" इयदसीति राजतँ सौवर्णँ सूत्रँ " युङ्ङसीति सौवर्णँ सूत्रमू"र्गसीत्यौदुम्बरँ हरितसूत्रम् । १ ।। मित्रो ऽसीति दक्षिणमुपावहरति " वरुणो ऽसीति सव्यम् । २ । सहायुधं प्रत्यञ्चं कृत्वा प्रतिहिताय प्रयच्छति । ३ ।। सदसि समहँ विश्वैर्देवैरिति हस्तावामिक्षामभ्यवहरति । ४ । तत्र ते हिरण्ये ददात्यौदुम्बरँ वाब्रध्नीते । ५ ।। नमो मात्रे पृथिव्या इति वाराही उपानहा अभ्यवरोहति । ६ ।। पशूनां मन्युरसि तवेव मे मन्युर्भूयादिति प्रतिमुञ्चति । ७ ।। प्रति त्यन्नाम राज्यमधायीति जपति । ८ ।। स्योनासि सुषदेत्युत्तरत आहवनीयस्यासन्दीमवस्थापयति " स्योनामासीद सुषदामासीदेत्यासन्दीमारोहन्तमनुमन्त्रयते " निषसाद

---

18) mss. पडवाय.

19) mss. °त्पादायारु°.

19-20) B2 N सक्मँशा S सक्मशा M2 B1 सवमँशा for रुक्ममग्नये (not °मँशाय, cf. MS.II.6.11:70.7-9; IV.4.5:55.1, 2).

20) M2 ष पर्यानि B1 षट्पर्यानि S N षट्पदार्थानि B2 षट्पर्थानि.

21) mss. पलाशेन; mss. ब्रह्मा पश्चाद्रेश्यार्क° for ब्रह्माश्वत्थेन पश्चाद्वैश्य औ°; mss. जान्या.

22) mss. पलाश.

28) mss. यज्ञेबाधा, °मंत्रसोम म°; cf. ṚV.7.21.1.

29) mss. °मस्य.

30) mss. गृहीत्वासं.

33) cf. 9.1.2.28-33; sū.33 belongs to 9.1.4.1.

**4** Cf. MS.II.6.12; IV.4.6; Āp. Śr.18.16-19.

1) mss. आयुरसीति for युङ्ङसीति.

4) mss. हस्त आमि°.

धृतव्रत इत्याह्वद्द्गम् । ६ ।। अग्नये स्वाहा सोमाय स्वाहेति रथविमोचनीयं जुहोति । १० ।। हँसः शुचि-षदिति सह सारथिना रथवाहने रथमादधाति । ११ । अध्वर्यवे शतं दत्त्वावरोहति दास्यन्वा । १२ । क्षयमाणो हिरण्यकूर्चे हिरण्यकशिपुनि चासीनः शौनःशेपँ होता व्याचस्ते । १३ । अध्वर्युः प्रतिगृणात्यँध्वर्यो ब्रह्म वदामेत्यामन्त्रयत " ओं होतरित्यृक्षु " तथा होतरिति गाथासु । १४ । समाप्ते शतँ होत्रे ददाति सहस्रं प्रतिगरित्रे । १५ । मध्यतःकारिणो यजमानं पर्युपविशन्ति प्रतिहितश्चोदञ्चो रत्निनः सेनानीप्रभृतयो ऽन्ये तक्षरथकाराभ्याम् । १६ ।। ब्रह्मँस्त्वं मे ब्रह्मासीति यजमानो मध्यतःकारिणामेकैकमामन्त्रयते । १७ ।। सवितासि सत्यसव इति ब्रह्मा प्रत्याह " मित्रो ऽसि सुशेव इत्युद्गातेन्द्रो ऽसि सत्यौजा इति होता " वरुणो ऽसि विश्वौजा इत्यध्वर्युः । १८ ।। एष वज्रस्तेन मे रध्येति स्फ्यं प्रयछति ब्रह्मा यजमानाय ' यजमानः प्रतिहिताय ' प्रतिहितः सेनान्ये ' सेनानीप्रभृतय आक्षणिवापात् । १९ । स्फ्येनाधिदेवनं कृत्वा कृतसंपूतान्सूदयन्निवपति । २० । तत्र पष्ठौहीं प्रसुवति । २१ । तां चत्वारो विदीव्यन्ते ब्राह्मणो राजन्यो वैश्यः शूद्रः । २२ । तेषाँ यः पराजयते स यजमानस्य गोपु पष्ठौहीमपिसृजति । २३ । ततश्चतुः-शतमक्षानवोह्याहो"न्द्रिन्नँ राज्ञ इति ।। दिशो अभ्यभूदयमिति पञ्चाक्षान्यजमानाय प्रयछति । २४ । क्षेत्रं ब्रह्मणे ददाति । वरँ वृणीते । २५ । मङ्गल्यनाम्नो ह्वयति " सुश्लोकाः सुमङ्गलाः सत्यराजान इति । २६ । पत्नीलोके प्रतिहितस्य मातरमुपस्पृश्य प्रतिहितमन्वारभ्य " प्रजापते न त्वदित्येतया गार्हपत्ये नामव्यतिषङ्गं जुहोति पालाशसंपातम् । २७ ।। असा अमुष्य पुत्रो ऽमुष्यासौ पुत्र इति नामनी व्यतिषजति । २८ ।। वयँ स्याम पतयो रयीणामिति प्रतिहितँ वाचयति । २९ । मारुतस्य पयस्याश्च समवदायेडा-मुपहूय भक्षयन्ते । ३० । ।।४।।

माहेन्द्रेण प्रतिपद्य सिद्धमावभृथात् । १ । वासाँस्यभिषेकपात्राणि वाराही च प्रतिवेशमवभृथँ हरेयुः । २ । गागुलैरवभृथमभ्यवैति । ३ ।। अपां नप्त्रे स्वाहेत्यवभृथे ऽप्सु जहोत्यू"र्जो नप्त्रे स्वाहेति दर्भस्तम्बे द्वितीयमँग्नये गृहपतये स्वाहेति गार्हपत्ये । ४ । सिद्धमानूबन्ध्यायाः । ५ । सूतवशानूबन्ध्यासूनया चतुष्प-द्याभिविक्रमयति । ६ । नीवारान्पशुपुरोडाशाय निर्वपति । ७ । न केशश्मश्रू वापयति । ८ । न दीक्षते ' दण्डं प्रयछति । ९ । सावित्रेणोदवस्यति गार्हपत्ये यजमानाय दक्षिणाग्नौ पत्न्यै । १० । सँसृप्सु तद्धक्षौ

---

13) mss. शुनः°.

14) mss. °गृणीत्य°; cf. 7.2.3.12 वदावे°.

16) प्रति° not in the mss.; mss. सेनानि°.

17) मे not in MS.

19) mss. सेनानि°, °वापा.

20) mss. °देवतं: M2 सुद्यं B2 N B1 सुद्यु S सूद्यु; cf. *W. Caland*, Z.D.M.G. 62 p.125.

23) mss. गोप.

24) the first इति not in the mss., cf. MS.IV.4.6:57.12.

26) mss. सुश्लोक्याः, सत्यराजानयति; cf. VS.20.4.

**5** Cf. MS.II.6.13; IV.4.7-10; Āp.Śr.18.20-22.

1) 2.5.4.22.

2) cf. Baudh.Śr.12.12:102.17; 16:111.7.

3) r. गुग्गुलैर° ? cf 9.5.4.18; mss. °वेति.

5) mss. °मावंध्यायाः ; 2.5.5.5.

6) mss. °वंशैरतु°; cf. MS.IV.4.3: 52.14.

11) mss. सँसृत्सु.

भक्षयतः । सा व्रताग्निहोत्रयोः संततिः । ११ । सावित्रो ऽष्टाकपाल इति प्रभृतयो दश सँसृपः । १२ । तासामाहवनीयस्थाने गार्हपत्यं निधाय प्राचीनँ सँसर्पनन्वहँ यजेत । १३ । यथा वैष्णवं दशपेयाय प्राग्वँशं कुर्यात् । १४ । दशपेयाय दीक्षते । द्वादशपुण्डरीकां मालाँ यजमानः प्रतिमुञ्चते ' साप्सु दीक्षा । १५ । सद्यः सर्वं कुर्वन्ति । कृष्णाजिनमेखलाविषाणास्तनुग्रहं कुर्याद'न्यद्दीक्षितं न प्रयछति । १६ । प्रायणीयस्य हविष्कृता वाचँ विसृज्याभ्यर्धे राजानं निवपति । १७ । प्रायणीयँ सँस्थाप्य पुरस्तात्क्रीतस्य वत्सतरानपाकरोति '' स्वजा असीति प्रभृतिभिः । १८ । सिद्धमोपसद्भ्यः । १९ । तिस्र उपसदः । २० । सिद्ध उपवसथः । २१ । श्वोभूते दशपेयाग्निष्टोमो रथंतरपृष्ठः । २२ । सिद्धमा भक्षणात् । २३ । शतं ब्राह्मणाः सोमान्भक्षयन्ति दशदशैकैकं चमसमा दशमान्मातृतः पितृतश्चान्वाख्याय । २४ । न ब्राह्मणन्यङ्गो भक्षयेद्दासीपुत्रो नन्वाचक्षीत ' कामं भक्षयेत् । २५ । सहस्रतमीमतिकाल्यां ' रुक्मो होतुरितिप्रभृति यथाम्नातमपाकरोति । २६ । अजः सुब्रह्मण्यस्य वत्सतर्युन्नेतुः साण्डस्त्रिवत्सो ग्रावस्तुतो द्वादश पष्ठौहीर्गर्भिणीर्ब्रह्मणः । २७ । न प्रसर्पकेभ्यो ददाति । २८ । अनूबन्ध्यायै सहस्रमतिकाल्या ऋत्विग्भ्यः सोमपेभ्यो ददाति । २९ । वशातिरात्रं करोति । ३० । न केशश्मश्रू वापयति । ३१ । दिशामवेष्टिभिरुदवस्यति । ३२ । आग्नेयो ऽष्टाकपाल इति प्रभृतीनि पञ्च निर्वपति । ३३ । सायं पौर्णमास्यां पुरस्तात्प्रातरग्निहोत्रात्प्रयुग्भिर्यजत ' आग्नेयो ऽष्टाकपालः सौम्यश्चरुरिति प्रभृतीनि षड्'दक्षिणो रथवाहनवाहो दक्षिणा । ३४ । श्वोभूते पौर्णमास्येष्ट्वोत्तराः प्रयुज उपैति ' सारस्वतश्चरुः पौष्णश्चरुरिति प्रभृतीनि षट्'सव्यो रथवाहनवाहो दक्षिणा । ३५ । श्वोभूते पशुबन्धो ' मारुतो पृश्निः पष्ठौही गर्भिणी । ३६ । श्वोभूत उत्तर ' आदित्याजा मल्हिा गर्भिणी । ३७ । सायँ सोमेन प्रतिपद्य सँवत्सरमग्निहोत्रमेव जुहोत्या देशात्पशुबन्धाद्द्व्यहेद्व्यहे वा । ३८ । यो धीव्यवसितः सत्यसितः सात्यदूतहविर्भिर्यजते सवित्रे प्रसवित्र इति प्रभृतीनि त्रीणि । ३९ । अश्वः शोणकर्णो दक्षिणा दण्ड उपानहौ शुष्कदृतिश्च । ४० । तेभ्यः प्रदाय प्रतिवेशाय राज्ञे प्रहिनोत्यभ्यषिक्षि राजाभूवमिति । ४१ । पौर्णमास्यां केशवपनीयाय दीक्षते । ४२ । अमावास्यायाँ यजनीये ऽहन्यतिरात्रः क्रतुरषोडशिकः सहस्रदक्षिणः । ४३ । वपनकाल आसन्द्यामासीनः

---

12) mss. सँसर्प°.
15) cf. 2.1.1.30.
16) mss. °छीत्सँ.
18) cf. 2.1.4.15.
21) 2.2.1.55-5.35.
23) 2.4.1.31.
24) mss. °श्चान्वाम्नाय.
25) mss. ब्राह्मणो°.
26) M2 °मतिकांन्य the oth. °मतिकान्य, cf.sū.30; mss. रुक्मो तुरिति.
27) mss. वत्सतुर्यनेतः (S °तृ°); mss. स्तांस्त्रि° for साण्डस्त्रि°, cf. Pañc. Br.18.9.20; mss. पष्ठौही गर्भिणी.
29) mss. °नुवं°, °मतिकाल्यांनृ°, cf.sū. 26.
32) mss. दिशम°.
34) mss. पुरात्प्रा°.
36) N मार्तो the oth. मार्ती.
38) B2 N S °बंधाद्द्या° M2 B1 °बंध्याद्द्या°, r. °बन्धस्य ?
39) mss. य; M2 S धीव्यं°; mss. °सित सव्यसिते सव्यदूत°.
40) mss. °श्व शोणाकरणौ, cf. KS. 15.9.
41) mss. राज्ञ, °भिशिच्च.
44) mss. °मासीनं, only: तस्माच्चौम ऋण द्विपदेशं चतुःपद; cf. TBr.2.7.17.1; ṚV.10.165.1; Mān.Gr. 2.17.1.

ये केशिनः प्रथमे सत्रमासत येभिरिदँ विश्वं भुवनमा विराजति ।
तस्मा अर्चाम कृणवाम निष्कृतिँ शं नो अस्तु द्विपदे शं चतुष्पदे ॥

इति निखिलं केशश्मश्रू यजमानो वापयते । प्रज्ञातमुदवसानम् । ४४ । अनन्तरमक्षैर्दीक्षते ऽह्नीनाय । ४५ । ज्योतिरग्निष्टोमः पूर्वो । ऽमावास्यायाँ यजनीये ऽह्न्यतिरात्रः । प्रज्ञातमुदवसानम् । ४६ । अनन्तरं क्षत्रधृतये दीक्षते । ४७ । त्रिष्टोमो ऽग्निष्टोमो रथन्तरपृष्ठः । प्रज्ञातमुदवसानम् । ४८ । अनन्तरमिष्टिभिर्यजेत देविकाभिर्देवसुवाँ हविर्भिरैष्टिक्या सौत्रामण्या वैश्वानरवारुण्या त्रैधातव्यया त्रैधातव्यया । ४९ । ॥५॥

## ॥ इति राजसूये प्रथमो ऽध्यायः ॥

पुण्यनाम्नि देवयजने राजाश्वमेधेन यजेत सर्वान्कामानवरुरुत्समानो ऽमुं च लोकमभिजिगीषन् । १ । अपदातीनृत्विजः समानावहन्ति । २ । फाल्गुन्यां पौर्णमास्यां प्राजापत्यमृषभं तूपरँ सर्वरूपमालभेत । ३ । हुतायाँ वपायां चात्वाले मार्जयित्वा सर्वा दिशो रथा अभिधावन्ति । ४ । राजाश्वमेधेन यजेत तमनुजानीतेति । ५ । स सिद्धः संतिष्ठते । ६ । एतमेवालभेत सर्वकामः । ७ । पूर्वां पौर्णमासीमुपोष्योत्तरामुपवसेत् । ८ । ब्रह्मौदनायास्तमयमनु वाचँ यछन्ति । ९ । उदिते वैतसमिध्ममुपसमाधाय " द्रष्ट्रे नम उपद्रष्ट्रे नम इति प्रभृतिभिरादित्यमुपतिष्ठते । १० ॥ हिरण्यगर्भ इति द्वादश पूर्णाहुतीर्जुहोति । ११ । चतुष्केष्वप्सु दक्षिणाग्नौ ब्रह्मौदनँ श्रपयति ' रुक्मानभितो ऽधस्ताद्राजतमुपरिष्टात्सौवर्णम् । १२ । पश्चाद्गार्हपत्यस्य मध्यात्कारिणः प्राश्नन्ति । १३ । तेभ्यः शतमानं ददाति । १४ । मौञ्जीं दर्भमयीँ वा द्वादशारत्निं त्रयोदशारत्निँ वाभिधानीं ब्रह्मौदनेन न्युब्जे"मामगृभ्णन्निति रशनामादत्ते । १५ ॥ ब्रह्मन्नश्वं भन्त्स्यामीति ब्रह्माणमामन्त्रयते । १६ ॥ तं बधान देवेभ्य इत्यनुजानाति । १७ ॥ अभिधा असीति त्रिहायणमश्वमभिनिदधाति कृष्णं पिशङ्गमरुणपिशङ्गँ वा सोमपँ सोमपयोः पुत्रम् । १८ । पितुरनुजायाः पुत्रमग्रतो नयन्ति । श्वानं चतुरक्षँ सैध्रकेण मुसलेन पौँश्चलेयो ऽन्वैति । १९ । अपो ऽभ्यवनीयाश्वं पुरस्तात्प्रत्यङ्मुखमवस्थापयति । २० । सर्वैस्तैः सार्धं चत्वारो ऽध्वर्यवः । २१ ॥ प्रजापतये त्वा जुष्टं प्रोक्षामीति प्रभृतिभिरेकैकात्प्रोक्षति " सर्वेभ्यस्त्वा देवेभ्य इति सर्वे सर्वतः । २२ । सैध्रकेण मुसलेन पौँश्चलेयः श्वानँ हन्ति । २३ ॥ यो अर्वन्तं जिघाँसतीति हन्यमाने जपति यजमानः । २४ । दक्षिणं पदं पूर्वमुपोद्यम्य " परो मर्तः

---

45) r. व्युष्टये ? or अप्सु ?

47) mss. °द्दतये.

49) mss. देवकभिर्देवस्वानहर्भिरै° (M2 S °हभिरै°); cf.9.1.2.20; 2.2.14; Kāty.Śr.15.4.4.

॥ ५ ॥ is missing in the mss.

1 Cf. MS.III.12.1, 2, 4, 16; Āp. Śr.20.1-5.

2) mss. °नवयंति.

10) cf. KS. 26.12.

15) M2 B2 S न्युज्वे° N B1 न्युज्वे°, cf.TBr. 3.8.2.3 न्युनक्ति.

18) mss. °पेयोः.

22) mss. °कैकान्°.

परः श्वेत्यधस्ताच्छ्वानं दक्षिणातः प्लावयति । २५ । उत्क्रामन्तमश्वमैषीकेनोदूहेन वेतसशाखयाभ्युदूहन्ति । २६ ।। अग्नये स्वाहा सोमाय स्वाहेत्यनुवाकेन क्षरन्तमनुमन्त्रयते । २७ ।। इदँ विष्णुः " प्र तद्विष्णुर्दि"वो विष्ण इति त्रिषु पदेषु जुहोति प्रोदके । २८ ।। विभूर्मात्रा प्रभूः पित्रेत्यश्वमभिमन्त्रयते । २९ ।। आदित्यानां पत्वान्विहीत्युत्सृजति । ३० । शताय कवचिनां तल्प्येभ्यो राजपुत्रेभ्यो " देवा आशापाला इत्यश्वं परिददाति । ३१ । चतुःशताः पालयन्त्यनिवर्तयन्तः । ३२ । ।।१।।

उपांशु सावित्रीभिः प्रचरति । १ । सवित्रे ऽष्टाकपालं पूर्वाह्णे निर्वपेत् । २ ।। हिंकाराय स्वाहेति प्रभृतिभिरेकत्र पञ्चाशतमाहुतीर्जुहोति । ३ । सवित्रे प्रसवित्र एकादशकपालं मध्यंदिने । सवित्रे प्रसवित्रे द्वादशकपालमपराह्णे । ४ ।। इह धृतिरिह स्वधृतिरिति प्रभृतिभिः प्राक्स्विष्टकृतश्चतस्र आहुतीर्जुहोति । ५ । सँवत्सरमिष्टिभिर्यजेताहुतीश्च जुहुयात् । ६ । वीणागाथिनावुपगायेतामित्ययजथा इत्यपचथा इत्यददा इति तिसृभिर्दिवा ब्राह्मण इत्ययुध्यथा इति कल्याणमकुरुथा इत्यमुँ संग्राममजयथा इति तिसृभिर्नक्तँ राजन्य इति । ७ । संनिपाते नित्यापूर्वानाशाचेतशंकेताश्वाखरे (?) निर्वपेदाश्विनीभिर्धाना मृगाखरे यदि नागछेत् । ८ । वडवाप्यये ऽपीष्टिराम्नाता । ९ । सँवत्सरादूर्ध्वँ षहमति यजति । १० । तस्मिन्नुखामाछादनान्तां कुर्वन्ति । ११ । समाप्ते वीणागाथिभ्यां शते ददात्यनसि युक्ते चाश्वरथौ । १२ । व्रजे ऽश्वं प्ररुध्य दमयन्ति । १३ । सप्तम्यां पशुबन्धो ऽष्टम्यां त्रैधातव्या दीक्षणीया । १४ । सिद्धमाधीतयजुर्भ्यः । १५ ।। काय स्वाहा कस्मै स्वाहेति प्रभृतीनि त्रीणि वैश्वदेव्यान्यन्वहँ सप्तम्यां पञ्चाध्वरकाणि हुत्वा षडाग्निकानि जुहोत्युत्तमानि च वैश्वदेव्यानि । १६ । पूर्णाहुतिप्रभृति सिद्धमोपसद्भ्यः । १७ ।। आ ब्रह्मन्ब्राह्मण इति ब्रह्मा जातमुख्यमुपतिष्ठते । १८ । सँवत्सरं दीक्षा ' द्वादशोपसदः । १९ । त्रिस्तावा वेदिस्तथाग्निर्नोत्तरवेदी । २० । रथवाहने हविर्धाने । २१ । यूपानेकविँशतिँ संमिनोति । नैचुदारवो ऽग्निष्ठ

26) mss. °क्रामतमश्यमिषीकेनदू°, °शाखयानु°.

28) cf. MS.I.2.9.

31) mss. exc. M2 शताय कवच शताय कवचनां; mss. कवचनां तल्पेभ्यो, cf. ŚBr.13.1.6.2.

**2** Cf. MS.III.12.3-15; Āp.Śr.20.5-12.

3) mss. हिंकारेति तिसृभिर्दिवा ब्राह्मणं इत्ययुध्येतयेकत्र; °ति तिसृभि° unto °युध्येतये° belongs to sū.7; for हिंकारे° r. हिंकाराय स्वाहेति प्रभृतिभिरे°, cf. MS.III.12.3.

4b) r. सवित्र आसवित्रे.

7) mss. °थिगौयेप°, °जेथा, इत्यदः; इति तिसृभि° unto °युध्यथा इति is taken from sū.3; after इत्यदः क: there begins a long hiatus in M2 unto in 9.2.3.19; B2 N B1 कल्याणामवतुसथा S °मुक्तरथा, cf. VārāhaŚr.3.4.1.37, 39; mss. राजन्य इष्टि.

8) B2 °शौच° for °शाचे°; the composition seems irreparable; cf. TBr.3.9.17; ŚBr.13 3.8.

10) S षहमति, r. सह° ? cf. Āp.Śr.20.8.3.

12) mss. °रथे.

14) mss. धातव्य.

15) 2.1.2.1.

16) mss. पंचध्व°, cf. Baudh.Sr.15.13:217.17.

17) 2 1.3.19.

20) mss. त्रितावेदि°.

22) B2 N S नेतुदारवो B1 नेदारवो, cf.Pañc.Br.21.4.13; mss. पोतु°.

एकविँशत्यरत्निः पौतुदारवावुपस्थावानौ षट्खादिराः षट्पालाशाः षड्बैल्वास्त्रयो ऽन्ये त्रयो ऽन्ये। मध्यमे वाहनि विँशतिँ संमिनोति। २२। यथाकालं दिग्भ्यो वसतीवरीर्गृहीत्वा समानीय सादयत्येवमुत्तराभ्यामुक्थ्यातिरात्राभ्याम्। २३। अन्वहं पृष्ठ्यानतिग्राह्यान्गृह्णाति। २४। मध्यमे पृष्ठशिल्पं कुर्यात्। २५। सिद्ध उपवसथः। २६। श्वोभूते चतुष्टोमो ऽग्निष्टोमो रथंतरपृष्ठः। २७। सिद्धं पत्नीसँयाजान्तँ संतिष्ठते। २८। उपतल्पयोरासीनावभ्यस्तमिते स्रुवाभ्यां जुहुतः। २९। सक्तून्धाना मसूस्यानि करम्भाँल्लाजान्पृथुकान्प्रियङ्गुतण्डुलान्सँसृज्यान्नेन जुहोत्यँग्नये स्वाहा सोमाय स्वाहेति प्रभृतिभिरैकशतात्। ३०॥ एकस्मै स्वाहा द्वाभ्याँ स्वाहेत्येतेनाभ्यावर्तयन्सर्वरात्रं जुहोति युग्भिरन्नमयुग्भिराज्यँ "व्युष्टचै स्वाहेति व्युष्टायाँ" स्वर्गाय स्वाहेतित्यभ्युदिते। ३१। ॥२॥

एकविँश उक्थ्यो मध्यमाहः। १। सिद्धमा पात्रप्रयोजनात्। २। अन्तर्यामपात्रं प्रयुज्य महिम्नोः पात्रे प्रयुनक्ति सौवर्णं दक्षिणँ राजतमुत्तरम्। ३। सिद्धमा ग्रहणात्। ४। अन्तर्यामं गृहीत्वा महिमानौ गृह्णीते "हिरण्यगर्भो" यः प्राणत इति ग्रहणसादने। ५। सिद्धमा बहिष्पवमानात्। ६।

ज्योतिर्यज्ञस्य पवते मधु प्रियं पिता देवानां जनिता विभावसुः।
दधाति रत्नँ स्वधयोरपीच्यं मदितमो मत्सर इन्द्रियो रसः॥

इत्यश्वस्य ग्रीवासु निष्कं प्रतिमुञ्चति। ७॥ श्येनो ऽसि गायत्रं छन्दः सुपर्णो ऽसि त्रिष्टुप्छन्दः सखासि गायत्रं छन्द इत्यश्वस्य पुच्छमारभ्य पवमानँ सर्पन्ति। ८। उत्तरतः "शतेन त्वा प्रवृणज्मीत्युद्गातारमाह तस्यापवरमृत्विजो ऽपवृताः। ९। शतमुद्गात्रे ददति। १०। आस्तावान्ते वडवामपसाध्याश्वँ संक्रमयन्ति। ११। उत्तरतो "निष्केण त्वा शतपरेणोपह्वयाम" इमां देवतामुद्गायेत्युद्गातारमाह तस्योपह्वानमृत्विज इमां देवतामुपहूताः। १२। शतं निष्कं चोद्गात्रे ददाति। १३। उभयं कुर्वन्त्युद्गीथमश्वसंक्रन्दनं च। १४। समाप्ते शतमानमुद्गातृभ्यः प्रयछति। १५। सिद्धमोपाकरणात्। १६। द्वयानैकादशिनानुपाकरोति 'प्लक्षशाखयेतरानश्वे पर्यङ्ग्यानवछादयन्तो याममिन्द्राय स्वपस्याय वेहद्वैष्णवो वा॒॒न इति यूपभाजो। बभ्रुररुणबभ्रुरिति प्रभृतीन्विश्वेभ्यो देवेभ्यः पृषत इत्यन्तान्। १७। बहुशब्दे त्रीन्प्रतीयात्त्य-

---

26) 2.2.1.55-5.35.
27) mss. चतुष्टो.
30) mss. मृस्मृशानि, °रैकश°.
31) mss. जुहोत्ययुग्भि°.
**3** Cf. MS.III.12.16-19; 13.2-14.21; 16.3; Āp-Śr.20.13-16.
1) B2 N B1 मधमहः S मधमः.
2) 2.3.1.14.
4) 2.3.4.23.
6) 2.3.6.8.
7) ṚV.9.86.10; mss. स्वाध्यायार°.
8) cf. 2.3.6.8; 2.4.4.17; 2.5.1.22.
9) mss. °त्युत्तरमाह, °पवरण°.
11) mss. °त्युस्तावांते, °पसध्या°; perhaps r. संक्रन्दयन्ति.
16) 2.3.6.15.
16-17) mss. °णाद्वायानै°.
17) mss. °नपा°, °नश्वस् (perhaps the beginning of a missing अश्वतूपरगोमृगान्, cf.9.2.4.2); mss. °नयछा°; MS.III.13.2-14.21.
18) mss. त्रीन्प्रतिया°, °ष्ठौहा; इति four times missing.

वयो गायत्र्या इत्यध्यर्धहायनान्पञ्चावयस्त्रिष्टुभे पञ्चावरान्दित्यवाहो जगत्यै द्विहायनाँ स्त्रिवत्सा अनुष्टुभे त्रिहायनाँस्तु र्यवाह उष्णिहे चतुर्हायनान्पष्ठवाहो विराज इति पष्ठौहः । १८ ।। युञ्जन्ति ब्रध्नमित्यरुणपिशङ्गँ युज्यमानमनुमन्त्रयते " युञ्जन्त्यस्य काम्येत्युत्तरौ " केतुं कृण्वन्नकेतव इति ध्वजं " जीमुतस्येवेति संनद्धकवचं " धत्ते...तीषुधिँ " रथे तिष्ठन्नयतीति सारथिं " तीव्रान्घोषान्कृण्वत इत्यश्वान्वँनस्पते वीड्वङ्ग इति तिसृभी रथँ " स्वादुषँसद इति तिसृभिर्जनयतः " सुपर्णँ वस्त इतीषुम"हिरिव भोगैरिति तलमाँजङघन्तीत्यश्वाजनीमु"पश्वासयेति द्वाभ्यां दुन्दुभिम् । १९ ।। आमूरजेति जपति । २० । प्रागभिप्रयाय प्रदक्षिणमावर्तयति । २१ । प्रयुक्तानामरुणपिशङ्गमपोऽभ्यवनीय " यद्वातो ऽपो अगनीगन्निति प्रत्यानयति ' यथोपाकृतमवस्थितम् । २२ । अभ्यञ्जन्ति " वसवस्त्वाञ्जन्त्विति कासाम्बवेन महिषी मुखादध्या बाह्वो " रुद्रास्त्वाञ्जन्त्विति गौल्गुलवेन वावाता नाभेर"ादित्यास्त्वाञ्जन्त्विति मौस्तकृतेन परिवृक्त्या पुछात् । २३ । त्रिसाहस्रान्काचाँल्लोमस्वावयन्ति " भूरिति महिषी सौवर्णान"भुव इति वावाता राजतान"स्वरिति परिवृक्ती शङ्खमयान् ।२४।। लाजी शाचीत्यन्नहोमशेषं पत्न्यो ऽश्वायोपकिरन्ति । २५ । यत्राद्यात्तदिष्टके प्रकिरेत् । २६ । आज्यँ होमशेषमभिषेकाय निदधाति । २७ । होता ब्रह्मा चान्वग्निष्ठमभितो ऽन्यो ऽन्यं पृछतः " कः स्विदेकाकी चरति " सूर्य एकाकी चरतोति प्रश्नप्रतिवचनात् । २८ । ।।३।।

सिद्धमा नियोजनात् । १ ।। युञ्जति ब्रध्नमित्यरुणपिशङ्गमग्निष्ठे नियुनक्ति तूपरगोमृगौ चाश्वमभितो दश पर्यङग्यानवछादयन्तो याममिन्द्राय स्वपस्याय वेहद्वैष्णवो वामन इति यूपभाजो ' बभ्रुररुणबभ्रुरिति प्रभृतीन् । २ । वसन्ताय कपिञ्जलानिति प्रभृतय आरण्यास्तेषां दश पञ्चदशिन एकादशदशिनः । ३ । तान्यूपान्तरेषु त्रयोदशत्रयोदश व्यत्यासं । नाङ्गिषु प्लुषिमशकान्करण्डेषु सर्पान्पञ्जरेषु मृगव्याघ्रसिँहान्कुम्भेषु मकरमत्स्यमण्डूकाञ्जालेषु पक्षिणः कारासु हस्तिनः नौषु चौदकानि यथार्थमितरान् । ४ । सिद्धमा पर्यग्निकरणात् । ५ । पर्यग्निकृतानुत्सृजन्ति पुरुषान्ये च ग्राम्याणामुत्सर्जनधर्माणः । ६ । सिद्धमा प्रक्रमणात् । ७ । पौष्णमजमश्वस्याग्रतो नयन्ति । ८ । अवस्थितायाश्वाय दर्भमुपास्यति वासो ऽधीवासो हिरण्यकशिपूनि च । ९ । गलाप्रवेष्टनेन प्राजापत्यान्संज्ञपयन्ति शामूलेनाश्वम् । १० ।।

19) mss. धत्ते for धन्वना; MS.III.16.3:185 12-17 for the bow etc. are missing; to the quiver belongs बहूनां; with घोषा° M2 returns, cf.9.2.2.7; mss. तिस्रो जनयति, cf.Āp.Śr. पितृ.न्; M2 इतिषुहि° B1 S इतीपुहि° B2 N इतीषूहि°.

22) mss. °नीयात्वातो, °स्थितान°.

23) mss. का नांत्र°; for गौल्गुलवेन M2 nothing, the oth. वेन only; mss. मुस्तफाटेन परिवृक्तिरा.

24) mss. लोमस्राव°, °वृक्ति.

25) mss. °त्यत्र°, cf.9.2.2.30.

26) M2 °द्यान्दी° S °द्यान्नदी° B2 N °द्यांनदी° B1 °द्यातदी°.

28) mss. ब्रह्मा अन्वाग्नि°, पृछंतः.

4 Cf. MS.III.12.18-14.21; Āp. Śr.20.14, 15, 17-19.

1) 1.8.3.6.

2) mss. °ष्ठंनयु° (S °ष्ठ°).

3) mss. पञ्चदशेन.

4) is नाङ्गिषु right ? B1 तागिषु.

5) 1.8.3.22.

7) 1.8.3.27.

प्राणाय स्वाहापानाय स्वाहा व्यानाय स्वाहेति संज्ञप्यमाने तिस्र आहुतीर्जुहोति । ११ ।। अम्ब्यम्बिक इति महिषीमभ्युदानयति ' तूष्णीमितरे ' शतँ सार्धं पत्न्या । १२ । विहत्य केशानुदग्रथ्य सव्यान्दक्षिणानूरून्घ्नाना '' गणानां त्वा गणपतिँ हवामह इति दक्षिणपादमश्वं प्रदक्षिणं त्रिः परियन्त्यु'द्ग्रथ्य दक्षिणान्केशानुदक्पादँ सव्यानूरून्घ्नानाः प्रसव्यं त्रिः परियन्ति । १३ ।। वसो ममेति पादान्यप्रति परिश्रिते । १४ । अवाक्शिरसमुत्तानमाँहमजानि गर्भधमिति पत्न्यश्वमभिमेधति । १५ ।। दधिक्राव्णो अकारिषमित्युच्छ्रितायाँ सर्वे जपन्ति । १६ । प्रत्यक्शिरसः सूचीभिः पत्न्यो ऽसिपथान्कल्पयन्ति '' गायत्री त्रिष्टुबिति द्वाभ्यां महिषी सौवर्णीभिरा हनुभ्यां भूदयात्क्रोडादुत्तराभ्याँ वावाता राजतीभिरा पुच्छात् । १७ । नाश्वस्य वपा । चन्द्र इति मेद आचक्षते ' ततश्चोद्धरन्ति । १८ । उत्तरतो ऽश्वस्य चन्द्रँ श्रपयति । १९ ।

एकस्त्वष्टुरश्वस्या विशस्ता द्वा यन्तारा भवतस्तथा ऋतुः ।
या ते गात्राणामृतुथा कृणोमि ताता पिण्डानां प्र जुहोम्यग्नौ ।।

स्वाहेत्याहवनीये त्रीञ्शृतपिण्डानादधाति । २० । उत्तरतो ऽश्वस्य वैतसे कटे ऽवदायातिक्रम्येतरयोरवद्यति । २१ । अभितो वपां महिमानौ जुहोति '' स्वाहा देवेभ्य इति पुरस्तात्सौवर्णेन '' विश्वेभ्यो देवेभ्यः स्वाहेत्युपरिष्टाद्राजतेन । २२ ।। प्रजापतय इत्युपाँशु '' हयस्य छागस्योस्रस्य चन्द्रवपानां मेदसो ऽनुब्रूहीत्यनुवाचयति । २३ । आश्राव्य '' प्रजापतय इत्युपाँशु '' हयस्य छागस्योस्रस्य चन्द्रवपानां मेदसः प्रेष्येति प्रचरति । २४ । यथावदानँ समवदायोत्तरेषां पशूनाँ '' विश्वेभ्यो देवेभ्यः छागानां मेषाणामुस्राणाँ वपानां मेदसो ऽनुब्रूहीत्यनुवाचयति । २५ । आश्राव्य '' विश्वेभ्यो देवेभ्यः छागानां मेषाणामुस्राणाँ वपानां मेदसः प्रेष्येति प्रचरति । २६ । सूकरविकर्तं प्राजापत्यँ विशसन्ति । २७ । उत्तरतो ऽश्वस्य शोणितँ श्रपयति । शोणिते तेजनीत्याचक्षते । २८ । अवदानान्यवदायावदानशः प्राजापत्याञ्श्रपयन्ति । २९ । शूल्यमश्वस्य कुर्यात् । ३० । ।।४।।

सिद्धमा दक्षिणाकालात् । १ । कामप्राप्ता दक्षिणा ददाति यदि काममावयेत् । २ । यत्प्राच्यां दिश्यब्राह्मणानाँ वित्तँ स्यात्तदध्वर्यवे दद्यात्क्षेत्रद्विपदवर्जँ यद्दक्षिणस्यां तद्ब्रह्मणे यत्प्रतीच्यां तद्धोत्रे यदुदीच्यां

---

12) mss. सतः .
12-13) mss. पत्न्येतिहत्य.
13) सव्यान् resp. दक्षिणान् after उद्ग्रथ्य not in the mss; mss. °रूघ्नौना, °रूघ्नौनाः .
14) r.e.g. °न्प्रसरति.
17) M2 S भूचा° B2 N B1 भूच्या.
18) mss. वपां.
20) TS.4.6.9.3; M2 S B1 श्रुत° B2 N श्रुति°.
22) mss. महिमानो, cf.MS.III.10.1: 130.17.
23 and 24) mss. °स्यास्रस्य, cf. Baudh.Śr.15.31.
27) mss. विशँस°.
28) cf. Baudh.Śr.15.31:237.15; Śāṅkh.Śr.16 18.19.
5 Cf. M8.III.15-16.2; Āp.Śr.20.19-23.
1) 2.4.5.1.
2) S कामभाव° the oth. कामन्नाव°.
3) mss. दिशि ब्रा°, cf.Āp.Śr.20.9.14; ŚBr.13.5.4.24.

तदुद्गात्रे । ३ । माहेन्द्रं गृहीत्वा स्तोत्रमुपाकरोति । ४ ।। अग्न आयूँषि पवस इति सप्तानां प्रथमास्ताः पुरस्तादभिषेकस्य कुर्यात्प्रँजापतिश्चरति गर्भे अन्तरिरिति सप्तानां प्रथमास्ताः पुरस्तात्प्राणभृत उपरिष्टाद-पानभृतः । ५ । सिँहचर्मण्यभिषिच्यते । ६ । ऋषभचर्मोपरिष्टाद्ध्रियते । ७ ।। सहस्रशृङ्गो वृषभो जातवेदा इति सौवर्णँ रुक्ममुपरिष्टाद्धारयन्संपातेनाभिषिञ्चति " प्रजापति पारमेष्ठ्यायेति यथाकामम् । ८ ।। समिद्धो अञ्जन्कृदरं मतीनामित्याप्रीभिर्हस्तं गृह्णाति । ९ ।

वि रक्षो वि मृधो जहि वि वृत्रस्य हनू रुज ।
वि मन्युमिन्द्र वृत्रहन्नमित्रस्य शिरो जहि ।।

इति मुखँ विमृष्टे । १० । जागतान्विष्णुक्रमान्क्रामति । ११ । मासनामानि जुहोति । १२ । उत्तरतो ऽश्वस्य वैतसे कटे ऽवद्यति । १३ । गोमृगकण्ठेन तेजन्याँ स्विस्टकृतो वषट्कारे जुहोति । १४ । अश्वशफेन पत्नीसँयाजयत्यंयस्मयेन वरुणावभृथेष्टौ । १५ । वैतसे कटे प्राजापत्यान्संचिनोति प्राञ्चावश्वतूपरौ प्रत्यञ्चं गोमृगम् । १६ । वषट्कृते राजपुत्राश्चत्वार आदधत्याहवनीये । १७ । प्रत्याहुत्याज्यं गृहीत्वा " शादं दद्भिः स्वाहा यस्यारण्ये ऽधीतेनानुवाकेन । १८ ।। मा नो मित्रो वरुण इत्यश्वस्तोमीयाः षोडशा-हुतीर्जुहोति । १९ । सिद्ध उपवसथः । २० । श्वोभूते सर्वस्तोमो ऽतिरात्रः । २१ । सिद्धमोपाकरणात् । २२ । गव्यानैकादशिनानुपाकरोति । २३ । सिद्धमावभृथात् । २४ । दुर्मगदस्यास्यदघ्न उदके ऽवस्थि-तस्य " जुम्बकाय स्वाहेति मूर्धनि तिस्र आहुतीर्जुहोति " मृत्यवे स्वाहेत्यप्सु " ब्रह्महत्यायै स्वाहेति द्वितीयाम् । २५ । तरति मृत्युं तरति पाप्मानं तरति ब्रह्महत्याँ यो ऽश्वमेधेन यजते यश्चैवँ वेद । २६ । यावन्तो ऽश्वस्य हूयमानस्य गन्धमवजिघ्रन्ति सर्वे ते पुण्यलोका भवन्ति । २७ । सिद्धमानूबन्ध्यायाः । २८ । नव सौरीः श्वेता अनूबन्ध्यास्तासाँ वपासु हूयमानासु प्रतिवातं तिष्ठेरन्मुच्यन्ते पापकृतः । २९ । तासां पशुपुरोडाशमन्वँहोमुच इति दशहविषा मृगारेष्टिं निर्वपति । ३० । सर्वपृष्ठया भूतिकामो यजेता-भिशस्यमानो वा । बिभ्यन्मृगारेष्ट्यामयावी वा । ३१ । उदगुदवसायात्रैतान्कालाभ्रूनजाननुपूर्वँ वै त्रिशाखे नियोजनेदाग्नेयं मध्यम ऐन्द्रं दक्षिण आश्विनमुत्तरे । ३२ । सिद्धः पशुबन्धः । ३३ । द्वादश ब्रह्मौदनान्पक्त्वा मध्यतःकारिभ्यो दद्यात्तेभ्यो द्वादश च धेनूः । ३४ । अपि वा देविकाभिरिष्ट्वा मृगारेष्ट्या यजेत यजेत । ३५ । ।।५।।

**।। इति राजसूये द्वितीयो ऽध्यायः ।।**

---

5) cf. MS.I.5 1:66.8; TĀ 3.13.1; °दपानभृतः not M2 B1; B2 N S उपरिष्टात् twice.
8) cf. 3.1.28.
9) mss. °त्याप्ताभि°.
10) ṚV.10.152.3.a-c.
11) cf. 1.4.3.11.
12) cf. 1.7.2.7.
15) N °त्यस्मायन्न the oth. °त्ययस्मायन्न.
18) r. eg. शादं दद्भिरिति प्रभृतिभिरा स्वाहेत्यरण्ये ऽधीतेनानुवाकेन च जुहोति, MS.III.15.1-8· cf. ŚBr.13.3.4.1.
19) mss. °स्तोमीयं.
22) 2.3.6.15.
24) 2.5.4.22.
25) r. दुर्ब्राह्मणस्या° ?
28) 2.5.5.7.
28 and 29) mss. °नुबंध्या°.
30) cf. MS.IV.12.3:182.13.
32) mss. °न्कालान्बभ्रून्लाजा°, त्रिशाखा; cf. Āp.Śr.20.23.1.

आम्नातँ विधानमेकाहानाम् । १ । साग्नयः सर्वे ऽन्यत्षोडशितीव्रसुच्चातुर्मास्येभ्यो येषामनाग्निक्यो दीक्षा उपसदः । २ । कामो येषु प्रजा पशवः प्रजातिर्वा प्रवर्ग्यास्तेषु प्राकृतश्वोक्थः । ३ । रथंतरे रथंतरवर्णे वैन्द्रवायवाग्रं बृहति बृहद्वर्णे वा शुक्राग्रँ वामदेव्ये वामदेव्यवर्णे वाग्रायणाग्रम् । ४ । सहस्रदक्षिणे पृष्ठयानतिग्राह्यान्गृह्णाति । ५ । अनूबन्ध्या मैत्रावरुणी वैश्वदेवी बार्हस्पत्या । तासां परिसंख्या यथाँश्वदाभ्ययोर्वाजपेये । ६ । सहस्रदक्षिणेन यक्ष्यमाण इष्ट्वा च त्रैधातव्यया यजेत । ७ । नार्थानि ' धेनुर्हिरण्यं च दक्षिणा । ८ । नादेशे त्वग्निष्टोमसँस्था । ९ । रथंतरपृष्ठा इन्द्रस्य त्रिकद्रुकाः । १० । ज्योतिष्टोमेन स्वर्गकामो यजेतेमं च लोकमभिजिगीषन् । ११ । अग्निष्टोम उक्थः । सर्वपशुकामो यजेतान्तरिक्षलोकमभिजिगीषन् । १२ । आयुष्टोम उक्थ्यः । सर्वकामो यजेतामुं च लोकमभिजिगीषन् । १३ । इन्द्रस्याभिजिद'नभिजितस्याभिजितिमभिजिगीषन्यजेतो"भयसामा रथंतरपृष्ठः । १४ । इन्द्रस्य विश्वजित्सर्वपृष्ठो । विश्वमभिजिगीषन्यजेत । १५ । अनुदिश्य दीक्षते । १६ । पुरा प्रातरनुवाकाद्यजमानः सौवर्णीँ शतमानीं द्वादशपुण्डरीकां मालां प्रतिमुञ्चते । १७ । पृष्ठयानतिग्राह्यान्गृह्णाति । १८ ।ताननुपृष्ठं जुहोति क्रियन्ते च पृष्ठयशिल्पानि । १९ । दक्षिणाकाले सर्ववेदसं मालां च ददाति । २० । वैराजँ होतृसाम बृहद्वर्णम् । २१ । अवभृथादुदेत्य सकर्णपुच्छाँ सर्वकलाँ रोहिणीँ वत्सत्वचमाछादयते । २२ । सँस्थाप्योदवसानीयामुष्णीष्यधःशयो ऽमृत्पात्रमुभयतस्तीक्ष्णामभ्रिमौदुम्बरीमादाय खनित्रजीवन औदुम्बरे तिस्रो रात्रीर्वसति । २३ । शतमाशिरे दुहन्ति । २४ । उभयसामानो बृहत्पृष्ठाः ॥१॥

षट्साद्यस्क्राः । १ । तेषामादित्यानां त्रिवृत्प्रथमो । भ्रातृव्यवान्स्वर्गकामः पशुकामो यजेत । २ । महारात्रे क्षीरदृतीनश्वरथेष्वाधार्यत्विजः समानयन्ति । ... युजोद्गातारं 'पश्चाद्द्विक्रोशाद्द्वियुजा होतारं ' दक्षिणतः क्रोशात्स्थूरिणा ब्रह्माणम् । ३ । दृतिनवनीतमाज्यम् । ४ । उर्वरा वेदिः । ५ । उदिते दीक्षयन्ति । ६ । सद्यः सर्वं कुर्वन्ति । ७ । साण्डस्त्रिवत्सः सोमक्रयणः । ८ । उपसत्सु त्रिस्थाने संमील्य प्रचरन्ति । ९ । चात्वालदेशे लाङ्गलेषां खलेवालीं निहत्य यवान्कृषन्ति । तेषामुत्तरवेदिं धिष्णयांश्च निवपन्ति । १० ।

---

**1** Cf. Pañc.Br.16.1-6; Āp.Śr.22.1-2.

2) mss. °व्रासुचा°, cf. Āp.Śr.22.10.6; mss. येषावानग्निक्यो (M2 येपा°).

3) mss. °स्ते; B2 °श्वोत्थो the oth. °श्वोक्थो.

4) वामदेव्ये not in the mss.

6) mss. °नुबं°.

10) mss. °पृष्ठमिंद्रस्य त्रिकहस्वका.

12) r. गोष्टोम.

14) mss. °भिजिदनमभिजिदनमभिजितम°.

16) mss. निर्दिश्य (S °नि°, N B1 °र्दे°); M2 दिक्षे the oth. दीक्षे.

22) mss. °कालाँ.

23) mss. °ष्णीष्यधांशाय मृत्पात्र उभ°, °रीतया for °रीमादाय, cf. Āp.Śr. 17.26.14.

24) mss. माशिरो for शतमाशिरे, cf. 9.3.4.17, 26.

25) belongs to 9.3.2.1

**2** Cf. Pañc.Br.16.12-16; Āp.Sr. 22.2-4.

1) mss. साद्यस्का°.

3) mss. क्षीरवृतिनश्चर°; insert: पुरस्ताद्योजनाच्चतुर्युजाध्वर्युमु'त्तरतस्त्रिक्रोशात्त्रि°; M2 °स्थुणो the oth. °स्थूणो.

8) mss. सामस्त्रि°.

9) mss. रात्रिस्थाने.

आवृत्य खलेवाली प्रोक्षणप्रभृति यूपं कुर्वन्ति । यवकलापि चषालम् । ११ । अग्नीषोमीयकाले ऽग्नीषोमीयेन पशुपुरोडाशेन प्रचर्य वसतीवरीर्गृह्णाति । १२ । सवनीयकाले यूपँ संमित्य पशूनुपाकरोत्यग्नीषोमीयँ सवनीयमनूबन्ध्याम् । १३ । दक्षिणाकाले ऽश्वँ श्वेतँ रुक्मप्रतिमुक्तमाङ्गिरसायोद्गात्रे दद्यात् । १४ । अनूबन्ध्याकाले मैत्रावरुण एककपाल: पयस्या वा । १५ । सँवत्सरं नाञ्जीत नाभ्यञ्जीत नोपरिष्टात्पादौ प्रक्षालयेत । १६ । एतस्यैवैकविँशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत । १७ । अङ्गिरसामनुक्रीयं आनुजावरो हीन इव स्यात्स एतेन यजेत । १८ । स्त्रीगौ: सोमक्रयणी । १९ । अश्वँ श्वेतं ब्रह्मणे ददाति पिशङ्गीँ वडवामुद्गात्रे । २० । विश्वेषां देवानाँ विश्वजिच्छिल्प: सर्वपृष्ठ: । सर्वकामो यजेत । यथा विश्वजित् । २१ । इन्द्रस्य श्येनो वसिष्ठस्य वाऽभिचरन्यजेत । २२ । इरिणमध्यवस्येत्कृष्टँ वानुप्तम् । २३ । लोहितोष्णीषा लोहितवसना निवीता ऋत्विज: खड्गपाणय: पारुष्यन्त इव प्रचरन्ति । २४ । रथौ हविर्धाने निवर्तयित्वोपाञ्जन्ति ' शववहनमभ्येत्याधिषवणफलके गोरनुस्तरणिक्याश्चर्माधिषवणम् । २५ । स्फ्याग्रो यूपो ऽचषालस्तैल्वको बाधको वा । शरमयं बर्हिर्वैभीतक इध्म: । २६ । मन्थ्यग्रान्ग्रहान्निदधात्याग्रायणस्य पुर: । २७ । अग्नये रुद्रवते लोहितो ऽज: सवनीय: । २८ । नवनव दक्षिणा ददाति । २९ । प्रजापतेरुद्भिदेकत्रिक । एषां लोकानामुद्भिदुद्भि: सँयजेत । ३० । ॥२॥

देवानां प्रथमो व्रात्यस्तोमश्चतु:षोडशी । १ । श्रोत्रियान्व्रात्याँश्चत्वारि पावनार्थँ यजेरन् । २ । तेषाँ व्यञ्जनान्युष्णीषं प्रतोदो ज्याह्णोडो रथो विपथ: फलकास्तीर्ण: कृष्णदशँ वासो नीलबलक्षे अजिने राजतो रुक्मस्तद्गृहपते: । ३ । अथेतरेषां दामतूषाणि वलूकानि लोहितप्रमाणानि द्विषंधीन्यजिनानि । ४ । त्रयस्त्रिँशतात्रयस्त्रिँशता गृहपतिमभि समायन्ति । ५ । अश्वं चतुस्त्रिँशं गृहपतेराहरति । ६ । अग्नीनाधाय गृहपतेरग्निषु संन्युप्य यजेरन् । ७ । सिद्धमा दक्षिणाकालात् । ८ । यं द्विष्यात्तस्मै व्रात्यलिङ्गानि दद्याद्व्रात्यधनं च । दक्षिणैवम् । ९ । नृशँसा निन्दिता उक्थ्येन षट्षोडशिना चतु:षोडशिना । कनिष्ठा: कानिष्ठ्येन द्विषोडशिना । ज्येष्ठा ज्यैष्ठ्येन । ज्यैष्ठ्यकामो यजेत । १० । उभयसामा रथंतरपृष्ठ: । ११ । सर्वस्तोमेनोभयसाम्नां बृहत्पृष्ठेनाग्नेरग्निष्टुता । १२ । प्रवर्ग्यास्तेषां प्रथमेऽग्न्यृतमभि शस्त्राणि । १३ । त्रिवृदग्निष्टुदग्निष्टोम: । १४ । तस्य वायव्यास्वेकविँशमग्निष्टोमसाम कृत्वा ब्रह्मवर्चसकामो यजेत । १५ । एतस्यैव

11) mss. °वृह्य.
13 and 15) mss. °नुबं°.
14) mss. श्वेतौँ सकं°.
17) the 2d sādyaskra.
18) mss. °मनुकीर्यं.
23-23) mss. °जेतारिण°; mss. exc. S °नूप्तँ.
25) cf. Śānkh.Śr.14.22.17.
27) mss. °ग्राग्रहा विदधदीत्याग्र° (N B2 °धती°); cf.MS.IV.8.9.
27-28) mss. पुरोगग्ननये.
**3** Cf. Pañc.Br.17.1-12; Āp.Śr. 22.5-7.
3) mss. ह्याहोडौ.
6) mss. °स्त्रिँशाद्गृ°.
7) N °ग्नीश्राय B2 S B1 °ग्नीधाय M2 °ग्निधाय.
8) mss. दक्षिणीथाया: ; 2.4.5.14.
10) mss. कानिष्ठेया; M2 ज्येष्टेने युज्येकामो the oth. ज्येष्ठेन युजेष्ठकामो; perhaps r. : ज्यैष्ठ्ये नोर्ध्वस्तोमेन यजेरन्, cf. Āp.Śr.22.5.14.
12) mss. °ष्टुतो; sc. यजेत.
13) mss. असिमृत्संनभि.

रेवतीषु वारवन्तीयमग्निष्टोमसाम कृत्वा पशुकामो यजेत । १६ । ज्योतिष्टोमेनाग्निष्टुता यज्ञविभ्रष्टो यजेत यस्माद्वा स्तोमाद्विभ्रँशेत । १७ । स्तोमेन सप्तदशेनामयाव्यन्नाद्यकामः प्रतिष्ठाकामो वा यजेत । १८ । प्रजापतेरपूर्वस्त्रिवृता प्रथमो । भ्रातृव्यवान्स्वर्गकामः पशुकामो वा यजेत । १९ । जमदग्नेरिषुरभिचरन्यजेत समानकल्पश्येनम् । २० । बृहस्पतिसवः । पुरोधाकामः स्थापत्यकामो ब्रह्मवर्चसकामो वा यजेत । २१ । अरुणो मिर्मिरः परिस्रग्वी त्रिशुक्रियः । २२ । प्रातःसवने सन्नेषु नाराशँसेष्वेकादश दक्षिणा व्यादिशति । २३ । अश्वद्वादशा माध्यंदिने व्यादिश्योभयी दक्षिणाकाले ऽतिकालयति । २४ । माहेन्द्रकाले ऽनुद्धत आज्यस्य वाजप्रसव्यँ हुत्वोत्तरवेदेरासन्द्यामासीनं " बृहस्पतिं पुरोधयेति यथाकाममभिषिञ्चति । २५ । तृतीयसवने सन्नेषु नाराशँसेष्वेकादश दक्षिणा व्यादिशति । २६ । अनूबन्ध्यायै दक्षिणाकाले ऽतिकालयति । २७ । शुनस्कर्णस्तोमः सर्वस्वारो । य इछेत्सद्यः प्रेत्य स्वर्गँ लोकमियामिति स एतेन यजेत । २८ । शुण्ठो ऽजः सवनीयः । कृतान्नं दक्षिणा । वामदेव्यं पृष्ठम् । २९ । आर्भवे स्तूयमाने " ब्राह्मणाः सँस्थापयत मे यज्ञमित्युक्त्वा दक्षिणत औदुम्बर्या दक्षिणाशिराः प्रावृतो निषद्यते । तत एव संतिष्ठते । ३० । तस्य भक्षान्मार्जालीये निनयन्ति । ३१ । अवभृथवेलायामतीर्थेन निहृत्यावभृथे प्रप्लाव्यान्येन वाससा प्रछाद्य यथासव्यँ सँवेशयन्ति । ३२ । पर्योषणवेलायामाहवनीयाद्दहन्ति । ३३ । जीवन्नवभृथं गछेत् । ३४ । ॥३॥

प्रजापतेरुपहव्यो ऽनिरुक्तः सप्तदशानां प्रथमो । भ्रातृव्यवान्स्वर्गकामः पशुकामो वा यजेत । १ । अश्वः श्यावो दक्षिणा । स ब्रह्मणे देयः । २ । सोमस्यर्तपेयो बृहत्पृष्ठः । प्रतिष्ठाकामो वा यजेत । ३ । नव दीक्षास्तिस्र उपसदो ऽप्रवर्ग्याः । ४ । घृतव्रतौ भवतो वर्षिष्ठेनाङ्गुलपर्वणा ' सममन्यचतुःस्थाने ' ह्रसिष्ठेनेतरासु । ५ । सिद्धमा सर्पणात् । ६ । ऋतमुक्त्वा प्रसर्पन्ति । ७ । सिद्धमा दक्षिणाकालात् । ८ । सोमचमसं कृतस्य राज्ञो ऽँशूनां पूर्णं दक्षिणाभिः सहातिहृत्य सगोत्राय ब्रह्मणे ददाति । तेन स यजेत । ९ । अग्नेर्दूणाशः । स्वर्गकामो यजेत । १० । आग्नेयमष्टाकपालं पूर्वाह्णे निर्वपेत्सौर्यं चरुमहन्यग्नये वैश्वानराय द्वादशकपालमपराह्णे चान्द्रमसं चरुं नक्तम् । ११ । नक्तमर्धमासं पुरस्तात्परियजति । १२ । दीक्षणीयायां द्वादशमानं प्रायणीयायामातिथ्यायां द्वे चतुर्विँशतिमाने ' द्विस्तावत्त्रिस्तावदुप-

17) mss. स्तोमाद्वाभ्रश्येत.
22) B2 N S मृग्मिर M2 मृग्भिर B1 मृग्निर.
25) mss. पुरोधायति; cf.TĀ.3.8.2.
27) mss. °नुबं°.
28) mss. शुनकस्तोमः .
29-30) M2 N °मार्तववे S °मावर्तवे B2 °मार्त्तवे B1 °मावतेये.
30) mss. निषद्याते.
31) mss. °न्मार्जये.
32) mss. °वेलायां ती°, सैषा for वाससा.

4 Cf. Pañc.Br.18; Āp.Śr.22. 9-10.
1) cf. Baudh.Śr.18.28.
2) mss. शावो.
3) mss. °स्यतुपेयो; insert probably स्वर्गकामः .
6) 2.3.7.7.
6-7) M2 सर्पणामुक्त्वा the oth. सर्पणाद्गतुमुक्त्वा.
8) 2.4.5.1.
9) r. क्रीतस्य ?
11) mss. चंद्रमसेचचरुं, cf. Baudh. Śr.18.37.
13) M2 °विँपणमानं S °विँशम्नावं B2 N B1 °विँशन्मानं.

सत्स्वग्नीषोमीये सवनीये सवने ऽनुसवनम् । १३ । तृतीयसवने सन्नेषु नाराशँसेषूदयनीयायाँ स्रजमुद्गात्रे । १४ । वैश्यस्तोमेन वैश्यः पशुकामो यजेत । १५ । प्रजा त्वस्य निमीलितेव भवति । १६ । धेनुशतमाशिरे दुहन्ति । ता एव दक्षिणाः । १७ । तासामुपवसथे चतुस्त्रिँशता दधि कारयति । १८ । प्रातःसवन उपाधाय कपालानि षट्षष्टिं दोहयत्यर्धं श्रपयति । १९ । संपूतं राजानं ग्रहाँश्च प्रतिदुहा परिषिञ्चति शृतेन माध्यंदिने । २० । कण्वरथंतरं पृष्ठम् । २१ । इन्द्रस्य तीव्रसुदुक्थ्यो रथंतरपृष्ठः । सोमातिपवितो राजा युध्यमानो ग्रामकामो भूतिकामः प्रतिष्ठाकामो वा यजेत । २२ । सिद्धमा वेदिकालात् । २३ । यावद्यूपाँ वेदिमुद्धन्ति । २४ । प्राचीमेकादशिनीँ संमिनोति । २५ । गर्भिणीशतमाशिरे दुहन्ति यथा वैश्यस्तोमे । वडवा च गर्भिण्यः । २६ । अभक्षयन्तः स्वचमसानुपोह्यछन्तो ऽत्राभ्युन्नीय जुह्वतः प्रचरन्ति । २७ । अध्वर्युश्चमसाध्वर्यवश्चाछावाकाय प्रतिगीर्य सर्वभक्षान्भक्षयन्त्यध्वर्युश्चमसाध्वर्यवश्चैवमुत्तरयोः सवनयोः । २८ । वाजपेयराजसूयौ व्याख्यातौ । २९ । ॥४॥

राड्विराट्सोमस्य राड्राज्यमाशँसमानो यजेत । १ । अग्नेर्विराडन्नाद्यकामो यजेत । २ । उपसदपुनस्तोमौ । गन्धर्वाप्सरस उपसदः । प्रजातिकामो यजेत । ३ । इन्द्रस्य पुनस्तोम उक्थ्यो । यो बहु प्रतिगृह्य गरगीरिव मन्येत यो वा मध्यत आदीर्ण इव स्यात्स एतेन यजेत । ४ । गौतमस्य चतुष्टोमः । पशुकामो यजेत । ५ । अँशुरुक्थ्यः पूर्वे । ६ । तृतीयसवन उक्थ्यं गृहीत्वाग्रायणं गृह्णाति । ७ । सिद्धमाग्निष्टोमचमसेभ्यः । ८ । अग्निष्टोमचमसानुन्नीय पूर्ववत्ग्रहणसादनैर्होतृचमसे ऽवनयति । ९ । षोडश्युत्तरः । १० । बृहस्पतेरुद्भिद्बलभिदौ । पशुकामो यजेत । ११ । पूर्वेणेष्ट्वोत्तरेण मासमतिहरेत् । १२ । प्रजापतेरपचिती । अपचितिकामो यजेत । १३ । उभयसामानौ बृहत्पृष्ठौ । १४ । अग्नेः स्तोमौ । स्वर्गकामो यजेत । १५ । सँवत्सरमुख्यं बिभर्ति । सहस्रं दक्षिणा । १६ । ऋषभगोसवाविन्द्रस्य । १७ । ऋषभो । यः कामयेतर्षभ इव समानानाँ स्यामिति स एतेन यजेत । १८ । उभयसामा रथंतरपृष्ठः । १९ । पूर्वो गौराङ्गिरसः । २० । गोसवेन यजेत पारमेष्ठ्यकामः श्रीराज्यकामो वा । २१ । उक्थ्य उभयसामा बृहत्पृष्ठो । ऽयुतं दक्षिणा । २२ ।

---

14) mss. °नीयायामनुद्गात्रे, probably more than स्रज is missing, cf. Pañc.Br.18.3.2.
16) mss. निमीलतेव.
17) mss. धेनुशन्माशिरे.
18) mss. काराति.
20) mss. श्रुतेन.
21) mss. क एव°.
23) 2.2.1.52.
25) mss. प्रायेका°.
26) sc. दक्षिणा.
26-27) mss. गर्भिण्याभक्षयंते.
27) mss. श्व°, °पोह्यछंतत्राभ्युन्नायं जुह्वातः .
28) mss. प्रगीर्य.
29) mss. वाजपेराजस्तयौ.
5 Cf. Pañc.Br.19; Āp.Śr.22.10-13.
3) r. °पशद°, उपशदः ?
4) mss. बहुतिगृह्य.
6-7) mss. पूर्वस्तुतीय°.
8) 2.5.2.17.
9) mss. ग्रहासाद°.
10) mss. °त्तरौ.
12) mss. पूर्वेणाष्टो°.

गावो भगो गाव इन्द्रो मे अच्छान्गावः सोमस्य प्रथमस्य भक्षः ।
इमा या गावः स जनास इन्द्र इच्छामि हृदा मनसा चिदिन्द्रम् ॥

इति माहेन्द्रकाले वाचयित्वा '' पारमेष्ठ्यायेति यथाकामं प्रतिदुह्य परिषिञ्चति । २३ । प्रजापतिविदिन्द्रवित्स्तोमकुलायौ ' मरुतां मरुत्स्तोमः । पुष्टिकामो यजेत । २४ । तेन त्रीन्याजयेत् । २५ । इन्द्राग्न्योः कुलायो । यः कामयेत कुलायमिव प्रजायाः पशूनाँ स्यामिति स एतेन यजेतैतेन याजयेत् । २६ । इन्द्रस्येन्द्रस्तोम उक्थ्यो बृहत्पृष्ठो । राज्यमाशँसमानो यजेत । २७ । ऋषभाणां द्वादशशतं दक्षिणा । २८ । अग्नेः स्तोमो । राजपुरोहितौ सायुज्यकामौ यजेयातां पुरोधाकामो वा ब्राह्मणः । २९ । विघनस्ते'न पशुकामः । ३० । संदँशेनाभिचरन्यजेतेन्द्रस्य । ३१ । सिद्धमा वेदिकालात् । ३२ । यावद्यूपाँ वेदिमुद्धन्ति । ३३ । प्राचीं प्रवणदेश एकादशिनीँ संमिनोति । ३४ । ऋषभाणां द्वादशसहस्रं दक्षिणाश्वसहस्रं च । ३५ । श्रीष्टोमा द्वादशाग्निमदुक्थ्या वा । सर्वे ऽयुतदक्षिणा'स्तैः श्रीकामो यजेत । ३६ । ऋषिष्टोमाः षोडशाप्तोर्यामाः । सर्वे ऽयुतप्रयुतदक्षिणा'स्तैः सर्वकामो यजेत । ३७ । ॥५॥

त्रयोदशातिरात्राः । १ । तेषां प्रजापतेः प्रथमो ज्योतिरतिरात्र । ऋद्धिकामो यजेत । २ । इन्द्रस्य सर्वस्तोमो । भूतिकामो यजेत । ३ । प्रजापतेरप्तोर्यामः सर्वपृष्ठः । सर्वकामो यजेत । ४ । प्रजापतेर्नवसप्तदशः । प्रजातिकामो यजेत । ५ । एतत्प्रभृतयो षोडशिकाश्चत्वारः । ६ । आदित्यानाँ स्तोमो विषुवाञ्'ज्येष्ठो ज्यैष्ठिनेयो ज्यैष्ठ्यकामो यजेत । ७ । गोष्टोमेन पशुकामः । ८ । आयुष्टोमेन स्वर्गकामः । ९ । अभिजिता भ्रातृव्यवान् । १० । विश्वजिता पशुकामः । ११ । अग्नेस्त्रिवृ'त्तेजस्कामो यजेत । १२ । इन्द्रस्य पञ्चदशो । वीर्यकामो यजेत । १३ । प्रजापतेः सप्तदशो । ऽन्नाद्यकामो यजेत । १४ । आदित्यस्यैकविँशो बृहत्पृष्ठः । प्रतिष्ठाकामो यजेत । १५ । सर्वत्र पञ्चदशी रात्रिस्त्रिवृत्संधिः । १६ । ॥६॥

पशुमद्भिश्चातुर्मास्यैर्यजेत । १ । एतेषाँ व्रतं कालं दक्षिणाँ यथा हविर्यज्ञियानामिध्माबर्हिः पौर्णमासीनिवर्तनं च । २ । तस्यतस्य पर्वणः पुरस्तत्पाशुक्यारम्भणीया । ३ । वैश्वदेवेन यजेत । ४ । चात्वालप्रभृति

---

23) rectified, mss. गावो भागा गाव इवेति पारमेष्ठयायेति यथाकामं मरुद्रा मे अछान्गावः सोमस्य प्रथमभक्तः इमा या गावः स जनास इंद्र इछामि हृदा मनसा माहेंद्रकाले वाचयित्वा प्रतिदुहा (B2 M2 S इवेति N वेति B1 इंद्रेति); ṚV.6.28.5.

24) mss. °दिंद्रमि°; here S ceases: mss. मरुक्तं मरुत°.

26) mss. यः कुलायात्कुलायमिव.

30) M2 निपद्य B1 निषद्य B2 N निपधद्य for विघनस्.

31) mss. संदंशे अभिचर° (N B2 आभि°), °तेंद्र ; sc. वज्रेण वा ? cf. Kāty.Śr.22.11.23-27.

32) 2.2.1.52.

37) cf. Pañc.Br.22.4; Baudh.Śr. 18.52.

**6** Cf. Pañc.Br.20.1-10; Āp.Śr. 22.13.

7) B2 M2 B1 ज्येष्टिनेय आज्यैष्ट्य° (M2 °ष्ट°) N ज्येष्टिनेयः आज्यैष्ठय°.

8) M2 गोष्टाने B2 N B1 गोष्ठाने.

**7** Cf. Āp.Śr.22.8.

व्याघारणान्तं लुप्यते । ५ । श्वोभूते वैश्वदेवः पशुः । ६ । सिद्धमा नियोजनात् । ७ । मध्यमे परिधौ पशुं नियुनक्ति परिधिशकलेन स्वरुकर्मोत्करे वा चात्वालकर्म सर्वम् । ८ । वाजिनेन चरित्वा वापनकाले निवर्तयति । ९ । चतुरो मासान्न माँसमश्नातीति व्याख्यातम् । १० । वरुणप्रघासेषु पूर्वां पौर्णमासीमुपोष्य मारुतीं मेषीमालभेत । ११ । उत्तरवेदिम् । १२ । मिनोति यूपँ । यूपे नियुनक्ति । १३ । असँसृष्टे ऽन्तःपरिव्यङ्गारान्दक्षिणापोह्य करम्भपात्राणि जुहोति । १४ । हुतायाँ वपायां चात्वाले मार्जयित्वा वारुण्यै वत्सानपाकरोति । १५ । न स्वरुं जुहोति । न यूपमनुपदिशति । १६ । औत्तरवेदिके ऽग्निहोत्रं जुहोति । १७ । श्वोभूते वारुणो मेषः पशु । १८ । अवभृथादुदेत्य वारुणप्रघासिकेन चरित्वा यूपमनुदिशति । १९ । वापनकाले निवर्तयति । २० । चतुरो मासान्न माँसमश्नातीति व्याख्यातम् । २१ । साकमेधेषु पूर्वस्यां पौर्णमास्यामाग्नेयः पशुरु'त्तरस्यामैन्द्राग्नो' यजनीये वा प्राजापत्य एकादशिना वा पशु । २२ । अवभृथादुदेत्य पितृयज्ञेन चरन्त्यंत एकोल्मुकेन त्र्यम्बकान्यन्ति । २३ । प्रत्येत्यापरस्मिन्नग्नितन्त्र आदित्येन चरित्वा यूपमनुदिशति । २४ । वापनकाले निवर्तयति । २५ । चतुरो मासान्न माँसमश्नातीति व्याख्यातम् । २६ । शुनासीर्ये वायव्यः पशुरुपाँशुदेवतः । स वैश्वदेवेन व्याख्यातः । २७ । प्रतिपर्वहवीँषि पशुपुरोडाशेष्वन्वायातयति । यथा देविकास्तैरुपाँशु तथा प्रचरन्ति । २८ । वरुणप्रघासेषु सप्त पूर्वस्मिन्वारुण्येककपालावुत्तरस्मिन् । २९ । साकमेधेष्वनीकवत्सांतपनौ प्रथमे यथाकालं गृहमेधीयपूर्णदर्व्यौ मध्यमे क्रीडिनमुत्तमे । ३० । महाहवीँषि शुनासीर्ये चाम्नातः पशुः सामो वा । ३१ । ॥७॥

सौम्यैश्चातुर्मास्यैर्यजेत । १ । वैश्वदेवस्य लोके त्रिवृदग्निष्टोमो । दश दीक्षास्तिस्र उपसदः । २ । यूपोत्तरवेदिं निवर्तयति । ३ । धिष्ण्येषु लक्षणान्येव करोति । ४ । ऊर्ध्वँ हारियोजनाद्वाजिनेन चरन्ति । ५ । अहतँ वासो ऽवभृथादुदेत्य बार्हस्पत्यानूबन्ध्या । ६ । वापनकाले निवर्तयति । । चतुरो मासान्न माँसमश्नातीति व्याख्यातम् । ८ । वरुणप्रघासानाँ लोके द्व्यहः । षोडश दीक्षा द्वादशोपसदः । ९ । ज्योतिरग्निष्टोमः पूर्वः । १० । धिष्ण्येपूत्तरवेदिं निवपति । ११ । मिनोति यूपँ । यूपे नियुनक्ति । १२ । प्रातःसवने धिष्ण्येषु विहृतेषु मार्जालीये ऽग्निमुपधारयेत्करम्भपात्रेभ्यः । १३ । श्वोभूत उक्थ्यः । १४ । चतुर्दश्याँ वरुणतुषनिष्कासेन वरुणँ यजति । १५ । प्रत्येत्य मैत्रावारुण्यनूबन्ध्या । १६ । वापनकाले निवर्तयति । १७ । चतुरो मासान्न माँसमश्नातीति व्याख्यातम् । १८ । साकमेधानाँ लोके त्र्यहः । पञ्चदश दीक्षा द्वादशोपसदः । १९ । अग्निष्टोम उक्थ्यो ऽतिरात्रः । २० । चतुर्दश्यां तृतीयस्य तृतीय-

---

7) 1.8.3.6.

8) mss. शैवंते, corr. uncertain, r. शैवलान्ते ?

9) M2 °वर्तयंति the oth. °वपयंति; cf. 1.7.2.13, 23.

12) sc. निवपति.

14) cf. 1.7.4.15.

23) cf. 1.7.7.

30) mss. °कवतसां°; M2 क्रीडनिमु° the oth. क्रीडिनिमु°.

**8** Cf. Pañc.Br.17.13-14; Āp.Śr. 22.8-9.

5) mss. हार्योज°.

6, 16, 23) mss. °नुबं°.

15) mss. °तुश°; cf.1.7.4.40.

सवने धिष्ण्येषु विहृतेषु मार्जालीये ऽग्निमुपसमाधाय पितृयज्ञायोदयनीयादूर्ध्वँ पितृयज्ञेन चरन्ति । २१ । अत एकोल्मुकेन त्र्यम्बकान्यन्ति । २२ । प्रत्येत्य सूर्यानूबन्ध्या वशा । २३ । पशुपुरोडाशमादित्यं चरुमन्वायातयति । २४ । यूपमनुदिशति । २५ । वापनकाले निवर्तयति । २६ । चतुरो मासान्न मांसमश्नातीति व्याख्यातम् । २७ । शुनासीर्यस्य लोके त्रिवृदग्निष्टोमो ज्योतिरग्निष्टोमः । २८ । आश्विन्यनूबन्ध्या वैश्वदेवेन व्याख्याता । २९ । प्रतिपर्वहवीँषि प्रातःसवनिकेष्वन्वायातयति यथा पशुमत्सु । ३० । पुरा वसतीवरीणां परिहरणाद्गृहमेधीयः । पुरा प्रातरनुवाकात्पूर्णदर्वी यथा पशुमत्सु । ३१ । ये पशवस्ते ऽन्वहँ सवनीयाः । ३२ । पञ्चाशद्दक्षिणा उत्तमे द्वादशँ शतमुत्तमे द्वादशँ शतम् । ३३ । ॥८॥

**॥ इति राजसूये तृतीयो ऽध्यायः ॥**

उपरिष्टादतिरात्रा द्व्यहप्रभृतयो ऽहीना द्वादशाहपर्यन्ताः । १ । पौर्णमासीदीक्षाः । २ । मासापवर्गा उपसदः सत्यानाँ शेषेण । दीक्षा अन्यत्रवचनात् । ३ । तत्रैकाहिकशब्देष्वैकाहिका धर्मा ' दशरात्रिका इतरेषु । ४ । यथा पृष्ठ्या ग्रहाग्राणि त्र्यनीका वा । ५ । एकादशिनान्समधा विभजेदुत्तममुत्तमे ऽपि वा । ६ । ऐकाहिकशब्देषु क्रतुपशव ' एकादशिना इतरेषु । ७ । आङ्गिरसो द्व्यहानां प्रथमस्तेन यजेत यः पुण्यो हीन इव मन्येत प्रजाकामः पशुकामो वा । ८ । ज्योतिरग्निष्टोमः पूर्वँ सर्वस्तोमो ऽतिरात्रः षोडशिमानुत्तरम् । ९ । चैत्ररथेन राजा विजिगीषमाणो यजेत । १० । ज्योतिरुक्थ्यः पूर्वमायुरतिरात्रः षोडशिमानुत्तरम् । ११ । कापिवनेन यजेत य इच्छेदरूक्षः पशुमान्स्यामिति यो वा पशुमान्रूक्ष इव मन्येत प्रजाकामः पशुकामो वा । १२ । त्रिवृत्पञ्चदशो ऽग्निष्टोमः पूर्वँ सर्वस्तोमो ऽतिरात्रः षोडशिमानुत्तरम् । १३ । विश्वेषां देवानां गर्गत्रिरात्रः । सर्वकामो यजेतामु च लोकमभिजिगीषन् । १४ । दशरात्रस्यादितस्त्र्यहस्तस्यान्तरे अहनी विपरीते । तस्मिन्रात्रिः सषोडशिका । १५ । सप्तसप्तान्वहमाशिरे दुहन्ति । १६ । दक्षिणाकाले त्रिरूपा पष्टौही रूपसंपन्ना सहस्रतम्युपक्लृप्ता । १७ । त्रयस्त्रिँशतं त्रीणि च शतानि ददाति । १८ । तासु त्ववस्थितासु

त्वक्सहस्रमैरय उद्बलस्याभि नस्त्वचम् ।
स नः सहस्रमा भर वसुमान्वसुभिः सह ॥
पुनर्माविशताँ रयिः ॥

---

29) M2 अश्वंन्यनु° B2 अश्वान्यनु° N आश्वन्यनु°.
31) mss. °दर्वो.
1 Cf. Pañc.Br.20.11-21.8; Āp. Śr.22.14-18.
2-3) cf. Kāty.Śr.23.1.1, 2.
3) mss. °वग्र्या.
5) cf. 7.2.4.1-4.
6) mss. °शिनास°.
17) mss. °मीमुक्ताल्प; corr. from Baudh.Śr.16.24:270.6.
19) M2 °मैरेये the oth. °मैरेय.

इत्युन्नतस्य दक्षिणे कर्णे यजमानो जपति । १६ ॥ उभा जिग्यथुरित्याग्नीध्रीये पूर्णाहुतिं जुहोति । २० । उत्सृष्टा अनुमन्त्रयते । २१ ।

इह साधनः पूरो न आगाद्यो गोपाः पुष्टिपतिर्व आगात् ।
अस्माकं काममुपकामिनो विश्वे देवाः ॥
उपसृज पशूनिह इहो शकेव पुष्यत ।
इहैवोत प्र जायध्वमस्मान्वर्धयता नरः ॥
नि वर्तध्वं मानु गातास्मान्सिषक्त रेवतीः ।
अग्नीषोमा पुनर्वसू अस्मे धारयतँ रयिम् ॥
पुनरेना आ वर्तय मयि तिष्ठन्तु गोपतौ ।
पुनरेना आ वर्तय मयि तिष्ठतु यो रयिः ॥
जातवेदो नि वर्तय शतं ते सन्त्वावृतः सहस्रं त उपावृतः ।
अथा पोषस्य पोषेण पुनर्नो नष्टमाकृधि पुनर्नो रयिमाकृधि ॥

" पुनरूर्जा " सह रय्यो"र्जा वः पश्यामीति गोयज्ञस्तासाम् । २२ । य आर्षेयो विद्वाँस्तस्मै शतं ददाति । २३ । मध्यमे द्वितीयं । तासु वेहत्तस्याः कर्ण " ऊर्गस्यूर्ज मयि धेहि पुनर्माविशताँ रयिरिति । २४ । यो ऽनार्षेयो विद्वाँस्तस्मै शतम् । २५ । सहस्रतमीं दक्षिणापथेन नीत्वोत्तरत उत्तरवेदेस्तां दर्भेण प्रच्छाद्य प्राङ्मुखामवस्थापयति । २६ ।

आ जिघ्र कलशं महि ।
आ त्वा विशन्त्विन्दवः समुद्रमिव सिन्धवः ॥
सा नः सहस्रं धुक्ष्वोरुधारा पयस्वती ।
प्रजया सूनृते सह पुनर्माविशताँ रयिः ॥

इति द्रोणकलशमवघ्रापयति । २७ ॥ काम्यासि प्रियासि हव्यासीडे रन्ते जुष्टे सरस्वति महि विश्रुत ' एतानि ते ऽघ्न्ये नामानि ' देवेषु नः सुकृतो ब्रूयादिति गोनामानि दक्षिणे कर्णे यजमानो जपति । २८ । तस्या दशकला ब्रह्मणे ददाति पञ्चाग्नीधे । २९ ॥ एका ममेत्याहितां यजमानस्य गोष्ठे विसृजति । ३० । अन्नमेताभ्यां तार्प्यं च ददाति ' तस्य द्विभागं ब्रह्मणे । ३१ । उत्तमे तृतीयं । तासु वामनः·

---

20) cf.5.2.5.14.
21) mss. °ष्टानु°.
22) b) mss. इहो स एव पुष्यथ इवोप प्र; AV.3.14.4bc; c) mss. मानान् यातास्मान्सिषक्तु; ṚV.10.19.1, 2a; AV.6.77.3a; MS.I.7.1:109.17-110.2; I.5.3:69.15; M2 B1 °ज्ञःस्तरसां B2 N °ज्ञस्तरसां; is इतरासां meant, and do the first mantras belong to the one cow of sū.21 ?
24) cf. MS.II.6.12:71.3.
26) r. तार्प्येण for दर्भेण.
28) mss. एतानि नेध्ने, सूक्ष्तो (B2 षु° B1 सु°); Pañc.Br.20.15.15.
29) mss. °ग्नीध्र.
31) mss. तार्थं, cf. Āp.Śr.22.16.2.

प्रतिष्ठासि सहस्रस्य वैष्णवो वामनस्त्वम् ।
स नः प्रतिष्ठामा भर वसुमान्वसुभिः सह ।।
पुनर्माविशतांँ रयिः ।।

इति । ३२ । य आर्षेयो ऽविद्वाँस्तस्मै शतम् । ३३ । यथा गर्गत्रिरात्र एवमेकैकँ साहस्रं दत्वा सहस्र- तमीकर्म करोति । ३४ । प्रजापतेरश्वत्रिरात्रः 'स व्याख्यातः । ३५ । इन्द्राग्न्योर्वैदत्रिरात्रो । राजा विजि- गीषमाणो यजेत । ३६ । त्रयस्त्रिवृतो ऽतिरात्राः षोडशिमन्तः । ३७ । आदित्यानां छान्दोमः....। ३८ ।.... पराकः । स्वर्गकामो यजेत । ३९ । गर्गत्रिरात्रेण व्याख्यात । एतद्देवानामेषयेत् । ४० । ।।१।।

अत्रेश्चतुर्वीरश्चतुरात्राणां प्रथमो । य इछेच्चत्वारो मे वीरा आजायेरन्निति स एतेन यजेत । १ । अग्निष्टोम उक्थ्यावतिरात्रः । २ । जमदग्नेर्द्वितीयो । ऽपरिमितां पुष्टिमिछन्यजेत । ३ । विँशतिर्दीक्षा द्वादशोपसदः । ४ । अनूपसदं पुरोडाशान्तूष्णीमुपचरितान्श्रपयति । ५ । अलंकृत्याज्यैः सह सादयति । ६ । उपसदा प्रचर्या''ग्ने वेर्होत्रँ वेरध्वरमा पितरँ वैश्वानरमवसे करिन्द्राय देवेभ्यो जुहुतांँ हविरित्यृजुं प्रतिष्ठितँ हुत्वोपसदं जुहोति । तथापराह्णिक्याम् । ७ । एतेन वै धर्मेणोत्तरासु द्विकपालं त्रिकपालं कपालाभ्युच्चयेना द्वादशकपालात् । ८ ।। देवावश्विनौ मधुकशयाद्येमँ यज्ञँ यजमानाय मिमिक्षतमिन्द्राय देवेभ्यो जुहुतांँ हविँर्देव विष्ण उर्वद्यास्मिन्यज्ञे यजमानाय विक्रमस्वेन्द्राय देवेभ्यो जुहुतांँ हविँर्देव सोम रेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुतांँ हविँर्देव धातः सुधाताद्यास्मिन्यज्ञे यजमानायैधी- न्द्राय देवेभ्यो जुहुतांँ हविँर्देवा ग्रावाणो मधुमतीमद्यास्मिन्यज्ञे यजमानाय वाचँ वदतेन्द्राय देवेभ्यो जुहुतांँ हविँर्देव्यनुमते ऽन्वद्येमँ यज्ञँ यजमानाय मन्यस्वेन्द्राय देवेभ्यो जुहुतांँ हविँर्देव्यदिते स्वादित्यमद्यास्मिन्यज्ञे यजमानायासुवस्वेन्द्राय देवेभ्यो जुहुतांँ हविः '' सदःसदः प्रजावानृभुर्जुषाणो ज्ञ इन्द्राय देवेभ्यो जुहुतांँ हविँर्देव त्वष्टः सुरेतोधा अद्यास्मिन्यज्ञे यजमानायैधीन्द्राय देवेभ्यो जुहुतांँ हविरिति स्वाहाकारान्तैरादधाति । ९ । अग्निष्टोम उक्थ्यावतिरात्रः । १० । वसिष्ठस्य सँसर्पः । प्रजातिकामो यजेत । ११ । अग्निष्टोम उक्थ्यावतिरात्रः । १२ । विश्वामित्रस्य संजयो । राजा विजिगीषमाणो यजेत । १३ । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्य एकविँशो ऽतिरात्रः । १४ । विश्वेषां देवानामभ्यासङ्ग्यः पञ्चाहो । भ्रातृव्यवान्स्वर्गकामः पशुकामो वा यजेत । १५ । आदितः पञ्चाहो दशरात्रिकः । पञ्चमे रात्रिर्महताम्

33) mss. °यो विद्वाँ°, cf. Pañc.Br. 20.15.11.
34) M2 सहस्र B2 B1 सहस्रे N साहस्रे.
36) mss. °वैंतदतिरात्रो.
37-39) only in B2 N.
38-39) mss. छादामना, then an hiatus, wherein also *antarvasu* is missing.

2 Cf. Pañc.Br.21 9-14; Āp.Śr. 22.18-21.
1) mss. °श्चातिरा°.
7) mss. °नरमुपसेक°.
9) mss. विष्णुर्वद्या° (N °वैं°), °जुँषाणज्ञ, *Savitṛ* and *Āpas* will be missing.
11) M2 ससुर्यँ B1 ससूर्यः B2 N सँसूर्यः .
16) r. : °महाव्रतवान्, cf. Baudh.Śr. 16.29:275.7.

। १६ । मरुत्स्तोमः पञ्चशारदीयो । भूमानं प्रेप्सन्यजेत । १७ । वैशाख्याममावास्यायाँ यजनीये ऽहनि पशुबन्धायोपवसति । १८ । सिद्धमोपाकरणात् । १९ । सप्तदश पृश्नीस्त्रिवत्सा अप्रवीता उपाकरोति । २० । सप्तदश पृश्नीनुक्षणो ऽनडुहः पञ्चवर्षाननूपर्ध्येति । २१ । सर्वेषु पशुबन्ध्येषूपाकरणं प्रोक्षणमुपपायनं पर्यग्निकरणम् । २२ । उक्षणामुत्सर्जनं चेतराभिः सँस्थापयन्ति । २३ । प्रायश्चित्तानि । यदि प्रासहा हरेयुरिन्द्रायाप्रसह्यायैकादशकपालं निरुप्याथान्यं तद्रूपं तद्वर्णं तद्वयसमुपाकरोति । २४ । यदि कूटः काणः श्रोणो वा बार्हस्पत्यं चरुँ ' यदि काणो वैव सौर्यमेककपालँ । यदि स्वभ्रं गर्तं वा भौममेककपालँ । यदि पतेत्वायव्यं चरुँ । यद्यवसीदेन्नैर्ऋतं चरुँ । यद्यन्यो ऽन्येनापतायेत प्राजापत्यं द्वादशकपालं निरुप्याथान्यं तद्रूपं तद्वर्णं तद्वयसमुपाकरोति । २५ । मारुत्यो वत्सतर्यः सँवत्सरे राजीवत्यो द्वितीये कल्माषाः तृतीये नवनीतपृश्नीररुणाश्चतुर्थे पिशङ्गीः पञ्चमे । २६ । सोमास्वस्मिन्यजनीये दीक्षते । २७ । अष्टादश दीक्षा' द्वादशोपसदः । २८ । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः पञ्चदशो ऽतिरात्रः सप्तदशो ऽतिरात्रः । २९ । ऐन्द्रामारुता उक्षाणः सवनीयास्त्रय एकस्मिन्नहनि पञ्चोत्तमे । ३० । ॥२॥

प्रजापतेर्व्रतवानंन्नाद्यकामो यजेत । १ । ज्योतिरग्निष्टोमो गौरुक्थ्यो महाव्रतं गौरुक्थ्यो आयुरतिरात्रः । २ । ऋतूनाँ षडहः । प्रतिष्ठाकामो यजेत । ३ । पृष्ठ्यः षडहस्त्रयस्त्रिँशः त्रिः । ४ । इन्द्रस्य सँहितो । वीर्यकामो यजेत । ५ । त्रिवृदग्निष्टोमः पञ्चदश उक्थ्यः सप्तदश उक्थ्यो ज्योतिर्गौरायुरतिरात्रः । ६ । देवानां पृष्ठ्यावलम्बो । राजा विजिगीषमाणो यजेत । ७ । अभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः । ८ । ऋषीणाँ सप्तरात्र । ऋद्धिकामो यजेत । ९ । पृष्ठ्यः षडहो महाव्रतमतिरात्रभूतम् । १० । प्रजापतेर्द्वितीयः। प्रजातिकामो यजेत । ११ । पृष्ठ्यः षडहः सप्तदशं महाव्रतमतिरात्रभूतम् । १२ । आदित्यानां तृतीयः । पशुकामो यजेत । १३ । पृष्ठ्यः षडहश्छन्दोमपवमानं महाव्रतमतिरात्रभूतम् । १४ । जमदग्नेश्चतुर्थो । ऽपरिमितां पुष्टिमिच्छन्यजेत । १५ । अभ्यासङ्ग्यः पञ्चाहस्त्रयस्त्रिँशँ षष्ठमहः सप्तदशं महाव्रतमतिरात्रभूतम् । १६ । इन्द्रस्य पञ्चमो । वीर्यकामो यजेत । १७ । त्रिकद्रुकत्र्यहो ऽभिजिद्विश्वजित्सर्वजित्सर्वस्तोमो ऽतिरात्रः । १८ । प्रजातेर्जनकसप्तरात्रः । प्रजातिकामो यजेत । १९ । चत्वारि त्रिवृदहान्यग्निष्टोममुख्यानि विश्वजिन्महाव्रतं ज्योतिरतिरात्रः । २० । देवानां पृष्ठ्यस्तोम ।

17) M2 प्रदय° N प्रेदय° B2 B1 प्रेप्स्य°.

19) 2.3.6.15.

20) mss. पृश्निस्त्रि°.

21) M2 प्रश्निनुदपहा the oth. पृश्निनुदपाहा; B1 N °वर्षाननूप ऋध्येति M2 वर्षानुनूप ऋधेति B2 °वर्षानुनूप ऋध्येति.

22) cf. 1.8.3.1-22.

23) mss. °मदणामुत्सर्जनं वेताराभिसँ°.

24) mss. °द्राय प्रसह्यान एका°.

25) mss. कूटः कर्ण षष्टो वा, cf. Kāty. Śr.23.4.16; mss. वैवा, यद्यवसीन्नै°.

26) mss. राजीवात्यो.

27) B2 N सोमास्तस्मि° M2 सोमाःस्वस्मि° B1 सोमाःस्तस्मि°.

29) सप्तदश उक्थ्यः is missing.

3 Cf. Pañc. Br.21.15-22.18; Āp. Śr.22.21-24.

18) mss. त्रिकद्रिक°.

21-22) cf. Pañc.Br.22.10; mss. कामान°; r. सत्त्रं.

उभौ कामाववरुरुत्समानो यजेत यो यज्ञः सत्रे च । २१ । पृष्ठ्यः षडहो बृहद्रथंतरसामा विश्वजिदतिरात्रः । २२ । वसूनामष्टरात्रो । देवत्वकामो यजेत । २३ । पृष्ठ्यः षडहो महाव्रतं ज्योतिरतिरात्रः । २४ । देवानां नवरात्र । आयुष्कामो यजेत । २५ । पृष्ठ्यः षडहो ज्योतिर्गौरायुरतिरात्रः । २६ । आदित्यानां द्वितीयः । पशुकामो यजेत । २७ । त्रिकद्रुकत्र्यहो ऽभ्यासङ्ग्यः पञ्चाहो विश्वजिदतिरात्रः । २८ । इन्द्रस्य त्रिककुद्दशरात्रः । पाप्मनो मोक्षमाणो यजेत । २९ । त्रिवृतावग्निष्टामौ पञ्चदश उक्थ्यो मध्ये सप्तदशावग्निष्टोमावेकविँश उक्थ्यो मध्ये......। ३० ।......यजेत । ३१ । त्रयस्त्रिवृतो ऽग्निष्टोमास्त्रयः पञ्चदशा उक्थ्यास्त्रयः सप्तदशा उक्थ्या एकविँशो ऽतिरात्रः । ३२ । आदित्यानां छन्दोमदशाहः । पशुकामो यजेत । ३३ । अभ्यासङ्ग्यः पञ्चाहश्चत्वारश्छन्दोमा विश्वजिदतिरात्रः । ३४ । देवानां पूर्दशरात्रो ' ऽभिचर्यमाणो यजेत । ३५ । त्रिवृदग्निष्टोमो ज्योतिरुक्थ्यस्त्रिवृदग्निष्टोमो गौरुक्थ्यो ऽभिजिदग्निष्टोमो गौरुक्थ्यो विश्वजिदग्निष्टोम आयुरुक्थ्यो विश्वजिदग्निष्टोमः सर्वस्तोमो ऽतिरात्रः । ३६ । क्षेमधन्वा पौण्डरीक । एकादशरात्रेण यजेत पारमेष्ठ्यकामः स्वाराज्यकामो वा । ३७ । अभ्यासङ्ग्यः षड......। ३८ ।......अन्वहँ विहृत्य सहस्राणि ददाति चतुष्टोमे ऽश्वसहस्रम् । ३९ । व्याख्यातो द्वादशाहो द्वादशाहः । ४० । ॥३॥

## ॥ इति राजसूये चतुर्थो ऽध्यायः ॥

सत्रेष्वभिप्लवँ षडहं प्रतीयाद्दशरात्रे द्वादशाहस्य दशाहान्यन्यत्प्रायणीयोदयनीयाभ्यां ' पञ्चाहे ज्योतिर्गौरायुरिति त्रिकद्रुकं पञ्चाहं ' नवरात्रे ऽभिजितँ स्वरसाम्नो विषुवतमावृत्तान्स्वरसाम्नो विश्वजितँ सर्वपृष्ठं ' त्रिरात्रे ज्योतिर्गौरायुरिति त्रिरात्रं ' त्रयस्त्रिँशारम्भणे प्रतिलोमं पृष्ठमु'पोत्तमँ व्रतमनादेशे । १ । द्वाहशाहप्रभृतीनि सत्राण्युभयतोऽतिरात्राण्यहरभ्युच्चयेना चत्वारिँशाद्रात्रात् । २ । तेषामहःक्लृप्तिः । ३ । द्वादशाहे पुरस्ताच्छन्दोमानाँ सर्वस्तोमो ऽतिरात्र । ऋद्धिकामास्त्रयोदशरात्रमुपेयुः । ४ । उपोत्तमँ व्रतमुत्तरस्य । प्रतिष्ठाकामास्त्रयोदशरात्रमुपेयुः । ५ । द्वादशाहस्य दशाहानि विषुवान्'देवत्वकामास्त्रयोदशरात्रमुपेयुः । ६ । चतुर्विँश उक्थ्यो नवरात्रो महाव्रतं । प्रतिष्ठाकामास्त्रयोदशरात्रमुपेयुः । ७ ।

---

28) mss. त्रिकद्रिक°.
30) mss. त्रिवृदग्निष्टोमो.
30-31) insert probably: त्रिणवावग्निष्टोमौ त्रयस्त्रिँश उक्थ्यो मध्ये विश्वजिदतिरात्रः । ३० । कुसुरुबिन्ददशरात्रो । भूमानं प्रेप्सन् .
35) mss. पूर्गदश°.
36) विश्वजिदग्निष्टोम आयुरुक्थ्यो not M2 B1.
38-39) mss. षडत्रोहीनांन्वन(हं)विहृत्याति [B2 N नि]सहस्राणि. r. perhaps: षडहस्त्रयश्छन्दोमाश्चतुष्टोमो ऽग्निष्टोमो विश्वजिदतिरात्रः । ३८ । अयुतं दक्षिणा । अन्वहँ विहृत्य सहस्राणि; may the mss. mean: षडहो ऽत्रीनां ?
1 Cf. Pañc.Br.23; Āp.Śr.23.1-5.
1) mss. षडाह, पंचाहो, °रिति रात्रिककुभं पंचाहं, r. °युर्गौरायुरिति पञ्चाहं ? cf. Āp.Śr.23.2.14; mss. त्रिरा for त्रिरात्रं or त्रिकद्रुकं.
6) mss. द्रादशाहस्य माहा विषुवा°; r. दशाहो ?

गोआयुषी दशरात्रः । प्रतिष्ठाकामाश्चतुर्दशरात्रमुपेयुः । ८ । पृष्ठ्य आवृत्तः पृष्ठ्यो । देवत्वकामाश्चतुर्दशरात्रमुपेयुः । ९ । उभयतस्त्रिरात्राभ्यां पृष्ठ्यो । यांँस्तल्प उदके वा विवाहे मीमाँसेरँस्त एव चतुर्दशरात्रमेपेयुः । १० । पृष्ठ्यो महाव्रतं पृष्ठ्यस्त्रयस्त्रिँशारम्भणो यथा वैकाष्टकायां महाव्रतँ स्याद्व्रताद्ब्रह्मवर्चसकामाः पञ्चदशरात्रमुपेयुः । ११ । त्रिवृदग्निष्टुदग्निष्टोम उभयतस्त्रिरात्राभ्यां पृष्ठ्यो । ब्रह्मवर्चसकामाः पञ्चदशरात्रमुपेयुः । १२ । त्रिवृदग्निष्टुदग्निष्टोमस्त्रिरात्रो दशरात्रश्चान्य उत्तरतोऽतिरात्रः । सत्त्रे यज्ञे चर्द्धिकाममिछन्त एतं पञ्चदशरात्रमुपेयुः । १३ । एतास्वेव व्रतँ । विजितिकामाः षोडशरात्रमुपेयुः । १४ । पञ्चाहो दशरात्रः । श्रीकामाः सप्तदशरात्रमुपेयुः । १५ । षडहो दशरात्र । आयुःकामा अष्टादशरात्रमुपेपुः । १६ । एतास्वेव व्रतं ।.........। १७ ।.........। ब्रह्मवर्चसकामा विँशतिरात्रमुपेयुः । १८ । पृष्ट्यः स्वरसामानो विषुवानावृत्ताः स्वरसामानः पृष्ठ्यस्त्रयस्त्रिँशारम्भणो । ऽन्नाद्यकामा एकविँशतिरात्रमुपेयुः । १९ । त्रयः षडहा ऊर्ध्वं प्रथमादतिरात्रो । ऽन्नाद्यकामा एकविँशतिरात्रमुपेयुः । २० । त्र्यहः षडहो दशरात्रो महाव्रतं । पशुकामा द्वाविँशतिरात्रमुपेयुः । २१ । पञ्चाहः षडहो दशरात्रः । प्रतिष्ठाकामास्त्रयोविँशतिरात्रमुपेयुः । २२ । सँसदामयनं । पृष्ठ्यस्तोमः षडहस्त्रयस्त्रिँशमहरनिरुक्तमुपहव्यक्लृप्तं त्रयस्त्रिँशमहर्निरुक्तं त्रिणवं द्वे एकविँशे त्रिणवं त्रयस्त्रिँशमहर्निरुक्तं त्रयस्त्रिँशमहरनिरुक्तं पृष्ठ्यस्तोमः षडहः प्रत्यङत्रिवृदहरनिरुक्तं ज्योतिष्टोमो ऽग्निष्टोमो । ऽन्नाद्यकामाश्चतुर्विँशतिरात्रमुपेयुः । २३ । षडहौ दशरात्रो । ऽन्नाद्यकामाश्चतुर्विँशतिरात्रमुपेयुः । २४ । एतास्वेव व्रतं । ब्रह्मवर्चसकामाः पञ्चविँशतिरात्रमुपेयुः । २५ । एतास्वेव गोआयुषी पुरस्तात्षडहानां न व्रतँ । विजितिकामाः षड्विँशतिरात्रमुपेयुः । २६ । एतास्वेव त्र्यहः पुरस्तात्षडहानां न गोआयुषी । श्रीकामाः सप्तविँशतिरात्रमुपेयुः । २७ । एतास्वेव व्रतमायुःकामा अष्टाविँशतिरात्रमुपेयुः । २८ । पञ्चाहः षडहौ दशरात्रो । ब्रह्मवर्चसकामा एकोनत्रिँशद्रात्रमुपेयुः । २९ । त्रयः षडहा दशरात्रः । पुरुषकामास्त्रिँशद्रात्रमुपेयुः

---

9) not M2 B1; B2 N वृतः पृष्ठो for पृष्ठ्य आवृत्तः पृष्ठ्यो.

10) mss. °भ्यामुभयतः पृष्ठया यँस्तव्य उदके.

11) r. वातिरात्रं for व्रताद्, cf. Āp. Śr.23.2.3.

12) mss. °भ्यामुभयतः पृष्ठयो.

13) mss. only °स्त्रिरात्रश्चान्य.

14) mss. °तास्तेच्चव्रतँ.

16) Before °मुपेयु° follows 5.2.14.14 अहतँ वासः up to the end of 28 जुहुयात्. Then follows the first part of the *gonāmika*, that is given in S as 5.2.15-16. The text will bring this after the *sattras*. Thus between °रात्र° and °मुपेयु° there are three pages in M2 B2 N B1.

22) After sū.22 khaṇḍa 1 ends. There are 6 khaṇḍas in 9.5. As the *gonāmika* is left out for the present, the khaṇḍas become shorter; therefore 1-2 are given as 1, 3-4 as 2, 5 as 3, 6 as 4, and the *gonāmika* as 5-6.

23) mss. twice °हरनिरु° for °हर्निरु°, त्रिणवं द्वे up to त्रिवृदहरनिरुक्तं not M2; B2 N B1 twice तृणव for त्रिणवं.

24) mss. षडहो.

26) mss षडहायान्ना व्रतँ.

27) mss. षडहायौना गो°.

29) B2 N B1 षडहो, not M2.

30) mss. षडहो for त्रयः षडहा.

। ३० । एतास्वेव व्रतमं ोजस्कामा एकत्रिँशद्रात्रमुपेयु: । ३१ । एतास्वेव गोआयुषी पुरस्तात्षडहानां न व्रतं । पशुकामा द्वात्रिँशद्रात्रमुपेयु: । ३२ । ॥१॥

आ त्रयस्त्रिँशात्त्रय: पृष्ठ्या: पञ्चाहा विश्वजिदतिरात्र: पञ्चाहो दशरात्र: । प्रतिष्ठाकामास्त्रयस्त्रिँशद्रात्रमुपेयु: । १ । त्रय: षडहा मध्यमभितो ऽतिरात्रौ दशरात्रो महाव्रतं । प्रतिष्ठाकामास्त्रयस्त्रिँशद्रात्रमुपेयु: । २ । त्रय: पृष्ठ्या: पञ्चाहा विश्वजिदतिरात्रस्त्रय: पृष्ठ्या: पञ्चाहा: । प्रतिष्ठाकामास्त्रयस्त्रिँशद्रात्रमुपेयु: । ३ । त्र्यहस्त्रय: षडहा दशरात्रो महाव्रतमंन्नाद्यकामाश्चतुस्त्रिँशद्रात्रमुपेयु: । ४ । त्र्यहस्त्रय: षडहा दशरात्रो गोआयुषी । ब्रह्मवर्चसकामा: पञ्चत्रिँशद्रात्रमुपेयु: । ५ । चत्वार: षडहा दशरात्रो । विजितिकामा: षट्त्रिँशद्रात्रमुपेयु: । ६ । एतास्वेव व्रतँ । श्रीकामा: सप्तत्रिँशद्रात्रमुपेयु: । ७ । एतास्वेव गोआयुषी पुरस्तात्षडहानां न व्रतमंायु:कामा अष्टात्रिँशद्रात्रमुपेयु: । ८ । एतास्वेव त्र्यह: पुरस्तात्षडहानां न गोआयुषी । ब्रह्मवर्चसकामा एकोनचत्वारिँशद्रात्रमुपेयु: । ९ । एतास्वेव व्रतं । पुरुषकामाश्चत्वारिँशद्रात्रमुपेयु: । १० । अग्निष्टोमो द्वावुक्थ्यौ ' त्रिवृत्स्तोमस्त्रयाणाम'तिरात्रो नवोक्थ्या: षोडशी दशम: पञ्चदशस्तोमा अतिरात्रो द्वादशोक्थ्या: सप्तदशस्तोमा अतिरात्र: पृष्ठ्यो ऽतिरात्रो द्वादशोक्थ्या एकविँशस्तोमा। वायोर्विधृतिर्वि पाप्मना वर्तेमहीतिकामास्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । ११ । पञ्चानाँ षडहानां द्वयोर्द्वयो: पुरस्ताद्द्वौद्वावतिरात्रौ पञ्चमस्य पुरस्ताद्द्वादशरात्रो महाव्रतं । प्रतिष्ठाकामास्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १२ । षण्णाँ षडहानां पञ्चमस्य पुरस्तात्सर्वस्तोमो ऽतिरात्र: षष्ठस्योपरिष्टाद्दशरात्र: । १३ । आञ्जीरँश्चाभ्यञ्जीरँश्च तेष्वह:सु गुग्गुलफाण्टेन प्रात:सवने सौगन्धिकफाण्टेन माध्यंदिने सवने पूतुदारुफाण्टेन तृतीयसवने ' प्रातरनुवाकमनुवक्ष्यन्त: प्रात:सवने प्रसर्पन्तश्चैवमुत्तरयो: सवनयो: । १४ । य आत्मानं नैव जानीरँस्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १५ । चतुर्विँश उक्थ्यस्त्रय: षडहा नवरात्र: षडहो गोआयुषी दशरात्रो महाव्रतँ । सँवत्सरसंमितँ । सँवत्सरकाम'मिच्छन्तस्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १६ । अग्निष्टोम: पञ्चोक्थ्या अग्निष्टोमावभित उक्थ्यो मध्ये त्रिवृत्स्तोमो ' नवानामेतेन कल्पेन त्रयो नवरात्रा व्याख्याता: पञ्चदशसप्तदशैकविँशस्तोमा ' दशरात्रो महाव्रतँ । सावित्रं ककुभं । प्रसवकामास्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १७ । तृतीयेनोपोत्तमो व्याख्यात: ' सर्वस्तोमस्य स्थाने महाव्रतं । नाञ्जीरन्नाभ्यञ्जीर'न्वि पाप्मना वर्तेमहीतिकामास्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १८ । षट्षडहा दशरात्रो महाव्रतं । प्रतिष्ठाकामास्त एतमेकोनपञ्चाशद्रात्रमुपेयु: । १९ । सँवत्सरसंमिते पृष्ठ्या-

---

32) Between गोआ° and °युषी the mss. bring the second part of the *gonāmika*; khaṇḍa 2 ends in the beginning of this second part, thus °युषी unto °पेयु: are given in khaṇḍa 3.

**2** Cf. Pañc.Br.24; Āp.Śr.23.5-8.

4) twice in the mss.

5) mss. त्रयस्त्यहा: ; B2 N B1 षडहा दशाहा: षडहा दशरात्रो.

10) here ends 9.5.3 in M2 B1 N B2.

11) mss. दशम: पंचदम: पंजदशस्तोमो तिरात्र: पृष्ठयो तिरात्रो द्वादशोक्थ्या: सप्तदशस्तोमो तिरात्र: .

14) mss. पौत°.

16) M2 सँवत्सँ समतँ N सँवत्सरं सपतँ B2 सँवत्सरं समतँ, not B1. cf.sū.20.

वधिकौ पुरस्तादभिजित उपरिष्टाद्विश्वजित । ऋद्धिकामा एकषष्टिरात्रमुपेयुः । २० । त्र्यहश्चतुर्दश षडहा दशरात्रो महाव्रतमायुःकामाः शतरात्रमुपेयुः । २१ । अभिप्रयायमभिषुण्वन्ति समानत्राभिषुण्वन्ति । २२ । दीक्षोदवसानँ वा । २३ । आग्नेय ऐन्द्राग्नो वैष्णवः पौष्णो वायव्य आश्विनः षडतिरिक्ताः पशवः सत्त्रेषु । २४ । ॥२॥

गवामयनं प्रजातिकामा उपेयुस्तेनादित्यानामयनँ व्याख्यातमङ्गिरसां च । १ । त्रिवृत्पञ्चदशस्तोमः षडहानां पुरस्तात्पृष्ठ्यो मासानां प्राग्विषुवतः ' पञ्चदशत्रिवृदुपरिष्टान्मध्ये पृष्ठ्यो मासानाम् । २ । बृहस्पतिसवो ऽभिजितः स्थाने विश्वजित इन्द्रस्तोमस्तस्मादुत्तरः पृष्ठ्यः षडहश्च दशरात्रो व्यूढा अग्निष्टोमास्त्रिवृत उद्भिद्बलभिदौ च । सो ऽष्टाविँशत्यहः । ३ । पृष्ठ्यः षडहो मध्ये गोआयुषी अवरूढस्तोमश्छन्दोमदशाहः । ४ । गवामयनेन शेषो व्याख्यातः । स्वर्गकामा उपेयुः । ५ । अङ्गिरसामयनं । त्रिवृत्स्तोमः षडहानां ' पुरस्तात्पृष्ठ्यो मासानां प्राग्विषुवत ' ऊर्ध्वमुपरिष्टात्पृष्ठ्यो मासानाम् । ६ । षडहयोश्चायुश्चगौश्चानुलोमश्छन्दोमदशाहः । ७ । आदित्यानामयनेन शेषो व्याख्यातः । स्वर्गकामा उपेयुः । ८ । दृतिवातवतोरयनं । पृष्ठ्यस्यैकैकेनाह्ना प्राग्विषुवतो मासान्यन्ति । विषुवतः स्थाने महाव्रतं । तैरेवावृत्तैरुपरिष्टात्प्रथमोत्तमे अहनी सातिरात्रे । ऋद्धिकामा उपेयुः । ९ । कुण्डपायिनामयनं । मासं दीक्षिता भवन्ति । ते मासि राजानं क्रीणन्ति । १० । द्वादशोपसद ' उत्तमायामुपसद्यापराह्णिकीँ सँस्थाप्य सोमं महावीराँश्च निधायाग्निहोत्रेण दर्शपौर्णमासाभ्यां चतुर्भिश्चातुर्मास्यपर्वभिरेकैकेन मासान्यन्ति । ११ । अर्धमासं पौर्णमासीमर्धमासममावास्याँ सँस्थाप्य शुनासीर्यमुत्साद्य महावीरानग्निप्रणयनप्रभृति पयोदोहनान्तं कृत्वा वसन्ति । १२ । श्वोभूते प्रातरनुवाकप्रभृति पञ्चभिः पृष्ठ्याहोभिरेकैकेन मासान्यन्ति । १३ । अष्टादश त्रयस्त्रिँशान्यहानि दशरात्रो महाव्रतमुदयनीयो ऽतिरात्रः ' स मासः । १४ । अत्सरुकैश्चमसैः सोमान्भक्षयन्ति । १५ । यो होता साध्वर्युः स पोता ' य उद्गाता सो ऽछावाकः स नेष्टा ' यो मैत्रावरुणः स ब्रह्मा स प्रतिहर्ता ' यः प्रस्तोता स ब्राह्मणाछँसी स ग्रावस्तुद्यः प्रतिप्रस्थाता सो ऽग्नीत्स उन्नेता । स मासमधीते । गृहपतिर्गृहपतिः ' सुब्रह्मण्यः सुब्रह्मण्यः । १६ । न वरुणप्रघासेष्ववभृथँ यन्ति । भूतिकामा उपेयुः । १७ । क्षुल्लकतापश्चितं । चतुरो मासान्दीक्षिता भवन्ति । चतसृभिरुपसद्भिश्चरन्ति । १८ । चतुर्भिः पृष्ठ्याहोभिरेकैकेन मासान्यन्ति । स्वर्गकामा उपेयुः । १९ । मध्यमतापश्चितं । सँवत्सरं दीक्षिता

22) mss. समनेत्रा°.
23) cancel वा, cf. Āp.Śr.21.13.5.
24) mss. षडिति°.
**3** Cf. Pañc.Br.25.1-9; Āp.Śr.23.9-12.
1) cf. 7.2.4.13 seq.
3) cf. 7.2.4.19; 5.7, 11-13.
4 and 7) cf.7.2.5.16.
9) mss. वृति°, महाव्र.
12) mss. पौर्णमास्यर्ध°.
14) mss. सप्त दीक्षाः for स मासः, corr. uncertain but probable, cf. 7.2.4.17, 22.
15) M2 सत्सुरु° the oth. सत्सूरु°.
17) mss. °प्रघासेष्टाव°, also possible °प्रघासैरिष्ट्वाव°.
18-23) cf. Kāty.Śr.24.5.1-9.

भवन्ति । सँवत्सरमुपसद्भिश्चरन्ति । २० । गवामयनँ सुत्या । प्रजातिकामा उपेयुः । २१ । महातापश्चितं । त्रीणि वर्षाणि दीक्षिता भवन्ति । त्रीणि वर्षाण्युपसद्भिश्चरन्ति । २२ । गवामयनमादित्यानामयनमङ्गिरसां च त्रिःसँवत्सरँ सुत्या । प्रथमोत्तमे अहनी सातिरात्रे । ऋद्धिकामा उपेयुः । २३ । नैमिषीयाणामयनं द्वादशसँवत्सरं । तैरेवाहोभिरेकैकेन त्रीँस्त्रीन्सँवत्सरान्यन्ति । स्वर्गकामा उपेयुः । २४ । शाक्त्यानामयनँ षट्त्रिँशत्सँवत्सरं । तैरेवाहोभिरेकैकेन नवनव सँवत्सरान्यन्ति । २५ । तरसमयाः पुरोडाशाः सुत्यासु । मृगपक्षिणां प्रशस्तानाँ शुकानां माँसानां पृष्ठ्यपुरोडाशान्कुर्वन्ति यथोचितमृद्धिकामा उपेयुः । २६ । साध्यानामयनँ शतसँवत्सरं । तैरेवाहोभिरेकैकेन पञ्चविँशतिपञ्चविँशतिँ सँवत्सरान्यन्ति । स्वर्गकामा उपेयुः । २७ । अतिरात्रयोर्मध्ये सहस्रमहानि शतक्रत्वो दशरात्रस्य वेति सहस्रसाव्यँ । त्रि पाप्मना वर्तेमहीतिकामा उपेयुः । २८ । ॥३॥

सरस्वत्या अप्यये दीक्षते । १ । चक्रीवन्ति दीक्षितस्य शालाग्नीध्रसदोहविर्धानानि च । २ । वेदिमात्रे संमिमीयुर्न वेदिं मिमीते नोत्तरवेदिम् । ३ । उलूखलबद्धो यूपः प्रकृष्यः । ४ । अभिषुण्वन्ति नोपरवान्खनन्ति । ५ । अतिरात्रे सवनीयस्य वपाँ हुत्वेन्द्राय सांनाय्याय वत्सानपाकरोति । ६ । अग्निष्टोमँ सँस्थाप्येध्माबर्हिः संनह्यति । ७ । षोडशिनँ सँस्थाप्य सायं दोहयति । ८ । अतिरात्रँ सँस्थाप्य सांनाय्येन यजन्ते । ९ । सांनाय्यँ सँस्थाप्याग्रेणाहवनीयमवस्थायाध्वर्युः प्राचीँ शम्यां प्रास्यति । सा यत्र निपतति तद्गार्हपत्यस्थानं । ततः षट्त्रिँशत्प्रक्रमेष्वाहवनीयः । १० । तत्रानुपर्याहृत्याग्नीध्रवेदिमात्रे सदोहविर्धानानि प्रतिष्ठाप्य सांनाय्येन यजन्ते । तेन पूर्वपक्षँ यन्ति । ११ । गौरुक्थ्यः पौर्णमास्याँ । सँस्थिते पौर्णमासेन यजन्ते । तेनापरपक्षँ यन्ति । १२ । आयुरुक्थ्यो ऽमावास्यायाम् । १३ । सांनाय्येन पूर्वपक्षान्यन्ति पौर्णमासेनापरपक्षान् । १४ । दीक्षिष्यमाणाः शते गोष्वृषभमुत्सृजन्ति । १५ । ता यत्र सहस्रँ संपद्यन्ते तदुत्थानँ ' सर्वासूपहतासूत्थानं ' गृहपतौ प्रेत उत्थानं ' प्लाक्षं प्रस्रवणं प्राप्योत्थानम् । १६ । सहस्रे संपन्ने गौरुदयनीयो ऽतिरात्रः ' सर्वासूपहतासु विश्वजिद्गृहपतौ प्रेत आयुः । १७ । यद्यर्वाक्प्लाक्षात्प्रस्रवणादुत्तिष्ठेरन्स्थलैर्मध्यस्योत्तरतो ह्रदे ऽवभृथमभ्यवेयुः । १८ । प्लाक्षं प्रस्रवणँ यन्तो दृषद्वत्या अप्यये निर्वपेदपोनप्त्रीयं चरुम् । १९ । प्लाक्षं प्रस्रवणं प्राप्य निषदि निरुप्यमुदयनीयमतिरात्रँ सँस्थाप्याग्नये कामायाष्टाकपालं निर्वपेत् । २० । तस्यामश्वां च पुरुषीं च धेनुके दक्षिणे दत्त्वा कारपचवं प्रति यमुनामवभृथमभ्य-

---

23) M2 B1 प्रथम आहवनी N प्रथमे अहनी, not B2, cf. sū.9.

26) M2 B1 यथौचमृ° B2 N यथैवमृ°.

28) M2 °स्यावृति साध्यँ the oth. °स्यावृत्ति सहस्रसाध्यँ, perhaps r. °स्य त्रिवृन्ति वाग्नेः सह°; cf.9.5.4.40.

4 Cf. Pañc.Br.25.10-18; Āp.Śr. 23.12-14.

3) °मिमीयुर्न वेदिं not M2.

4) M2 रुपंर प्रकुष्टोयो N B2 यूपं प्रकृष्टोयो, not B1; r. °बुध्नो ?

5-6) खनंनति°.

15) mss. °माणः श्वेतं गोवृषभ°.

18) mss. ह्रदे.

18-20) mss. प्रश्रव°.

19) mss. दृषभद्वत्याप्यये.

20) mss. निषनिरियुपमु° (N B2 °यू°), r. निष्ठाप्य यूपमु ?

वेयुः । २१ । मित्रावरुणयोरयनँ सारस्वतँ स्वर्गकामा उपेयुः । २२ । मित्रावरुणयोरयनेनेन्द्राग्न्योरयनँ व्याख्यातमर्यम्णश्च । २३ । त्रिवृत्पञ्चदशाभ्याँ व्यत्यासमर्धयन्तीन्द्राग्न्योरयने । त्र्यहेणत्र्यहेणाभ्यावर्तयमर्यम्णोऽयने । ऽभिजित्पौर्णमास्याँ विश्वजिदमावास्यायाँ यथोक्तं पूर्वस्मिन् । २४ । सर्वासां प्रजानाँ श्रेष्ठाः स्यामेतिकामा उपेयुः । प्र देवयानं पन्थानमश्नवामहा इत्युत्तरे । २५ । अमावास्यायां केशश्मश्रू यजमानो वापयित्वाप्लुत्याहते क्षौमे परिधाय पश्चादाहवनीयस्यादीक्षितः कृष्णाजिनं प्रतिमुञ्चति । २६ । आग्नेयमष्टाकपालं पूर्वाह्णे निर्वपेदैन्द्राग्नमेकादशकपालं मध्यंदिने वैश्वदेवं चरुमपराह्णे । २७ । तद्भक्ष एतामेव त्रिहविषमिष्टिं निर्वपेत् । २८ । तया सँवत्सरँ यजेत । २९ । नान्यत्कृष्णाजिनाद्दीक्षितव्रतानां कुर्यात् । ३० । समाप्ते सँवत्सरे ऽवभृथादुदेत्य निखिलं केशश्मश्रू यजमानो वापयते । ३१ । तुरायणमृद्धिकामा उपेयुः । ३२ । सँवत्सरं ब्राह्मणस्य गोरक्षः । सँवत्सरँ व्यर्णे नैतन्धवे ऽग्निमिन्धः । ३३ । समाप्ते सँवत्सरे परिणह्यग्नीनाधाय दृषद्वत्या अप्यये निर्वपेदाग्नेयमष्टाकपालम् । ३४ । दृषद्वत्या दक्षिणेन तीरेण शम्यापरासीयात्त्रिप्लक्षं प्राप्य यमुनामवभृथमभ्यवेयात् । ३५ । तदेवा मनुष्येभ्यस्तिरो भवति । स्वर्गकामो दार्षद्वतमुपेयात् । ३६ । अतिरात्रयोर्मध्ये ऽग्निष्टोमाः । सर्वो दशदशी सँवत्सरो द्वादशो विषुवान्सर्पसामानि विषुवति क्रियन्ते । ३७ । जर्वरो गृहपतिर्धृतराष्ट्र ऐरावतो ब्रह्मेत्येवमादीन्सर्पानार्युविजये ऽधीयते । ३८ । सर्पसत्त्रमृद्धिकामा अमृतत्वकामाः स्वर्गकामाश्चोपेयुः । ३९ । अतिरात्रयोर्मध्ये सहस्रं त्रिवृतः सँवत्सरान्दशरात्रँ वा संततमेकैकँ सँवत्सरमेत्य प्रजापतेरेवँ सहस्रसँवत्सरं । प्रजातिकामा उपेयुः । ४० । चतुर्भिः पृष्ठ्याहोभिरेकैकेन पञ्च पञ्चाशतँ सँवत्सरान्यन्ति । ४१ । विश्वसृजामयनँ सहस्रसँवत्सरँ सर्वा नः प्रजा अनुप्रजायेरन्ब्रह्मलोकं च गछेमहीतिकामा उपेयुः । ४२ । तत्र श्लोको ऽप्युक्तः

विश्वसृजः प्रथमे सत्त्रमासत सहस्रसवं प्रसवेन यन्तः ।
ततो ह जज्ञे भुवनस्य गोप्ता हिरण्मयः शकुनो ब्रह्मनाम ॥

इति । ४३ । सरस्वत्यूनानि कल्पयतु कल्पयतु । ४४ । ॥४॥

चातुर्होतृकगोनामिकमप्यनाहिताग्नेर्द्वादशरात्रं त्रिरात्रमेकरात्रँ वा । १ । पाकयज्ञोपचारादग्निमुपचरति

24) mss. °रयनँ; विश्वजिदमावास्यायाँ not M2.
25) mss. श्रैष्ठय, °मश्रवावहा.
26) mss. °यस्यदीच्चि°.
30) mss. °जिना दचिणात्र°.
32) mss. तूतरायण°.
33) mss. गाँ रच्च सँवत्सर वाक्यणेनेतंधाग्नि° (N B2 °धावेग्नि°).
34) mss. °णह्याग्नी°.
35) mss. शम्याः प्राशीयान् नृप्लच्चं.
37) mss. °नामानि.
38) M2 B1 ऊर्वरो° °राष्ट्ररावतो N B2 उर्वरो, °राष्ट्रँ रावतो, cf. Baudh. Śr.17.18.
40) mss. °वत्सरमीत्य.
43) mss. ऽहँ यज्ञे.
44) the number 6 is missing in the mss. ; this is the end of the "rājasūya"; cf. 9.5.1.16, 22 notes.
5 Cf. 9.5.1.16, 22, 32 notes; MS.IV.2.1-8; Vāråha Śr.pariśiṣṭa, J. Vedic Studies I 1934, but for sū.1-2 the end of pariśiṣṭa J.V.S.II, that corresponds with Mān.Śr.5.2.14.
1) N °मोनामिक° S °कागागानामिक°.

। २ । सांग्रामिकी जयस्य दक्षिणा सप्तस्थवीर्येषु वासो देयँ हिरण्यँ वा देयम् । ३ । रेवत्यां चित्रायाँ वा पशुकामः कर्म कुर्वीत । ४ । भिन्नेन स्रवता न हस्ता अवनेनिजीत न पिबेदयस्पात्रेणेत्येके तद्देशप्रतिषेधमित्यपरे । ५ । यं दिष्यात्तस्य गवां मध्ये ऽरण्ये ऽधीतैर्गोनामभिराह्वयेत् । ६ । सँशृङ्गीं पुरस्तात्प्रतीचीमवस्थाप्याधस्ताद्दर्भानास्तीर्य " काम्यायै स्वाहेति मूर्धनि तिस्र आहुतीः पशुकामो जुहुयात् । ७ । अपरस्यामग्निवेलायां दीप्यमानं भ्रातृव्यस्य गृहादाहृत्येन्धानो रात्रीं जागृयात् । ८ । उत्तरो निगदे व्याख्यातः । ९ । प्राचीनप्रवणे समूले पशुकाम उपोदये सूर्यस्य हस्ता अवनिज्य दर्भस्तम्ब उदशरावं निनयेत्"काम कामं म आवर्तयेति । १० । गोभिः सहेत्य " प्रशस्ताः स्थ कल्याण्य इति ब्रूयात् । ११ । एकाष्टकायां चतुष्पथे ऽङ्गशो गां कारये द्योय आगछेत्तस्मैतस्मै दद्यात् । १२ । श्वो ऽन्यां कारयित्वा ब्राह्मणान्भोजयेत्पशुकामः । १३ । उत्तरो निगदे व्याख्यातः । १४ ।। वसीयस्येहि श्रेयस्येहीति सप्त देवगव्य"श्चिदसि मनासि धीरसीत्युत्तराः सप्त । तासामनुप्राणान्ताः प्रथमा एह्यन्ता उत्तराः । १५ ।। सह रायस्पोषेण देवीर्देवीरित्यनुनिगदति । १६ । संग्रामं जिगीषन्सेनयोः संदृश्यमानयोः पूर्वाभिर्हुत्वोत्तरा निगदेत् । १७ । यत्र समूला ओषधीरुपगछेत्पशून्वा तदेता एह्यन्ताः सप्त जपेत् । १८ । सप्तस्थवीर्ये सप्तानां गवामाज्यँ सप्तानां पयसि स्थालीपाकः । १९ । यस्य सप्त स्थविराश्चरमामन्तमा स्युः पूर्वाभिर्हुत्वोत्तरा निगदेत् । २० । यो वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवाँ साण्डँ वत्सतरमिँलान्दाः स्थ पूष्णो नक्षत्रं पोषयिष्णिवत्यपगमयेत । २१ ।। आयुर्मे दा इति स्वासु गोष्ठास्त्ववसृज्य " वसीयस्येहि श्रेयस्येहीति परस्यात्याह्वयेत् । २२ । सारस्वतं पयसि स्थालीपाकँ श्रपयित्वा सारस्वत ऋग्भ्यामाहुतीर्जुहुयादे तेन ग्रामकामो यजेत तथा पशुकामः । २३ । सर्वासां दुग्धे चतुःशरावमोदनं पचेद्ब्राह्मणेभ्यः पशुकामः । २४ । न छिन्नं देयमिति व्याख्यातम् । २५ । तां " भद्रंभद्रमिति ब्रूया"द्भद्रं कल्याणमिति ब्रूया"त्पुण्यं प्रशस्तमिति ब्रूयात् । २६ । अदीक्षणीयाय गां दत्त्वा " न मे तदुपदम्भिषर्धृषिरिति जपेत् । २७ । ।।५।।

" वीरवतीर्भूयास्त इति व्याख्यातमा बलिहृतः । १ ।। भूयाँसो भूयास्त इति सभासदः । २ । पादौ प्रत्यवहरेदुपोपतिष्ठेत वा । ३ ।। पुण्या पुण्यमसूदिति व्याख्यातं " पुण्यमसूदिति वा । ४ । एकाष्टकायां तूष्णीँ सर्वान्सँसृज्य " पुण्याः पुण्यानसुवँश्चित्राश्चित्रानसुवन्नैडा मे भगवन्तो ऽजनिढ्वं मैत्रावरुण ऊर्जा मे भगवन्तः सहाजनिढ्वँ सँविदं मे विन्दतेति पुँसो जाता"न्पुण्याः पुण्या असुवँश्चित्राश्चित्रा असुवन्नैड्यो मे

---

3) M2 N B2 °वीयेषु S °वीर्य B1 °वीर्येषु, cf. sū.19.

5) S स्रवता the oth. त्सवता; r. तद्द्वेष°.

6) S धीर्गो° the oth. धीते गो°.

8) S °धनो the oth. °धने.

18) S वदेत्स°.

21) M2 B1 N B2 °त्यमयेता°

22) r. स्वाद्गोष्ठाद° ?

26) after the first ब्रूयाद् there follows in M2 B1 N B2: 9.5.1.17-32.

27) S °दक्षिणी° the oth. °दीक्षिणी°; MS. अदानीयाय; cf. Āp.Śr.4.10.

4. भिषगृषि°; here ends in M2 B1 N B2: 9.5.2, in S : 5.2.15.

6 Cf. MS.IV.2.8-14; Vārāha Śr. pariśiṣṭa J.V.S.I.

4) M2 N B2 °मसाविति twice.

भगवत्यो ऽजनिढ्वं मैत्रावरुण्यो रायस्पोषेण मे भगवत्यः सहाजनिढ्वं ज्ञात्रं मे विन्दतेति स्त्रीजाता स्तानुभयान्सहाभिमन्त्रयेत । ५ ॥ धेनुंधेनुमिति ब्रूया"द्धेनुर्भव्येति ब्रूया"न्न हतेति ब्रूया"त्कुरुतेति ब्रूया"न्नान्तर्वत्नीति ब्रूया"द्विजन्येति ब्रूयात् । ६ । इक्षुकाण्डमप्सु वासयित्वा लोहितेनायसेन वा । ७ ॥ भुवनमसि साहस्रमिन्द्राय त्वा सृमो ऽददा"द्यावतीनामिदं करोमि भूयसीनामुत्तरां समां क्रियासमिति गवां लक्ष्म कुर्यात्त्रिषण्णां चतसृणां वा । पुंसः स्त्रिय इति व्यत्यासम् । ८ । यस्य दक्षिणतः प्रतिभिन्नमिति व्याख्यातम् । ९ ॥ इह प्रजा विश्वरूपा रमन्तामिति गाः सायमायतीरभिमन्त्रयेत । १० ॥ सँ वः सृजत्वर्यमेति गाः सँसृजेद्या अस्य पुरा स्युर्यश्चान्यतो विन्देत । ११ ॥ रेवती तन्तिरिति तन्तिं वितनुयात्प्राचीमुदीचीं वा । १२ । दधि घृतेन सँसृज्य " रय्या त्वा पुष्टयानुमार्ज्मीत्यनुमार्ष्टि । १३ । तस्याः प्रमुक्तवत्साया व्रतानि न रिक्ता स्यात् । १४ । नोपर्युपरि संचरेयुर्नाभिवर्षेन्नाभितपेत् । १५ । ऋषभमुत्स्रक्ष्य"न्पिता वत्सानामित्यृषभस्य दक्षिणे कर्णे उत्सृजमानो जपे"त्रेतोधां त्वा यशोधां रायस्पोषायोत्सृज इत्युसृष्टे । १६ । यो वैश्यः शूद्रो वा बहुपुष्टः स्यात्तस्य गवां गोष्ठादेकविँशतिं शकान्याहृत्यैकविँशतिमाहुतीः पशुकामो जुहुयात् । १७ । गोनामभिर्देवगवीभिराकृतिहोमैरग्रतो गामिनीं पश्चात्प्रतीचीमवस्थाप्याधस्ताद्दर्भानास्तीर्य " काम्यायै स्वाहेति भसदि तिस्र आहुतीः पशुकामो जुहुयात् । १८ ॥ यासामिन्द्र उदाजतेति चत्वार आकृतिहोमा । एतैः पूर्वाह्णे गोष्ठामु गोषु जुहुयादेतैर्मध्याह्ने गोष्वाकृतास्वेतैरपराह्णे गोष्ठासु गतास्वेतैः संग्रामे । १९ ॥ मित्रभृतः क्षत्रभृतः इत्यश्वानभिमन्त्रयते । २० ॥ रोहिणीर्वो वृञ्ज इति सप्ताज्यस्याहुतीः पशुकामो जुहुयात् । २१ ॥ पौर्णमासीमष्टकाममावास्यां चित्रामश्वत्थं न गामपाकुर्यात् । २२ । गोवर्चसं गुप्तस्येति सर्पिष " उभयेषां त्वा देवमनुष्याणामिति व्याख्यातं " प्रियं करोमीति श्रोत्रियस्य " प्रियां करोमीति कुमार्याः पतिकामायाश्चा"मुष्य चेत्यवभृथे । २३ । उत्तरो निगदे व्याख्यातः । २४ । अन्नाद्यकामः शबलीकर्म कुर्यात् । २५ । त्रयोदश्यामुदिते यत्र ग्रामस्य पशोः शब्दं नोपशृणुयात्तदरण्यं परेत्य ब्राह्मणं बहुविदमुपविश्य दर्भस्तम्बमारभ्य " शबलि शबल्येहीति त्रिराह्वयेत् । २६ । यदन्यच्छुनो गर्दभाद्वा प्रतिशृणुयात्सा समृद्धिः । २७ । यदि न प्रतिशृणुयात्सँवत्सरे पुनराह्वये"न तृतीयकमाह्वयेत । २८ । ॥६॥

**॥ इति राजसूये पञ्चमो ऽध्यायः ॥**

**॥ इति मानवसूत्रे राजसूयकल्पः समाप्तः ॥**

---

6) S नाधेनु° the oth. नीधेन्°.
7) sc. तेनाचितव्याः; cf. MS.IV.2.9: 32.10-13.
8) mss. त्वे.
16) with वत्सा the *gonāmika* in M2 B1 N B2 ends; then there follows 9.5.1.32.
18) mss. गामितीं; cf. MS.IV.2.10: 34.3, 4.
19) r. पूर्वाह्णे ऽन्तर्गोष्ठासु, गोष्ठेषु ?
23) mss. °वर्चसा; सर्पिष sc. मुखं विमृज्यात्, cf. MS.IV.2.13:37.2-7.
24) here ends the Vāråha pariśiṣṭa.
25-28) cf. Pañc.Br.21.3.5-7.
26) mss. °त्तमरण्यं.
28) mss. तृतीयैक°; here ends in S: 5.2.16.

अथातः शुल्बं व्याख्यास्यामः । १ । रज्जुं पाशवती समां निरायतां पृष्ठ्याँ यथार्थमुपकल्पयेत् । २ । अन्तरेण चित्रास्वाती श्रवणप्रतिश्रवणौ कृत्तिकाप्रतिकृत्तिके तिष्यपुनर्वसू च प्राग्देशो ऽयं युगमात्रोदितयोः पाशाञ्च । ३ ।

दार्शिक्याः शयाः षट्तानि सप्त सप्तदशैव तु ।
एकं द्वे पञ्च तैर्मीत्वा समरैः परिलेखयेत् । ४ ।

अँसाच्छ्रोणौ रज्ज्वन्तं प्रतिष्ठाप्य प्राचीमनुलिखेदँसे प्रतिष्ठाप्य प्रतीचीँ समरे रज्ज्वन्तं प्रतिष्ठाप्य श्रोणेरध्यँसादनुलिखेत् । ५ । एवमुत्तरतः पुरस्तात्पश्चाच्च । ६ ।

अरत्निश्चतुरस्रस्तु पूर्वस्याग्नेः खरो भवेत् ।
रथचक्राकृतिः पश्चाच्चन्द्रार्धेन तु दक्षिणे । ७ ।
मध्यात्कोटिप्रमाणेन मण्डलं परिलेखयेत् ।
अतिरिक्तत्रिभागेन सर्वं तु सहमण्डलम् ।
चतुरस्रे ऽक्षणया रज्जुर्मध्यतः संनिपातयेत् ।
परिलेख्य तदर्धेनार्धमण्डलमेव तत् । ८ ।

गार्हपत्याहवनीयावन्तरा रज्जुं निमायापरस्मिँस्तृतीये लक्षणं मध्यात्तुरीयमुत्सृज्य लक्षणं पाशान्तौ समा-

---

1 For the whole śulba cf. Baudh.Śr.30 and the transl. by *G. Thibaut*, Paṇḍit IX, X, new series I, 1875-6 and Āp. Śulbasūtra ed. and transl. by *A. Bürk* Z.D.M.G. 55-56.

3) mss. °र्वसौ; better: प्राग्दिशो रूपँ, cf. Śiv. 2b: कृत्तिका श्रवणस्तिष्यश्चित्रस्वात्योर्यदंतरं । एतत्प्राच्यो दिशो रूपं युगमात्रोदये पुरा । पुरेति सूर्योदयात्पूर्वे नक्षत्राणां युगमात्रोदये सति नक्षत्रयोरंतराले प्राची दिक् ज्ञातव्या ।; r. पुरा for mss. पाशां ? cf. 10.3.1.11.

4) mss. दार्शिक्या शय षष्ठानि; corr. from Śiv. 8b, who then explains: दार्शपौर्णमासिकी वेदीसाधनभूताया रज्जोः षटशयाः प्रमार्णं... पश्चिमपाशात्प्राच्यर्थे चतुर्थे लक्षणं... सप्त सप्तदशैव तत् । एतेषां अंकानां संकलनगणनेन चतुर्विंशत्यंगुलानि संपद्यंते । तस्मात्पश्चिमपाशाच्चतुर्विंशत्यंगुलानि मित्वांसार्थे लक्षणं । तदिति तस्मात् लक्षणादेकं द्वे पंचेति संकलनेनाष्टांगुलानि मित्वा तत्र श्रोणिशंक्वर्थे लक्षणं कुर्यात् ।

4-6) cf. Baudh.Śr.30.3:393.13-394.5; Āp.Śulba 4.5-6.

5) प्राचीमनु° unto प्रतिष्ठाप्य (श्रोणे°) not S M2 B1; N C3 B2 प्राचीनमु° cf. Śiv. 10a: पार्श्वमानीं श्रोणौ प्रतिमुच्यांसे प्रतिष्ठाप्य समराय प्राचीमनुलिखेत् ।

7) Śaṁk. : चन्द्रार्ध इव दक्षिणः.

8) S M2 B1 चतुरस्ते, परिलेख्यस्त°, not N C3 B2. Śiv. 10b, 11b tells that the radius of the gārhapatya is $13\frac{5}{8}$ aṅg., that of the dakṣiṇāgni $19\frac{1}{2}$ aṅg.; cf. Baudh.Śr.30.2:392.9-11.

9) Śiv. 11a : गार्हपत्याहवनीयावंतरा रज्जुं प्रमाय त्रैधं संभुज्यापरस्मिंस्तृतीये लक्षणं पूर्वस्मिंश्च । मध्यं चतुर्धा संभुज्य तत्र कुर्वीत लक्षणे...पश्चिमलक्षणात्पूर्वतो ऽष्टांगुले पूर्वलक्षणात्पश्चिमतो ऽष्टांगुले च...मध्यस्य पूर्वार्धात्तुर्यमुत्सृज्य लक्षणं प्राचीमायम्य लक्षणयोः संनियम्य पाशौ समानीय दक्षिणा निरायम्य दक्षिणाग्नेर्लक्षणं ।; other methods: Baudh.Śr.30.3:393.1-9; Āp.Ś.4.1-4.

हृत्य दक्षिणतो दक्षिणाग्नेर्लक्षणम् । ९ । एतदेव विपर्यस्योत्तरत उत्करस्य लक्षणम् । १० ।

यावत्प्रमाणा रज्जुः स्यात्तावदेवागमो भवेत् ।
आगमार्धे भवेच्छङ्कुः शङ्कोरर्धे निराञ्छनम् । ११ ।
समन्तचतुरस्त्राणि विधिरेषः प्रकीर्तितः । १२ । ॥१॥

अष्टाशीतिः शतमीषा तिर्यगक्षश्चतुःशतम् ।
षडशीतिर्युगं चास्य रथश्चारक्य उच्यते । १ ।
ईषाया लक्षणं मीत्वा षट्सु नवसु च लक्षणे ।
त्रिचत्वारिँशके पाशो ऽङ्गुलानां नियोगतः । २ ।
एषा वेदिः समाख्याता चारक्यरथसंमिता ।
ऐन्द्राग्नस्य पशोरेषा । पशुष्वन्येषु षट्शया । ३ ।
प्राच्यर्धः षडरत्निः स्यादर्धारत्नेर्निराञ्छनम् ।
अर्धे श्रोणी ततो ऽर्धे ऽँसावध्यर्ध इति पाशुकी । ४ ।
पाशादर्धशये श्रोणी द्वयोः पृष्ठ्यापरा द्वयोः ।
प्राच्यर्धस्तु ततो ऽध्यर्धे ततो ऽध्यर्धे निराञ्छनम् ।
अर्धे ऽँसो ऽध्यर्ध एवान्यस्ततो ऽध्यर्धे ऽँस उत्तरः ।
अरत्नौ तु ततः पाशो वेदी मारुती वारुणी । ५ ।

---

11) mss. निराँसनँ; cf. Baudh.Śr. 30.1:389.17-390.2.

12) r. रस्त्राणाँ.

**2** 1) mss. °शीतँशतं चीषां, °शीति युगे चास्या; cf. Āp.Ś.6.5: चारक्ये.

2) mss. °गुलाना; cf. Āp.Ś.6.3-4.

3) B1 चारक्यं the oth. चारक्ये; mss. षट्सुया.

4) the same cord is meant Āp. Ś.6.6 (see 5.2); Śiv.15b-16b gives three other divisions of a cord of nine aratnis.

5) mss. पाशौ वेदी मारुतवारुणँ. Śiv. gives another cord for the *māruti vāruṇi* of $12\frac{3}{4}$ aratni with the eight signs placed in another way, the mark being on 5 and $7\frac{3}{4}$, so that the space between the śroṇis of the two vedis is 1 ar.; in the text the mark on $4\frac{1}{2}$ and $7\frac{1}{2}$ $(6^2+4\frac{1}{2}^2=7\frac{1}{2}^2)$ gives a space between them of $\frac{1}{2}$ ar. The śloka of Śiv. 13a, which is afterwards clearly explained as is also the construction itself, reads: पाशाद्द्वयोः शये तस्माद्द्वयोरन्यस्ततः शये । पूर्वात्पाशाच्छये ऽध्यर्धे ततो ऽन्यत्पादहीनयोः । ततो ऽध्यर्धे ततः पादे क्लृप्ते मारुती वारुणी ।

सर्वा दशशया रज्जुर्मध्ये चास्या निराञ्छनम् ।
प्राच्यर्धं पञ्चमे कुर्याद्दिक्कुष्ठा पैतृकी स्मृता । ६ ।
सर्वा सप्तशया रज्जुर्मध्ये चास्या निराञ्छनम् ।
प्राच्यर्धं पञ्चमे कुर्याद्दिक्कुष्ठा पैतृकी स्मृता । ७ । ॥२॥

प्राग्वँशं दशकं कुर्यात्पत्नीशालां चतुःशयाम् ।
प्राग्वँशात्त्रिषु वेद्यन्तो वेद्यन्तात्प्रक्रमे सदः । १ ।
नवकं तु सदो विद्याच्चत्वारः सदसो ऽन्तरम् ।
चत्वारस्त्रिका हविर्धानमर्धषष्ठस्तदनन्तरम् । २ ।
पदँ यूपावटे मीत्वा शेषमौत्तरवेदिकम् ।
आग्नीध्रँ षडरत्न्येव षट्त्रिँशत्प्रक्रमा रज्जुः । ३ ।
लक्षिका द्वादश त्रिका । वेदिसदोहविर्धानानि मिनोत्येवानुपूर्वशः पञ्चदशकमेकविँशकं त्रिकमपरं । परतो ऽपरस्त्रिको द्वादशसु च पाशद उच्यते । सोमे रज्जुनिमानमुत्तमम् । ४ ।
त्रिपदा पार्श्वमानी स्यात्तिर्यङ्मानी पदं भवेत् ।
तस्याक्ष्णया तु या रज्जुः कुर्याद्दशपदां तया । ५ ।
पादादर्धं चतुर्दशे नवके तु ततः पुनः ।
अर्धचतुर्दशः पाशः सदसश्छेदनमुत्तमम् । ६ ।
निमाय रज्जुं दशभी रथाक्षैरेकादशभिश्चोपरबुध्नमात्रैस्तस्याश्चतुर्विँशतिभागधेयमेकादशिनीं प्रति वेदिमाहुः । ७ ।

---

6-7) M2 B1 दिकुष्टा the oth. दिकुष्टा; cf. Baudh.Śr.30.3:394.9-13; Āp.Ś.6.7. Śiv.14b-15a gives for the *paitṛkī* a cord of 8 ar. with signs on 4 ar. and 5⅗ ar. resp. for the four sides and for the prācī, the prācī being the diagonal, the angles of the square being turned towards the directions. Sū.7 gives a cord of 7 ar., the sides 3½ ar., the prācī 5 ar.; sū.6 gives 10, 5, 5 ar., but the prācī will be 7 ar.; thus r. सप्तमे for पञ्चमे.

**3** 1) mss. °वँशास्त्रिषु.

1-2) Śiv. 21a: अपरस्माद्वेद्यंतात्त्रिषु प्रक्रमेष्वपरिमिते वावकाशे सदो विदधाति नवा[र]त्नि प्राचीं त्रिनवं तिर्यक्.

2) cf. Baudh.Śr.30.4:395.7. Śiv. 22b : दशारत्नि हविर्धानम् .

4) N C3 B2 पंचदशकविँशकं ; Śiv. 17a : चतुःपंचाशत्प्रक्रममितां दृढां रज्जुं संपाद्य...पंचदशसु लक्षणं ततस्त्वेकविंशत्यां ततस्त्रिषु ततस्त्रिषु ततो द्वादशसु पाशं करोति; with this cord he then forms the mahāvedi; cf. Āp.Ś.5.1-2.

5) Śiv. 18a: अष्टाचत्वारिंशदंगुल अक्ष्णया रज्जुप्रमाणम् ; cf. Baudh.Śr. 30.4:395.9 comm. (*G. Thibaut* Paṇḍit 10, 1875 p.49); but Āp.Ś.6.8 gives ten padas !

6) M2 B1 सदसछे° the oth. सदशछे°; cf. sū.2.

7) mss. °भागमेय°; cf. sū.3a; Śiv. 19a, b: **47** aṅg. or **46⅞** aṅg., Śaṁk. : 47⅓ aṅg. ; cf. Baudh. Śr.30.4:395.16-396.3.

शिखण्डिनी चेत्कर्तव्या वेद्यन्तादृद्वयर्धमुद्धरेत् ।
अष्टाङ्गुलं तदर्धं स्याद्वेव्यवेदिप्रसिद्धये ।
तं प्राञ्चं तु समीक्षेत तांस्तु विद्याच्छिखण्डिनीम् । ८ ।
पञ्चकं सप्तकं चैव एकमेकं ततः पुनः ।
एषा वेदिः समाख्याता कौकिल्यास्त्वथ चारके । ९ । ॥३॥

जन्मना रोगहीनो वा यजमानो भवेद्यदि ।
कथं तत्र प्रमाणानि प्रयोक्तव्यानि कर्तृभिः । १ ।
तुण्डं पुष्करनालस्य षड्गुणं परिवेष्टितम् ।
त्रिहायण्या वत्सतर्या वालेन सममिष्यते । २ ।
त्रयस्त्रिहायणीवालाः सर्षपार्धं विधीयते ।
द्विगुणं सर्षपं प्राहुर्यवः सर्षपार् ... । ३ ।
अङ्गुलस्य प्रमाणं तु षड्यवाः पार्श्वसंहिताः ।
दशाङ्गुलस्तु प्रादेशो वितस्तिर्द्वादशाङ्गुलः ।
द्विवितस्तिरररत्निः स्याद्व्यायामस्तु चतुःशयः । ४ ।
विंशतिशताङ्गुलतः पुरुषः स्वैःस्वैरङ्गुलिपर्वभिः ।
अथ चेत्प्रपदोत्थानः पञ्चविंशशतो भवेत् । ५ ।
त्रियवं कृष्णलं विद्यात्तं मानं विद्यात्त्रिकृष्णलम् ।
अनेन कृष्णलप्रमाणेन निष्कमाहुश्चतुर्गुणम् । ६ ।
पुरुषस्य तृतीयपञ्चमौ भागौ तत्करणं पुनश्चितेः ।
तस्यार्धमथापरं भवेत्त्रिचितिकमग्निचितिश्चेत् । ७ ।

---

8) N C3 स्याद्वेव्यो° S B1 B2 स्याद्वेयो° M2 स्यादेयो°; Śiv. 19b-20a: अंगुलैतु मितादष्टौ वेद्यग्रादर्धमुद्धरेत् ।... वेद्यग्रभागस्य चतुर्विंशतिप्रक्रममानस्याष्टभिरंगुलैः सार्कं द्वादश प्रक्रममितेन वेद्यग्रार्धेन मितां रज्जुं गृहीत्वाऽग्निष्ठात्प्राक्प्रसार्य रज्वंते शंकुं निहन्यात्... बुध्नावेदिप्रसिद्धये । ... आद्ययूपावटादर्धमंतर्वेद्यर्धं बहिर्वेदीति ... इंद्रवज्रा शिखंडिनी ।; cf. Baudh.Śr.30.4:396.5-7.

9) thus the mss.; cf. 10.3.4.1; Baudh.Śr.30.3:394.13-16; Āp.Ś.5.8.

**4** 2) M2 B1 तुटं the oth. त्रुटं; Śaṁk. तुण्डं; Śiv. 25*a* तंतुः पुष्करनालस्य त्रिगुणो यो दृढो भवेत्त्रिहायण्या वत्सतर्या वालाग्रं तत्समं भवेत्।

3) read e.g. °र्धं वः त्रिसर्षपार्धवान्; Śiv. 25a : त्रिवालं सर्षपं विद्याद्यवं विद्यात्त्रिसर्षपम् ।

5) mss. °त्प्रपदोश्छ्रानः (C3 °स्था°); Śaṁk.: अथ चेत्प्रपदोच्छ्रानः पंचमोंशः शयो भवेदिति.

7-8) cf. 10.3.6.1, 2; 6.2.6.28, 29; mss. °त्करणं, °मग्निचिश्चिनेद°, चितिरष्टैका च (M2 S °ष्टौ°), व्यायामवतीरुदन्यसे°.

अष्टावष्टौ संमिता चितिरष्टैकादशिका च मध्यमा ।
व्यत्यासवतीरुपन्यसेद'ष्टौ द्वादश चोत्तमा चितिः ॥
अष्टौ द्वादश चोत्तमा चितिरिति । ८ । ॥४॥

॥ इति शुल्बसूत्रँ समाप्तम् ॥

अथात उत्तरेष्टकँ व्याख्यास्यामः । १ । ऊर्ध्वबाहुना यजमानेन वेणुँ विमिमीते । २ । तत्समो ऽन्यतरः सारत्निर्द्वितीय'स्तस्य पुरुषे लक्षणमरत्निवितस्त्योश्चो'भयोरर्धपुरुषे । ३ । शिरसि परिश्रिते यूपायावशिष्य शेषमनुरज्जु पुरुषौ संधाय पञ्चाङ्गया शङ्कुँ विनिहन्ति तयोः संधावर्धयोश्च । ४ । यावभितो मध्यमँ शङ्कुं तयोर्वेणू निधाय दक्षिणतः पुरुषसंनिपाते तोदं करोति । ५ । मध्यमे शङ्कौ वेणुं निधायाध्यधि तोदँ हृत्वा दक्षिणतः पुरुषे शङ्कुं निहन्ति । ६ । पूर्वे शङ्कौ वेणुं निधाय द्वितीयं दक्षिणतः पुरस्तात्पुरुष-संनिपाते शङ्कुं निहन्त्यर्धे चै'वं पश्चात् । ७ । एतेनोत्तरार्धो व्याख्यातः । ८ । दक्षिणस्य वर्गस्य याव-भितो मध्यमँ शङ्कुँ तयोर्वेणू निधाय दक्षिणतः पुरुषसंनिपाते तोदं करोति । ९ । मध्यमे शङ्कौ वेणुं निधायाध्यधि तोदँ हृत्वा दक्षिणतः सारत्नौ शङ्कुं निहन्ति । १० । यः सारत्निस्तं मध्यमस्य पूर्वे निधाय द्वितीयं दक्षिणतः पुरस्तात्सारत्निमर्धपुरुषेण संनिपात्य शङ्कुं निहन्त्ये'वं पश्चात् । ११ । एतेनैवोत्तरपक्षो व्याख्यातः । १२ । पुच्छँ । सवितस्तिररत्निस्थाने । १३ । पूर्वस्य पुरस्तादर्धपुरुषेण पञ्चाङ्गया शिरो विमिमीते । १४ । ॥१॥

व्यायामस्याष्टममेकतस्तुरीयमेकत उभयतस्तुरीयं च ते गार्हपत्यचितेः करणे । १ । पुरुषस्य दशमेन भागेन प्रथमं चतुरस्रं करणं कारयेद्दशममेकतो ऽर्धमेकतस्तद्द्वितीयं दशममेकतो ऽध्यर्धमेकतस्तत्तृतीय-मुभयतस्तुरीयं तच्चतुर्थम् । २ । तासामुत्सेधस्त्रिँशत्पञ्चमभागेनान्यत्र नाकसद्भ्यश्च चूडाभ्य ऋतव्याभ्यो

**1** 2-4) Śiv. 26ab does not use two veṇus, only a pañcāṅgī of two puruṣa, that has two more signs on 24 and 12 aṅg. from the middle of it; in 27b he finally adds a part of 6 aṅg. to fix the śroṇi of the head.

5) mss. °वैंणु (M2 °वंणु); cf. Āp. Ś.1.7.

7) mss. निहत्यर्धैश्चैवं.

9) mss. °वैंण (M2 °वैंणु).

14) a head to this agni is not mentioned elsewhere; Śiv. in his explanation of the whole agni pp. 26a-32b brings it as something new, that he shortly and not clearly explains, mentioning also the agni without a head; his measures for it are 60 × 60 aṅg. and also with 15 aṅg. more to the east 60 × 75 aṅg.

**2** Śivadāsa and Śaṁkara do not treat the bricks nor the several kinds of agnis.

1) cf. Baudh.Śr.30.7:400.5, 6.

2) mss. मण्डलं for प्रथमं; cf. Baudh. Śr.30.8:401.11,12; 9:402.16, 17; Āp.Ś.9.6; 11.1-3.

3) mss. नाकसत्यं च चूडाभ्यतव्याभ्यो, °स्ता पूर्वोसेधाः ; cf. sū.15; Baudh.Śr.30.7:399.14-400.1 ; Āp.Ś.9.7.

ऽथ मध्यमायां पञ्चमषष्ठीभ्यश्च वैश्वदेवीभ्य'स्ता अर्धोत्सेधाः । ३ । पुरीषमन्तर्धायोत्तरामुपदध्याद्गण-सँसर्गायाविछेदाय । ४ । गर्तेषूपदध्याद्यदन्यदिष्टकाभ्यः । ५ । तत्र श्लोको भवति

उखायाः पशुशीर्षाणां कूर्मस्योलूखलस्य च ।
स्रुचोः कुम्भेष्टकानां च चरोश्चैवावटान्खनेत् । ६ ।

प्रतिदिशमुपदध्यादात्मनि मध्ये प्राचीः 'शिरसि पुछे पक्षयोश्चात्मन्यप्ययेशु समँ विभज्योत्तरामुत्तरामप्ययसँहितां पूर्वापरदक्षिणोत्तरा विषयवचनाद'न्यच्चतस्रः पुरस्तात्पञ्चर्तव्याभ्यः पश्चाच्चोत्तरपूर्वे चार्धे गार्हपत्यस्य । शेषं चतुरस्राभिः । ७ । एता एव दक्षिणोत्तरा द्वितीयस्याँ । शेषं चतुरस्राभिः । ८ । यथा प्रथमैवं तृतीया पञ्चमी च यथा द्वितीयैवं चतुर्थ्ये'तेन धर्मेण व्यत्यासं चिनुयात् । ९ । अथेतरानाग्नीध्रीयादीन्नवनव पदानि करोत्येकैकं मध्ये 'ऽश्मानमाग्नीध्रीये ' चत्वारिचत्वारि तुरीयाणि प्रतिदिशँ होत्रीये ' चतस्रो ऽर्धाः कुष्ठासु ब्राह्मणाछँस्य ' इतरेषां द्वेद्वे अध्यर्धे मध्ये प्राचीः ' षडेव मार्जालीये पशुश्रपणे च । १० । विँशति-मध्यर्धाः प्राचीरँसयोर्दद्याच्छ्रोण्योः पुछे च विँशतिं द्वादशद्वादश पुरस्तात्पक्षयोः प्राचीः पश्चाच्च पञ्च-पञ्च चोदीचीरभितः शिरसि । शेषं चतुरस्राभिः । ११ । विँशतिँ श्रोण्यँसपक्षेपूदीचीर्दक्षिणतस्तथोत्त-रतो द्वितीयस्यामेकादशैकादशाभितः पुछे पञ्चपञ्च प्राचीरभितः शिरसि । शेषं चतुरस्राभिः । १२ । यथा प्रथमैवं तृतीया पञ्चमी च यथा द्वितीयैवं चतुर्थ्ये'तेन धर्मेण व्यत्यासं चिनुयात् । १३ । त्रिरुपसत्सु द्वे पूर्वस्यां तिस्रो मध्यमायाँ ' षट्सु यथानुपूर्वेण ' द्वादशसु व्यत्यासं चितिपुरीषे करोति । १४ । एतेन धर्मेण सँवत्सरात्समँ विभज्य जानुदघ्ने ऽस्य द्विगुणं त्रिगुणमुत्तरेषां चैकामुत्तरामुद्धत्याभ्यायनँ वर्धायातिरिक्ता उपदध्यात् । १५ । मन्त्राद्यभिमर्शनान्तं तत्पुरुषस्य लक्षणम् । १६ । ॥२॥

दर्भस्तम्बं पुष्करपर्णँ रुक्मपुरुषौ हिरण्येष्टकाँ शर्कराँ स्वयमातृण्णां दूर्वेष्टका नैवारमिति मध्यं [आ पञ्चमाश्रँ स्वयमातृण्णाया अभितस्तां मध्यं] । तस्मिन्कुम्भेष्टका या मध्ये दक्षिणोत्तरे च स्रुचावंनूपमध्येषु शेषाः ' पश्चात्स्वयमातृण्णायाः कुलायिनीं द्वियजुश्च वँशयोः पार्श्वसँहिते द्वियजुरुत्तरे पुरस्ताद्रेतःसिचौ द्वे ' दक्षिणे तस्मिन्वँशे द्वितीयामृतव्यां च पुरस्ताच्चतुर्थे लोके रेतःसिचँ विश्वज्योतिषं मण्डलामृतव्यां घर्मे-ष्टकामषाढां कूर्मँ वृषभमिति प्राञ्चमुत्तरे वँशे दक्षिणतः पुरस्तात्स्वयमातृण्णायाः प्राञ्चमुलूखलमुपलमुत्तर-

6) S स्रुचां N C3 स्रुचों M2 B1 B2 स्रुचो.

7) mss. समाँ, विषया°; S पुरस्तात्प्राची-तव्या° N C3 B2 पुरस्तात्प्राचीरुतव्या° M2 B1 पुरस्तात्पंचातव्या°.

7-8) cf. Baudh.Śr.30.8:402.5-15; Āp.Ś.11.

10) mss. चतस्रोर्धं; Śiv.22a: अष्टाविंशांगुला धिष्ण्याः द्वाचत्वारिंशांगुलांतरां; cf. 6.2.6.2; Baudh.Śr.30.7: 400.11-16; Āp.Ś.7.12-15.

11-12) cf. 10.3.4.19, 20; Baudh. Śr.30.9; Āp.Ś.10.

15) N C3 B1 °मुद्धत्तीभ्यांन्यनँ S °मुद्धर्माभ्यांन्यनँ M2 . °मूर्धतीभ्यान्यनँ B2 °मुद्धत्ताभ्यांन्यनँ corr. uncertain.

3 Cf. 6.1.6-8; Āp.Śr.16.22-35.

1) [ ] probably inserted (also because of mss. मध्यं श्रा); mss. कुलायिना, °सहिते, °मृतव्यां twice, पंच उलूखल°, चोषां.

पूर्व्ये चोखां मध्ये शिरसां शिरोभिः सँहितामुपदधाति । १ । तस्याः पश्चात्पुरुषशिरसः पुरुषचितिमुपदधाति षट्त्रिँशतं प्रतीचीस्त्रिवर्गेण श्रोण्याम् । २ । तत्र श्लोको भवति

तिस्रो ग्रीवाः षडँसयोर्द्वेद्वे बाह्वोर्नवात्मनि ।
जङ्घयोरु पञ्च पश्चादेकैकं पाणिपादयोः ॥

इति । ३ । अष्टावथापस्याः समँ विभज्य वँशेषु नवमेनवमे प्राणभृतः पुरस्तादुत्तरे वँशे प्रथमं पश्चाद्दक्षिणे दक्षिणतः पूर्व उत्तरतः पश्चाद्दक्षिणतः स्वयमातृण्णाया द्वितीये पञ्चममनूपेषु सँयतो नवमे ऽतिमात्रा यथा प्राणभृतः पुरस्ताद्दक्षिणे वँशे प्रथमं पश्चादुत्तरे दक्षिणतः पश्चादुत्तरतः पूर्व उत्तरतः स्वमातृण्णाया द्वितीये पञ्चमँ । वैश्वदेव्यश्चानूपेषु प्रतिदिशमुत्तरपूर्वेषु वँशेष्वाद्या । दक्षिणोत्तरे च सँयान्यात्र्व्यये तयोर्वँश-योराद्यात्पुरस्ताद्वाथर्वशिरः । ४ । समँ विभज्य वँशेषु शिरः पक्षपुच्छानि प्रथमेषु वँशेषु लोकान्विजानी-यात् । ५ । शिरसि प्रथमे वँश उत्तरामुत्तरामितरेषां पक्षपुच्छानां चतुर्थे पक्षयोः प्राचीः पुछे चोदीचीर्लोके-ष्टका उपदध्याच्छेषाः पश्चात्स्वयमातृण्णाया एकैकां पूर्वाँ सँहितां । दक्षिणे वँशे वैश्वदेव्याद्य उत्तरे च पुरीषाद्यः । ६ । गायत्रं मध्ये शिरसि रथंतरं बृहद्यज्ञायज्ञियमिति यथाम्नातम् । ७ । ॥३॥

द्वितीयायां पुरस्तात्स्वयमातृण्णायाः प्रथमद्वितीयतृतीयेष्वृतव्या वायव्या अपस्या इति यथासंख्यं । तिस्रस्तिस्रो दक्षिणेषु वँशेषु दक्षिणोत्तरा द्वेद्वे उत्तरस्योत्तरयोर्नवमे ऽभितः शेषा यथापस्याः । १ । तृतीयायां दश द्वादश नवमे ऽभितो । ऽष्टमे सप्त पुरस्तात्पश्चाच्च समीचीरभितः स्वयमातृण्णाया अर्धोत्सेधा अष्टौ नानामन्त्रा उत्तमायाँ वा । २ । चतुर्थ्यामेकैकां नवमेनवमे ऽभितः पुरस्तादुत्तरस्य वँशस्य मध्ये प्रथमाँ व्यत्यासमितरा । एवमेव स्पृतः पुरस्ताद्दक्षिणस्य वँशस्य मध्ये प्रथमाँ व्यत्यासमितराः । षट्सप्ता-ष्टमेषु दक्षिणतो युग्मायुग्मा उत्तरतस्त्रिवर्गान्कुर्यात्सप्तदश दक्षिणतः पञ्चदशोत्तरतः । ३ । पञ्चम्यामेकैकां प्राणभृदाधिषु शेषं छन्दसाँ विराजश्च यथातिमात्राः षट्सप्ताष्टमेष्वभितो यथासंख्यम् । ४ । अर्धेष्टकाभिः पूरयित्वा दक्षिणतः प्राचीः स्तोमभागाः पश्चिमाश्च युग्मा उत्तरतस्त्रिवर्गान्कुर्यादेकत्रिँशतं । पश्चात्प्रत्यञ्चं त्रिवर्गेण नाकसदं च पश्चात्पुरीषवत्या यवादिना सनाम्नीरुपशीवरीर्घृतप्लुना इति यथासंख्यं । तुरीयाणि

---

2) mss. प्रत्यंचत्रि°.
3) N C3 शट्शयो° S षड्शयो° M2 B1 षड्शथो°; mss. जंघोरु पंच पश्चत्केश्या-नामेकैका.
4) mss. °ष्टामथयस्याः समँ, सँयान्याव-पत्ये, °राद्य पुरस्ता°; between °त्तरतः पूर्व and उत्तरतः स्वयमातृण्णाया the mss. repeat: उत्तरतः पश्चाद्दक्षिणतः; for the *apasyā* cf. 6.1.8.4, for the *atharvaśiras* cf. 6.2.2.20, Āp.Śr.17.8.2.
5) mss. प्रथमे.
6) mss. चतुर्थे पक्षयोः प्राचाः पछे चोदाची°.
7) cf. 6.2.3.1.

**4** Cf. 6.2.1, 2; Āp.Śr.17.1-5.
1) M2 °व्येतव्या the oth. °व्वतव्या; M2 यथास्तस्या° the oth. यथास्या°; cf. 6.2.1.3-6.
2) cf. 6.2.1.19, 20; 2.13.
3) mss. स्तृतः, षट्सप्तमाष्टमेष्टमेष्ट; cf. 6 2.1.23-26.
4) mss. °दाधेषु; cf. 10.2.3.4; 6.2. 2.2.

मध्ये यथा प्राणभृतो ऽतिमात्रा मध्यमां स्वयमातृण्णासँहितामुत्तरतस्तु विकर्णीम् । ५ । इति सुपर्णस्य । ६ । ॥४॥

यावती शोषपाकाभ्यामिष्टका ह्रसते कृता ।
तावत्समधिकं कार्यं करणँ सममिच्छता । १ ।
सदा च त्रिँशकं भागमिष्टका ह्रसते कृता ।
तावत्समधिकं कार्यं करणँ सममिच्छता । २ ।
एकैकँ शतमध्यर्धं तदूनँ षड्भिरङ्गुलैः ।
इष्टकानां परिमाणँ वैकृतँ यदतो ऽन्यथा । ३ ।
नवाङ्गुलसहस्राणि द्वे शते षोडशोत्तरे ।
अङ्गुलानां परिमाणँ व्यायामस्य तु निर्दिशेत् । ४ ।
इतरेषां तु धिष्ण्यानां सर्वेषामेव निश्चयः ।
एकैकस्य सहस्रँ स्याच्छते षण्णवतिः परा । ५ ।
एकादश सहस्राणि अङ्गुलानां शतानि षट् ।
शतं चैव सहस्राणां क्षेत्रमग्नेर्विधीयते । ६ ।
प्राकृतँ वैकृतँ वापि क्षेत्रमर्धाष्टमान्तरे ।
पञ्चविँशँ शिरः कृत्वा ततः क्षेत्रे समावपेत् । ७ ।
शतान्यष्टौ पदोनानि पदानामिह कीर्त्यन्ते ।
साङ्गस्य सशिरस्कस्य क्षेत्रं क्षेत्रविदो विदुः । ८ ।
आत्मा चतुःशतः कार्यः पक्षौ त्रिँशच्छतौ स्मृतौ ।
दश पुच्छे शतं चैव शिरः स्यात्पञ्चविँशकम् । ९ ।
एकत्रिँशस्त्रयस्त्रिँशैर्वर्गैः पञ्चाशकैरपि ।
असंभवत्सु वर्गेषु द्विधा भिद्येत इष्टका । १० ।
इष्टकाह्लासवृद्धिभ्यां दृढासु शतकेषु च ।

---

5) mss. सनामान्युपशीवयोर्ध्वँत° (B2 not सना); mss. मध्यमँ, उत्तरतस्तु-विकर्णी°; cf. 6.2.2.1, 3, 4; 6.2.3.2, 4, 17; Āp.Śr.17.5.7.

6) mss. सुवर्णस्य; Śiv. 25b: सुपर्णचिति.

**5** 1) mss. °मिष्टकाह्नने; cf. Baudh.Śr.30.7:400.1; Āp.Ś.9.8.

2) mss. चैत्र्यंशकं, only °मिष्टने; cf. 10.3.4.17.

4) cf. Baudh.Śr.30.7:400.2, 3.

5) cf. 10.2.2.10; Āp.Ś.7.12; Baudh.Śr.30.4:395.14.

6) cf. 10.2.1.14.

9) M2 तिँशच्छतौ, r. विँशच्छतौ ? cf. Āp.Ś.15.3; Baudh.Śr.30.10.

10) N C3 B2 एकत्रिँशत्त्रय°.

11) mss. दृढी...शतमेषुच, corr. uncertain.

मतिमानिष्टका भागैर्मन्त्रात्संनाशयेदिति । ११ ।
चतुरस्रे पृष्टौ वापि पक्षपुछशिरेष्टकाः ।
दिक्तो ऽपधानँ लोकाच्च तथा लोकस्तु लुप्यते । १२ ।
अध्यात्मनि ह् विज्ञेयमुपधानँ विजानता ।
रथंतरबृहल्लोकैरन्यं गायत्रयाज्ञियैः । १३ ।
यजुष्मतीनाँ संख्या तु सर्वासां चैव निश्चिता ।
एकैकस्यां चितौ वापि तां मे निगदतः शृणु । १४ ।
षडशीतिः शतं त्वाद्या द्वितीया दश सप्ततिः ।
त्रयोदश तृतीया स्याच्छतं चाहुर्मनीषिणः ।
चतुर्थी शतमेका स्यात्तिस्रश्चैवेष्टकाः स्मृताः ।
शतानि त्रीणि पञ्चाशत्षट्चैव चितिरुत्तमा । १५ ।
एताः सर्वा यजुष्मत्यो याभिरग्निः प्रसूयते ।
शेषँ लोकंपृणाभिस्तु चितीनामभिपूरयेत् । १६ ।
एताः सर्वा समाम्नाताः यजुर्यावत्प्रवर्तते ।
तदेतद्धि सहस्रँ स्याच्छर्कराभिः सहोच्यते । १७ ।
एता उपहिताः सम्यग्धेनवस्तु प्रजायन्ते ।
अमुष्मिन्यजमानाय कामान्दुह्यति सर्वशः । १८ ।
षष्टिं प्रजापतिँ वेद यो हि सँवत्सरः स्मृतः ।
गछति ब्रह्मणो लोकं नाकं ब्रध्नस्य विष्टपम् ॥

इति । १९ । ॥५॥

॥ इत्युत्तरेष्टकँ समाप्तम् ॥

वैष्णवे या प्रमेयाय शुल्बविद्भिश्च सर्वशः ।
संख्यातृभ्यः प्रवक्तृभ्यो नमो भरन्तो ये मसे ।
इदं भूभ्या भजामहे या नो मानक्रतामिव ।
यज्ञियं मानमुत्तमँ वर्धमानँ स्वे दमे । १ ।

12) mss. पृषौ, दिक्ताप° (B2 दिक्तोप°), लोकाश्च; corr. uncertain.
13) mss. ह विविज्ञियमु°.
15) mss. षढशी(ति)शते.
16) M2 °सुर्यते the oth. °सूर्यते.
17) mss. °र्यावत्सु.
18) M2 °न्दुग्धनि the oth. °न्दुग्धति.
1 1) mss. °वक्तृभ्यो, भरंत ये मसि, या नस्मान°.

स्पष्टा भूमिर्ऋजुः शङ्कुर्मौञ्जँ शुल्बमबन्धुरम् ।
चित्रादौ नाकृतिः कार्या तिथ्यृक्षँ वरुणशुभम् । २ ।
सर्वाः प्रागायता वेद्यः करणँ यस्कदेहिकम् ।
अर्धेनार्वसमँ सर्वमुछेदो जानु पञ्चकम् । ३ ।
मध्यमे ऽर्धमृतव्यानां नाकसत्पञ्चचूडयोः ।
करणाद्यर्थमुद्दिश्य क्षेत्रमर्धाष्टमान्नरः । ४ ।
अनःसिद्धँ हविर्धानं पात्रसिद्धाः खराःखराः ।
चात्वालः पशुभिः सिद्धो हविर्भिः साग्निकाः खराः । ५ ।
मण्डलार्धं चतुःस्रक्ति रत्निनाँ विहिताः खराः ।
अरत्निर्घन एतेषां भूयस्त्वे भूयसीविधौ । ६ ।

पुर्वश्चतुर्विँशतिभागे लेख्यश्चतुर्वँशैरालिखितस्तु पश्चिमः स्याद्दक्षिणे ऽष्टद्विगुणेन लेख्यस्त्रिँशद्भिरायम्य हरेत्तु रायम् । ७ ।

उदवप्रक्रम्य चात्वालँ शामित्रं प्रक्रमे ततः ।
भूयस्तत्पशुभूयस्त्वे वृद्धिरुत्तरतो भवेत् । ८ ।
आयामबाहुं निक्षिप्य विस्तरस्तु तथा पृथक् ।
सो ऽध्यर्धं गुणयेद्राशिँ स सर्वगुणितो घनः । ९ ।
आयाममायामगुणँ विस्तारँ विस्तरेण तु ।
समस्य वर्गमूलँ यत्तत्कर्णं तद्विदो विदुः । १० ।

श्रवणाभिजितोर्बहुलातिष्ययोर्वा चित्रास्वात्योरन्तरे ऽप्स्वग्निना वा । ११ । नक्तं प्राचीभास्करश्चायमाहुः । शङ्कुलिप्ते मण्डले प्राक्परावचेति । १२ । ॥१॥

जन्मना रोगहीनो वा यजमानो भवेद्यदि ।
कथं तत्र प्रमाणानि प्रयोक्तव्यानि कर्तृभिः । १ ।

यद्युरुतन्तुः केशो वास्तृतः सर्षपो यवश्चैव षड्गुणितःषड्गुणितो भवति नरस्याङ्गुलं माने तद्द्वादशकं

---

2) mss. °च वरुणँ.
3) mss. प्रागयता (B2 प्रगयता), यष्क°; cf. 10.2.2.3, 15.
4) mss. करणात्य°.
5) mss. अनसिद्धं.
6) cf. 9.1.1.34; 10.2.2.10; 5.5.
7) mss. °श्चतुर्वशै°; r. लेख्यो विँशद्भिरा°.
8) mss. भूयस्त्वं for भूयस्तत्.
9) mss. °बाहु क्षिप्य विस्तरस्तुस्तथा; cf. 10.2.2.10; Śiv. 3b: *bāhu* 36 or 42 aṅg.
10) mss. °वलवक°.
11) mss. °जित्योर्ब°; cf. 10.1.1.3.
12) mss. °रश्चाय°, पराचेतिः.
**2** 1) cf. 10.1.4.1.
2) M2 B1 यद्युरत्तंतु the oth. युद्युरतंतु; mss. °स्तृतिः.

प्रादेशमित्याहुः । २ । तद्द्वयँ स्मृतो ऽरत्निः प्रक्रमो ऽरत्निसमः स द्विःप्रादेशो भवेच्चितिषु । ३ । अध्यर्धाङ्गुलहीनाश्चत्वारः प्रक्रमा भवेन्नियताः । ४ । तत्रैकादश यूपाश्चत्वारश्चतुरुत्तराः सत्त्रेसत्त्रे । ५ । एकस्याँ वेद्यामग्निद्वयमिष्टकारिक्तं भवति । पृथगतो वेदिः चेत्पृथगग्निः क्लृप्तः । ६ । विँशत्यङ्गुलः शतं नियतः पञ्चारत्निर्नरो दशपदो वा । हीनातिरिक्तयुक्त्या देहेदेहे प्रमाणं तु । ७ । षडशीतिर्युगमुक्तँ साष्टादश उच्यते त्वक्षस्त'न्त्रसमसमस्तं द्वचुजँ रथमीषाँ व्यवास्यन्ति । ८ । मण्डलमथ चतुरस्रं मण्डलं च यः कुर्यात्तस्येमं करणविधिं तद्विदा'मुदाहृतँ श्रृणुत । ९ । मण्डलविष्कम्भसमस्त्रिभुजादवलम्बकश्चतुःस्रक्तिः प्रागायतात्त्रिभागात्कर्णात्स मण्डलं भवति । १० । पुरुषः पुरुषं कुर्यात्तस्याक्ष्णया द्विपुरुषं भवेच्चतुरस्तस्याप्यक्षणया द्वाभ्याँ वा स्याश्चतुःपुरुषम् । ११ । द्विपुरुषः करणी श्रोणी बाहुस्तु द्विगुणो भवे'त्त्रिंकुष्ठवत्त्र्यवलम्बकस्ततो यश्चतुरस्रे द्वाष्टमाः पुरुषाः । १२ ।

विष्कम्भः पञ्चभागश्च विष्कम्भस्त्रिगुणश्च यः ।
स मण्डलपरिक्षेपो न वालमतिरिच्यते । १३ ।
दशधा छिद्य विष्कम्भं त्रिभागानुद्धरेत्ततः ।
तेन यच्चतुरस्रं स्यान्मण्डले तदपप्रथिः । १४ ।
चतुरस्रं नवधा कुर्याद्धनुःकोटचस्त्रिधात्रिधा ।
उत्सेधात्पञ्चमँ लुम्पेत्पुरीषेणेह तावत्समम् । १५ ।

चतुररत्निर्वा नरः सिकताकरणे त्वर्धं भुजः प्रदिश्यते । १६ । करणानि ततो ऽस्याः कारयेत्त्रिचतुःपञ्च त्रिरभिपर्यस्य यच्छुभं चयनेषु विधिः पुरातनैर्ऋषिभिर्यो ऽभिहितश्च नित्यशः । १७ । परिलेखनमानसंचयैर्व्यत्यासैः परिमाणसंपदा वेद्यः सर्वाः प्रमाणैरायामेन च विस्तरेण च मिमीयात् । १८ । चतुरस्रसँपदा द्वयायामसमापनाः स्मृता पञ्चाङ्ग्यथ वा पुरातनैर्याः पूर्वैर्ऋषिभिः प्रदर्शिताः । १९ ।

यश्चैष विधिर्मर्याकृतस्तत्रैषा मिथुनात्समम् ।
पञ्जाङ्गी तावती रज्जुर्यया सर्वं मिमीमहे ।
ऋते कङ्कालजश्येनाँ'स्तेषाँ वक्ष्यामि लक्षणम् । २० ।

---

4) r. भवेयुर्नि°.
5) mss. तत्रैकदेश.
5-6) mss. °सत्रैकस्या.
6) mss. °रितं, °गग्नः.
10) mss. °समो त्रि°, °वलवक°; S B1 °यतात्रि° N C3 B2 °यतांत्रि° M2 °यंतात्रि°; mss. °भागांक°; cf. Āp.Ś.3.2; Baudh.Śr.30.2:392.9-11.
11-12) चतुर° unto भवेत् not N C3.
12) cf. Āp.Ś.16.1 (Kapardisvāmin: एवं द्वेद्वे चतुर्भागीये निरस्ते भवतः); Baudh.Śr.30.10:403.14-16.
13) cf. Āp.Ś.3.3; Baudh.Śr.30.2:392.14.
15) mss. तवत्समं.
16) mss. चतुरंगुलँ वा नरो; N C3 B2 सिकत° M2 B1 सिक° S सिवात°.
17) mss. त्रयाभिपर्यस्य (S त्रयो°); cf. Āp.Ś.5.3.
18) mss. प्रमाणिनीरायामेण, मिनिया°.
19) mss. द्वयमायामः.
20) mss. तावतीज्जु°, रुते कंकामजःशैनाँ°; r. °स्तस्याः; cf. 10.2.1.4.

इयं मिता या समयार्धलक्षणा ततश्चतुर्थे भवेन्निराञ्छनं ततो ऽर्धेशिष्टा विस्तारसमा चयस्य । यत्ततश्चतुःकुष्ठमिहानया चरेत् । २१ । प्राचीमथायामसमां निदध्यात्पाशौ निखन्यादथ मध्यमं च । २२ । उन्मुच्य पश्चादथ मध्यमे तत्प्राग्दक्षिणायम्य निराञ्छनेन विस्तारतो ऽर्धे निखनेत शङ्कुं । प्रत्यक्तथोत्तरमध्यमे च । स वासुवेदीषु । २३ । अथ मानमेतच्छ्रोण्यां तु पाशोद्धरणं क्रियेत । २४ । अँसश्रोण्योर्लिखेत दिक्षु लेखाः ' शङ्कू निहन्यात्समरेषु तेषु । तेभ्यः समन्तात्परिलेखयेत । २५ । यद्यैष्टिका नोभौ लिखेत शिष्टौ । २६ । पूर्वे त्रिभागे तत्परे च सिद्धोपस्थितावुत्करदक्षिणाग्नी । २७ । अथान्यदस्य परिलेखनं तु मध्ये भवेद्दिक्षु नवाङ्गुलेनेति । २८ । ॥२॥

प्रमाणार्धं तु षष्टचूनँ विशेष इति संज्ञितम् ।
विशेषश्च प्रमाणं च प्रमाणस्याज्ञया भवेत् । १ ।

प्रमाणार्धमन्यत्स्यात्पाशषष्ठे सचतुर्विँशे लक्षणं करोति तन्निराञ्छनमक्षणया तिर्यङ्मानी शेषः । पाशादर्धशये श्रोणी द्व ...... । २ । ......

चाग्नीध्रमिहोपदिश्यते । ३ ।

अग्नेर्यदक्ष्णयामानं तस्य चैव तदक्ष्णया ।
तदाश्वमेधिकँ विद्यादेकविँशद्विधौ ऽथ वा । ४ ।
पुरुषस्तिर्यग्भवेद्यदनुदशधा यो मितः ।
तस्य कर्णेन यत्क्षेत्रँ विद्यादेकादशं तु तत् । ५ ।
उभौ बाहू नशक्ष्णां तु नरस्तिर्यक्तदक्षणया ।
एकोच्चतानैकशताद्बाहुवृद्धया विवर्धयेत् ॥

इति । ६ । ॥३॥

अवलम्बककुष्ठे तु यो भवेत्षोडशाङ्गुले ।
सौत्रामण्या भवेदेष प्रक्रमो मानकर्मणि । १ ।

---

21) M2 B1 °षिमास्ता the oth. °षिस्ता; mss. °समं; cf. 10.1.1.11.
23) N S B2 स वासुवेदी° C3 स वसुवेदी° M2 B1 स वासुदेदी°.
25) mss. लेखाँ शंकु.
21-25) cf. 10.1.1.4-6.
26) M2 शिष्टा the oth. शिष्टाः.
27) mss. सिद्धौभस्थिता°; cf. 10.1.1. 9, 10.
28) cf. Baudh.Śr. 30.4:395.11-13.

**3** 1-2) cf. Baudh.Śr.302:392.15. Āp.Ś.1.6; 2.1.
2) after द्व there is a large hiatus, in S is a blank of more than a page; M2 C3 give: द्वे पात्राणि त्रुटितानि भवतः.
5) mss. या मितो मतः.
6) mss. नरस्तिय°, °वृध्याद्वि°; r. नरार्धाद्दणौ for नशक्ष्णां तु ? cf. 10.3.5.21.

**4** 1) cf. 10.1.3.9; Baudh.Śr.30.3:394.13-16; Āp.Ś.5.8.

प्रक्रमस्य तृतीयेन सौमिकी सार्पराज्ञिकी ।
संतृतीयैस्त्रिभिश्चान्यैः सिद्धमौत्तरवेदिकम् । २ ।
चतुर्दशाङ्गुलो वा स्यात्प्रक्रमस्तेन सौमिकी ।
शतैर्द्वादशभिर्वापि मिनुयात्पाशुकामिव । ३ ।
सचतुर्थे वनँ षड्भिर्नवभिर्वाथ सप्तभिः ।
नवभिर्वापरं चक्रं करणार्धे न लेखयेत् । ४ ।
चतुर्षु निवपेदेषाँ सावित्रादिषु यो विधिः ।
अरुणे जानुदघ्ने निखन्यादद्भिस्तु पूरयेत् । ५ ।

चतुरस्रमथापि मण्डलं द्विविधं गार्हपत्यलक्षणँ व्यायाममितं चतुर्भुजं पुरुषार्धेन तु मण्डलं परिलिखेत् । ६ । व्यायामतृतीयमायान्तं चतुरस्रँ सप्तमभागविस्तृतं प्रागाचितमुत्तराचितँ व्यत्यासे तदर्थैकविँशकम् । ७ । पुरुषस्य तृतीयमायान्तं चतुरस्रँ षड्भागविस्तृतं । प्रथिकश्च तदायतो भवेन्मध्ये तेन समायतो भवेन्मध्ये तेन समास्तिके...शेषौ कोणौ प्रथिकमितौ समौ तद्विस्तारकृतौ विशाखः । ८ । षड्भागकृतायामो भवेद्द्वयर्धे तु त्रिकोणसँस्थिते । ९ । चतुरस्रविपाणकः प्रथिको ऽर्धं प्रथिकश्च यो मितः । १० । करणानि भवन्ति मण्डले चत्वारि प्रमितानि भागशः । ११ । मध्ये ऽस्य चतस्र इष्टकाः तत्पूर्वापरयोर्द्वयोर्द्वयं । प्रतिको ऽर्धविषाणिकद्वयं पुनरेव पुनरैति मण्डलम'र्धप्रथिकद्वये समँ संपूर्ण ' तदर्थैकविँशकम् । १२ । व्यत्यासमुदङ्मुखेन सह व्यत्यस्येद्वेत्युत्तरोत्तरम् । १३ । अध्यर्धं पद्यं च पद्यार्धपद्यपादवत्पद्यार्धोत्सेधमित्याहुर्गायत्रे करणानि च । १४ ।

चतुर्गुणां द्विपुरुषाँ रज्जुं कृत्वा समाहिताम् ।
संभागज्ञातृतोदान्तां पञ्चाङ्गीं तद्विदो विदुः । १५ ।
मध्यमात्पाशयोस्तोदो गायत्रमानमुच्यते ।
सारत्नावर्धपुरुषे । चतुरस्रस्तया मितः ।
पक्षपुछान्तयोर्वृद्ध्या गायत्रेणेतरेषुभिः । १६ ।
इष्टका शोषपाकाभ्यां त्रिँशन्मानात्तु हीयते । १७ ।

ततः क्षेत्रं त्रिचतुर्भागं निरुह्यादापयेच्छिवम् । १८ । अँस उत्तरे ँऽसे च प्राच्यो ऽध्यर्धास्तु विँशतिर्दश पुछे

---

3) cf. 10.1.2.4.
5) mss. °दघ्नी.
6-13) cf. 10.2.2.1; Baudh.Śr.30. 7:400.2-11; Āp.Ś.7.5-11.
8) mss. विशाकः .
9) mss. °स्थितं.
12) M2 B1 °प्रतिकद्रपे the oth. °प्रतिकद्रये.
13) mss. °ङ्मुखस्य.
14) cf. 10.2.2.2, 3.
15) M2 सभोगोज्ञातृतादंता the oth. संभोगोज्ञातृतोदंतां.
15-16) cf. 10.2.1.2 4.
17) mss. हायते (M2 °तं); cf. 10.2. 5.1, 2.
19) mss. अंसादुत्तरमंसं, °र्धस्तु विशद्धिर्दश, पद्मावभितः, प्राचाः, चतुराशात्यौ पद्मौ पंचाशात त्रिँशत आत्म पद्मान्ना भवति, अँसाच्छ्रोण्यो विँशद्विँशत्पुछे.
19-20) cf.10.2.2.11-12.

द्विर्द्वादशकौ पक्षयोरभितः पुछे तु पञ्च देयाः पञ्च प्राचीः पञ्चदश दद्याच्छिरसि । चतुरशीती पक्षयोः पञ्चाशतं त्रिँशतमात्मनि पद्या भवन्ति शतमेकोनं पुछे ऽँसश्रोण्योर्विँशतिर्विँशतिः पुछे पक्षयोर्दशदशाहुः । १९ । अध्यर्धा दश शिरसि प्राच्युदीच्यो भवन्ति । २० । पूर्वोपहिता प्रथमा पदयुजः सर्वा । द्वितीयावाग्युजो ऽश्विनी । २१ । व्यत्यासं चिनुयादेवं जानुनास्य वर्त्मसु । २२ । त्रिपदा अल्पक्षेत्रा एकचितिकाश्चतुः करणयुक्ताः धिष्ण्या भवन्ति साग्निचित्यमन्त्राः सातिरिक्ताश्च । २३ । अध्यर्धास्तु चतस्रो द्वे मध्ये नकुलश्चतुर्भागः । २४ । अश्मा नवमो ऽग्नीध्रे । २५ । होत्रीयमतः सँवक्ष्यामो । ऽँसश्रोण्योः पद्याश्रया नकुलका बहिस्तिसृषु दिक्ष्व'न्तश्चतुर्दश पदकचतुर्थाः स...यः प्रतिदिशमष्टौ पद्या दिक्षु विदिक्षु । २६ । ब्राह्मणाछँस्ये दश चैका स्युर्मध्ये द्वौद्वौ चतुर्थ्यौ नकुलकश्च । २७ । अभितस्तिस्रः पद्या द्वे मध्ये ऽध्यर्धे शिष्टेष्वष्टौ । २८ । अध्यर्धाः षण्मार्जालीये । ऽसं मार्जालीयँ स्याद्दक्षिणपार्श्वेन शामित्रं चात्वालस्य च पश्चाद'वभृथकल्पे ऽप्येवं पदमेकतस्त्रिपदस्तिस्रो ऽतिरिक्तेष्विति । २९ । ॥४॥

सप्तत्रिँशत्सार्धाः पक्षः सव्यश्च शिरसि चत्वारः षड्विँशकस्तथात्मा श्येने पञ्चदशकं पुछं । सप्तदशकं पुछं द्वयँ शिरस्यात्मपक्षयोः क्लृप्तमलजस्य । भागसंधान्तयज्ञैः प्रतिमा नरचतुर्थे । १ । अष्टौ भागाः पुछं कङ्कचिते भवति पादयोश्चतुरः शिरसि तु सप्त ज्ञेयाः श्येनवदात्मा च पक्षौ च । २ । श्येनालजकङ्कानामष्टौ सार्धा विस्तृतं पुछं चत्वारो त्मा द्वौ च शिरः सर्वेषां पञ्चकौ पक्षौ । ३ । श्येनालजकङ्कानां द्वित्रिचतुः कुष्ठमित्युच्यते पुछं । पञ्चाक्ष्णाः पक्षपात्रास्त्वक्ष्णाभिः परिश्रिताः । ४ । पुछे द्वौ भागावानयेत्पुछमलजेन त्रिकुष्ठव'त्त्रीन्श्येनपुछाच्छिरसि कङ्के पादौ तु हरेत् । ५ । प्राचीर्द्वादश सार्धा विँशतिरुदीचीर्भवेन्मिता भागा ' दश पञ्च कङ्कचिताव'लज उदीचीस्त्रयोदश सार्धाश्च । ६ ।

त्रिचतुर्भागमानी स्याद्रज्जुरर्धत्रयोदशी ।
मध्ये च लक्षणं तस्याश्चतुर्भागैर्निराञ्छनम् । ७ ।
भागिकाश्चत्वारस्तोदा अर्धषष्ठे ऽपरः स्मृतः ।
अर्धाश्च मे ऽष्टमे चैव नवमे दशमे ऽपरः ।

---

20) mss. प्राच्योदिच्यौ (C3 °च्यौ°, M2 B1 °दो°).
21) mss. द्वितीयाववद्युजश्विनी.
23-29) cf. 10.2.2.10.
23) mss. त्रिपदासुल्प°, साग्निचित्यतोमंत्राः (M2 B1 °त्या°).
25) mss. अस्मान्नवमो.
26) विदिक्षु not N C3 B2.
28) mss. मध्यर्धे.
29) B2 अंसं the oth. असं; S B1 B2 °वभृथक्तल्पे M2 °वभृथल्पे N C3 °वपृथक्तल्पे, corr. uncertain.

5 Cf. Baudh.Śr.30.10-13.

1) S °स्तथांसा the oth. °स्तथासाः; N C3 B2 श्येते M2 B1 शेते S श्पेते; M2 क्लिषं the oth. क्लिप्तं; M2 °सध्वां° the oth. °सधां°.
2) mss. श्येनेपदाप्तं.
3) mss. षट्धा for सार्धा, चत्वारो मा.
5) mss. त्रीन्पुछशिरसि श्येनान्कंके.
6) mss. त्रयोदशार्धश्च; r. °र्भवेयुर्मिता; r. एकोनविँशति° for विँशति°, त्रयोदश for दश पञ्च, षोउश for त्रयोदश ?
7 and 9) mss. निराँसनं.
8) mss. °स्तीदार्ध°.

अर्धद्वादशो वान्यः । ८ ।
ततः प्राचीः प्रसार्य तु तस्या निखानयेच्छङ्कुम् ।
पाशयोर्मध्यमे ऽष्टमे । चतुर्थे वाहत्य पाशम् ।
आसज्य मध्यमे निराञ्छनम् । ९ ।
निरायम्य विनुद्योन्मुच्य मध्यमात् ।
अभितो दशम आयम्य भागा द्विकचतुष्काः ।
अर्धषष्ठे ऽपि चाहत्य पूर्वादेवँ समाचरेत् ।
तुल्यं शङ्कुं तुर्ये । १० ।
ततः प्राचीः प्रसार्य तु अर्धषष्ठकयोः पाशौ ।
शङ्कू अर्धाष्टमे ऽष्टमे । प्रगृह्य पश्चिमशङ्कू ।
द्विकयोर्वोत्सृजेत्ततः । ११ ।
चतुर्थनवमौ शङ्कू प्रवृहेदन्तिमावुभौ । १२ ।
अष्टमे पाशमासज्य अष्टमेनैव निग्रहः ।
भागेभागे ततः शङ्कू तयोः । १३ ।
अष्टमे पाशमासज्य आदिशङ्कौ निगृह्य च ।
दशमे शङ्कुमाहन्यात्पुछार्धे अलजस्य तु । १४ ।
...स्यार्धाष्टमे शङ्कुः कङ्कस्य दर्शने स्मृतः । १५ ।
त्रिके पाशँ समासज्य दशकेन निगृह्य च ।
एताभ्यामेव तोदाभ्यां शङ्कू देयौ तथोत्तरौ । १६ ।
अर्धद्वादशमे पाशस्त्रिको निग्रहणो भवेत् ।
आदिपाशे द्विके चैव शङ्कू देयौ तथोत्तरौ । १७ ।
उत्तरे द्विकमासज्य दक्षिणँ समयोर्हरेत् । १८ ।
चतुर्थे शङ्कुमाहन्याद्विपरीतँ समाचरेत् ।
चतुर्थे तु तदर्थेन निगृह्य च ......। १९ ।

**इति श्येनस्य रज्जुर्द्वादशलक्षणा । २० ।**

चत्वारि करणान्येषां त्रिचतुर्थेन कारयेत् ।

---

9) mss. चतु॰ वाहन्यं.
10) mss. अधितो, तुर्यं.
11) mss. शंकुम°, °शंकुं.
12) mss. शंकुं.
13) not **N** B1; mss. विग्रहः, शंकुकयोः.
14) mss. °त्पुछार्धे ऽमलजस्य (B2 त्मल°); cf. sū.27.
15) mss. दर्शमे
15-16) are given in the mss. after sū.19.

नवभागा अक्ष्णार्धाक्ष्णाः पञ्चकोणाः च भागशः । २१ ।
प्राचीने पञ्चकोणे द्वे अथार्धाक्ष्णाद्वयं न्यसेत् ।
अँसाग्रयोरथैकैका एवं पक्षविपक्षयोः । २२ ।
नवभागैश्चितं मध्यमक्ष्णाभिः परिषिञ्चते ।
पक्षाग्रे पञ्च पत्राण्येवं चाक्ष्णा विधीयते । २३ ।
व्यत्यासाक्ष्णाद्वयं तुन्दे पञ्चकोणे प्रत्यक्स्थते ।
अर्धाक्ष्णे कण्ठसंध्योश्च पूरयेदमितँ शिरः । २४ ।
द्वे पक्षसंध्योरर्धाक्ष्णे पुच्छसंध्योस्तथापरे ।
दश पञ्च च पुच्छाग्रे पक्षाग्र एकविँशतिम् । २५ ।
औपमाने चयने चैषाँ व्यत्यासे करणेषु च ।
रज्ज्वाश्चावपनँ ह्रासो श्येनसिद्धिरिति स्थितिः । २६ ।
अवक्रपक्षमलजं च पूर्वपक्षे तथायुतम् ।
मध्यात्प्रसिद्धं पुछँ श्येने दाम्ना प्रसिध्यत इति । २७ ।
नवमात्प्राग्भागे शङ्कू तुरीयस्य करणम् ।
अलजे पक्षार्धमवक्रताद्ध्येवं भवेत् । २८ । ॥५॥

पुरुषस्य तृतीयपञ्चमौ भागौ तत्करणं पुनश्चितेः ।
तस्यार्धमथापरं भवेत्त्रिचितिकमग्निचितिश्चेत् । १ ।
अष्टावष्टौ संमिता चितिरष्टैकादशिका च मध्यमा ।
व्यत्यासवतीरुपन्यसेदऽष्टौ द्वादश चोत्तमा चितिः । २ ।
पञ्चदशनरं क्षेत्रं प्रउगचित्ततस्त्वर्धम् ।
मध्याद्दशके त्रिकुष्ठमेतत्तथा करणम् । ३ ।
बाह्वोरेकविँश उभकरणे तथार्धो ऽन्यश्च ।
अँसश्रोण्योश्छेदस्तस्योभयतो भवेत्प्रउगः । ४ ।
चात्वालेभ्यश्चतुर्भ्यस्तु समूह्यो ऽग्निरनिष्टकः ।

22) mss. पंचकोणे द्वेद्वेतुद्वे ऽर्धा°.
23) mss. °सिंचनेत् , वधायते.
25) mss. पच्चाग्रे विँशवे पृथक् .
26) r. च for चैषाँ.
6 1-2) cf. 10.1.4.7, 8; mss. त्रिचितिनैंनम°; S C3 °चितिमेत् the oth. °चितिनेत् ; mss. °रुदन्यसे°.
3-4) mss. प्रौग° twice; cf. Baudh. Śr.30.14, 15.
4) mss. °विँशोभ,° °र्धमन्य°; cf. 10.3.3.6.
5) mss. पुरीषैश्चव्यो भागशो (M2 -श्चव्या); cf. Baudh. Śr.30.18: 411.5-7; Āp.Ś.14.1-3.

दिग्भ्यः पुरीषैः समूह्यो भागशो युक्तितो विधिः । ५ ।
मण्डलचतुरस्रो ऽद्य परिवार्यः श्मशानचित् ।
द्रोणचित्त्सरुमानेषां दशभागो भवेत्त्सरुः । ६ ।
मण्डले चतुरस्रं तु कुर्याद्गार्हपत्यवत् ।
बाह्वोर्विँशतिभागेन वारुणँ सार्धमेव तु । ७ ।
प्रसिद्धं दशधा कुर्याद्बहिरन्तश्च युक्तितः ।
त्रिकुष्ठश्च विषाणः स्यात्संधौ व्यत्यास एव सः । ८ ।
चतुरस्रस्य करणं बाह्वोर्द्वात्रिँशद्भागिकम् ।
चतुरस्रमथाध्यर्धं ताभ्यां गायत्रवद्विधिः । ९ ।
साहस्रस्य करणं बाह्वोः पञ्चदशभागं चतुरस्रम् ।
अध्यर्धास्तु ततः स्युर्द्विशताश्चितयः स्मृताः । १० ।
पञ्च पञ्चाशतमध्यर्धास्तिस्रः पञ्चाशतं चतुरस्राः ।
सहस्राच्छतं पक्षाः स्युरुषा सहस्रतमी । ११ ।
बाह्वोरेकत्रिँशो भागः करणं चितिस्तथोत्तरयोः ।
चतुरस्रानाँ साहस्रँ सवनिके व्यवास्यन्ति । १२ ।

अर्धैकादशपुरुषं घनं भवेद्भवेन्मण्डलँ रथचक्रं । नाभिररा विवरधा नेमिररेभ्यो यद्यतिरिक्तम् । १३ । तदर्धाः पुरुषायामाः पुरुषाष्टभागविस्तृताः चतुर्विँशतिस्त्रिनरनायाः । १४ । विवरकरणमतः संप्रवक्ष्यामि । द्विसप्तमेन नेम्यस्रकरणं भवेदरस्याष्टभागेन वैकृतश्चतुर्विँशतिभागेन नाभ्यामन्तरमन्तरो ऽष्टमभागेन प्रउगवद्भवेत् । १५ ।

द्वीष्टकाँ चिनुयान्नाभिं चतुर्भिश्चिनुयादरान् ।
त्रिभिर्नेमिँ यथाभागँ । व्यत्यासः कूपवत्स्मृतः । १६ ।
विष्कम्भस्य चतुर्थेन नाभ्यास्तु विवरँ लिखेत् ।
त्रिचत्वारिँशाङ्गुलां नेमिँ सार्धचतुरङ्गुलाम् । १७ ।
सिद्धमन्यद्यथा युक्तिश्चयने याश्च संपदः । १८ ।

---

6) mss. °चित्सरु°, °वेत्सरुः .
7-12) cf. Baudh.Śr.30.18.
7) mss. वरुणँ.
8) mss. व्यत्यस्य.
9) B2 °थार्धे च the oth. °थाध्यर्धे च.
11) cf. Baudh.Śr. श्रोष्ठः .
12) M2 °स्तथातुरयो° the oth. °स्तथोतूरयो°; mss. चतुरस्राँ साहस्राँ (M2 सहस्राँ).
13-18) cf. Baudh.Śr.30.16:408.14-409.12.
13) mss. नाभिर्नरा, °रारभ्यो.
15) mss. °सप्ततेन नेम्यास्रु°, अरँरस्याष्ट°, °तराः अष्टम°, प्रौग°.
16) mss. exc. C3 क्तूपव°.
17) mss. °शांगुलो नेमिः .

य इदमपि यथातथँ स्मृतिं विधिँ यदाधीत्य मिमीते रौरवँ समवति खलु कृत्स्नसंमतो व्रजति च शुल्बकृतां सलोकताम् । १६ । ॥६॥

रथचक्रस्य चित्यस्य संक्षेपोक्तस्य विष्णुना ।
अथ धातुर्निविष्ठस्य त्रिगुणान्यं बहिर्बहिः ।
लीयन्ते मण्डले यस्य सप्त सार्धा नरा बुधैः । १ ।
मुच्यन्ते विवरेष्वन्ये क्षेत्रादभ्यधिकास्त्रयः । २ ।
तस्य चक्रविधानं तु । नेमिररेभ्यो विस्तरः ।
मण्डलानां च विष्कम्भः त्रिभागः करणानि च । ३ ।
नरार्धेनाभिलिखेन्नाभिस्ततः प्रस्तारगोचरा ।
अरेभ्यो ऽभ्यधिका नेमिस्त्रिषष्ठेनाक्षरागारम् ।
त्रिँशतेन सविँशेन अधिकैश्चार्धपञ्चमैः ।
मिमायाङ्गुलैर्वा मध्यं कुर्याद्विँशेन परिलेखनम् । ४ ।
प्रथमे प्रस्तरे रथचक्रस्य श्रृणुतेष्टकाः ।
चतुर्भिरधिकँ वेत्थ चत्वारिँशच्छतत्रयम् । ५ ।
द्वितीये ऽभ्यधिका यान्तु चतुर्विँशतिरिष्टकाः ।
पञ्चकोणास्त्रिकोणाश्च नेम्यरेभ्यः च संधिषु । ६ ।
इष्टकानाँ सहस्रेण शतैः सप्तभिरेव च ।
अष्टषष्टया च चक्रस्य चितयः पञ्च पूरिताः । ७ । ॥७॥

॥ **इति वैष्णवँ समाप्तम्** ॥

॥ **इति शुल्बसूत्रँ समाप्तम्** ॥

---

**7** 3) mss. नेमीरारभ्य. 4) mss. °गोचरं, ॥ आरेभ्यो, °त्तराद्वारं. 6) mss. नेमीनारभ्य.

अथातः प्रतिग्रहकल्पँ व्याख्यास्यामः । १ । दक्षिणां प्रतिगृह्णीयादनावेदविन्नाशुचिर्नायज्ञोपवीती न मुक्तशिखो नार्तश्च ' नानुदके न चाकाले । २ । सावित्रः पुरस्तात्क इदमिति पश्चात् । ३ ।। प्रजापतये त्वेति पुरुषीं प्रतिगृह्णीयाद्धस्तिनं पुरुषं भूमिं प्राणि चान्यत्सर्वं जीवमनूर्वरां '' चन्द्राय त्वेति शिरो '' यमाय त्वेत्येकशफँ '' रुद्राय त्वेति गाम''ग्नये त्वेति हिरण्यं त्रपु सीसमयो लोहं च '' ग्नास्त्वाकृन्तन्नपसो ऽतन्वत धियो ऽवयन्बृहस्पतये त्वेति वास '' उत्तानाय त्वेत्यप्राण''द्विश्वेभ्यो देवेभ्यस्त्वेति छत्त्रं गृहं ग्रामं च '' श्रीकामाय त्वेति शय्यामि''न्द्राग्निभ्यां त्वेति छागं मेषं महिषं च '' वरुणाय त्वेत्युदकुम्भं कूपं तडागं च '' समुद्राय त्वेति करकशङ्खशुक्तिप्रवालानि यच्चान्यत्किंचित्सामुद्रं '' त्वष्ट्र इत्युष्ट्रा''न्सोमाय रसान्द्रवान्-गन्धस्रजो वनस्पतीँश्च '' वैश्वानराय त्वेति त्वेति रथान् । ४ । यद्यासंभृता नानादक्षिणास्तां दक्षिणां प्रतिगृह्णीयात्

पृथिव्यां पुण्यं च पापं च कस्ते प्रतिपश्यति ।
इष्टपुण्यं च पापं च आदित्यः प्रतिपश्यति ।।
यदा दाता प्रमीयेत यस्मै दत्तँ स जीवति ।
अन्तरावर्तमानाभ्यां दक्षिणा कस्य तिष्ठति ।।
वरुणो दक्षिणाः प्रतिगृह्य विष्टावे प्रयछति ।
स दाता सर्वसत्यानां जन्मकाले पुनःपुनः ।।

इति । ५ । ।।१।।

पुरुषीँ हस्ते गृहीत्वा ' प्रसारे वीरं बाहुभ्यां ' बाहुकारीमभिरुह्य ' हस्तिनं पुरुषं भूमिं पृष्ठे ' ऽश्वं गां पुछे ' हिरण्यं गृहीत्वा ' वासः परिधाया'क्रम्याप्राणं ' छत्त्रं दण्डे ' रथमीषायां ' ग्रामं मध्ये ' गृहं प्रविश्य ' शय्यामारुह्या'जं कर्णे ' मेषमूर्णायां ' महिषँ शृङ्गे ' उदकुम्भं गृहीत्वा ' कूपमवलोक्य ' तडाग-मवतीर्य ' करकशङ्खशुक्तिप्रवालानि गृहीत्वा यच्चान्यत्किंचित्सामुद्रँ ' शङ्कुना चोष्ट्रान्प्रतोदेन खरानश्व-तरानुत्क्षिप्य ' रसाननुलिह्य गन्धान्स्रग्दामानि चा'रुह्य वनस्पतीन'न्नं गृहीत्वा । १ । श्राव्यमन्त्रो ब्राह्मणस्य जपमन्त्रो राजन्यस्योपाँशुमन्त्रो वैश्यस्य शूद्रस्य गृहान्निष्क्रम्य बहिरुपस्पृश्य मनसा मन्त्रमा-

**1** MS.I.9.4; Āp Sr.14.11, 12.

1) M2 परिग्रह°.

3-4) cf. 5.2.14.6-13; mss. पाणि नान्यत्सर्वं जीवान्यूर्वरां, सीमयो, यष्ट्रे त्यु° for त्वष्ट्र इत्यु°; cf. MS I.3.18: 37.3; 17:36.14; 2.3:12.14; IV. 9.8:128.7; III.14.10:174.6 (त्वष्ट्रा उष्ट्रान् ); IV.9.8:128.10: I 3.15:36.5.

4-5) कृतान्नत्यासं° for रथान्यद्यासं°, cf. Āp.Śr.14.11.3, 4.

5) mss. दक्षिणं; M2 N आदित्य S आदित्यं.

**2** 1) mss. प्रशारो, प्राष्ठे, °क्रम्यजाप्राण (corr. uncertain); S N °नुक्षिप्य M2 °नक्षिप्य; mss. °नुलिल्प गंधा-न्स्रग्दामामा चा°.

2) mss. श्राव्यामंत्रो ब्राह्मणस्य मंत्रो राजस्य उपाँशुनो वैश्यस्व.

वर्तयेत् । २ । य एवं विद्वान्प्रतिगृह्णाति पुनाति दातारं पुनाति चात्मानं पुनाति दक्षिणा ' देवेषु वेत्ताहमिति । ३ । ॥२॥

॥ इति प्रतिग्रहकल्पः ॥

अथातो मूलजातस्य विधिं व्याख्यास्यामः । १ । मूलस्य प्रथमे ऽंशे पितुर्नेष्टो द्वितीये मातुस्तृतीये धनस्य चतुर्थे कुलशोकावह आत्मनो वा पुण्यभागी भवति । २ । तत्रोदकुम्भं कुर्यात्तस्मिन्रुद्राञ्जपित्वाप्रतिरथं रक्षोघ्नं सूक्तं च । ३ । द्वितीयोदकुम्भश्चतुःप्रस्रवणसंयुक्तस्त स्मिन्मूलानि धारयेद्वंशयात्राकृतानि । ४ । तेषां प्रधानानि मूलानि वक्ष्यामि । प्रथमाः काश्मर्यः सहदेवी अपराजिता अधःपुष्पी शङ्खपुष्पी बला पाटला मयूरशिखा मधुपुष्पिका चक्राङ्किता काकजङ्घा कुमारी द्वितीया वैजयन्ती अपामार्गो भृङ्गरजो लक्ष्मणा जाती व्याघ्रः पत्त्रकः चक्रमर्दः कपिलेश्वरा अश्वत्थः सहः पलाश उदुम्बरः प्लक्षः शमी अर्को रोहितको बिल्व इत्येवमादीनि मूलशः पूरयित्वा मध्ये मूलं हेममयं च कुर्यात्सप्तधान्यसंयुक्तम् । ५ । तेषां निषिद्धानि मूलानि वक्ष्यामि । तिल्वको धवो निम्बः शाल्मली राजवृक्षः श्लेष्मन्तकः सर्वकण्टकिवर्जम् । ६ । तत्राभिषेकं कुर्वीत पितुः शिशोर्जनन्या देवरस्याकृत्यासन्द्यामासीनानां ' संपातेनाभिषिञ्चति शिरसो ऽध्या मुखात् । ७ ॥ शिरो मे श्रीर्यश इति यथालिङ्गमङ्गानि संमृशति । ८ । स्नातानामुपरिष्टान्नैर्ऋतं पयसि स्थालीपाकं श्रपयित्वा काश्मर्यमयं परिधिमिध्मं स्रुक्स्रुवं संमृज्याघारावाज्यभागौ हुत्वा"सुन्वन्तमयजमानमिति चतस्रः स्थालीपाकस्य हुत्वा " कया शुभा सवयस इति पञ्चदशाज्याहुतीर्जुहुयान्"मा नस्तोक इति " या ते रुद्र शिवा तनूरिति पञ्च । ९ ॥ अग्ने रक्षा " सीसेन तन्त्रमिति द्वाभ्यां स्विष्टकृते हुत्वा समाप्ते कृष्णा गौः कृष्णाश्च नीला हेममयं मूलं सप्तधान्यं चाचार्याय दद्याद्ब्रह्मणे कृष्णो ऽनड्वान्यथाशक्त्या ब्राह्मणेभ्यः सुवर्णं दद्यात् । १० । ब्राह्मणान्भोजयेत्कृसरपायसान्नमाज्यसंयुक्तम् । ११ । सर्वं शोभनं क्षेममारोग्यं सर्वाशिषः संपदा सर्वमङ्गलसंपदा च । १२ । एवं नैर्ऋतदेवते गरयोगे च विधिर्मनुनादिष्टः । शान्तिकराक्षे मकरी शुभकरा धनधान्य ऋद्धिकरी सर्वकुलरक्षणी भयशोकापहारिणी बलभाग्ये शुभकारेति । १३ ।

॥ इति मानवसूत्रे मूलादिजातशान्तिविधिः ॥२॥

**2** 2) mss. प्रथमे शे.
4) mss. °यात्र°.
5) for the sake of clearness the names are printed separately, as the mss. did; mss. काश्मर्या, पाटाला, द्रय, °र्कं inst. of °रजो; M2 S कपिद्रे° N कपिद्रे°; mss. पलाशा; S N रौहीतक° M2 रोतक°; mss. बिल्वक.
6) mss. तैल्वक.
7) mss. °संद्यायामासीनायाः (M2 °ध्या°), शिरसोधामुखाय्य (M2 °य).
8) cf. 5.2.11.25.
9) mss. स्नातामुरिष्टान्नैश्तं (S °न्ने° N °त्रै°); mss. °मया परिधिमिध्मं स्रुक्सवं (M2 °मिध्म, °क्स्रवं); r. निधाय for °मिध्मं ? cf. 6.1.5.16; 5.1.6.44: 5.2.7.22: 6.2.4.3.
10) mss. रक्षाँसिसेधतिमिति; cf. 5.1.1.28; 5.2.11.27.
13) mss. मकरा, °भाग्य.

अथ यमलशान्तिः । १ । अस्य यमलौ पुत्रौ गावौ वडवे वायायाताम् । २ । सँवत्सरे पूर्णे द्वादशवत्सरे वा द्वादशरात्रे वा सप्त कर्षायानाहरेदश्वत्थमुदुम्बरँ विकङ्कतं न्यग्रोधप्लक्षशमीशमकप्रियङ्गुगौरसर्षपाँश्च । ३ । यदि तान्न विन्देद्धिरण्यस्नानँ ।। हिरण्यवर्णाः शुचय इति चतसृभिश्चतुष्पादे भद्रपीठे प्राङ्मुखानुपवेश्य मृन्मयेन शतधारेण बैजलँ सहस्रधारमन्तर्धाय " या ओषधयः " समन्या यन्तीत्यनुवाकाभ्यां चतस्रो विधवाः स्नापयेयुश्चत्वारो वा ब्रह्मचारिणः । ४ । स्नातावलंकृतौ दम्पती प्रदक्षिणमग्निं परिणयेत् । ५ । पश्चादग्नेर्दर्भेषूपविश्य मारुतस्य स्थालीपाकस्य प्रियवतीभ्याँ सप्त कृत्वो ऽवद्यञ्जुहोति । ६ । ऋषभैका गावो दक्षिणा । ७ । पुरस्तादग्नेः सप्त कर्षून्खात्वा तान्गन्धोदकेन पूरयित्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतो " हिरण्यगर्भ इत्यष्टाभिः प्रत्यृचमतिक्रामेदष्टमीं जपेत् । ८ । आहिताग्नेश्चोदनेन विधिना व्याख्यास्यामः । ९ । मारुतं त्रयोदशकपालं निर्वपेत् । १० । तस्य गौर्धेनुर्दक्षिणा । ११ । यदि तां न विन्देत्सुक्षेत्रँ सुसमृद्धं दद्याद्यवक्षेत्रं तिलक्षेत्रँ वा । १२ । यदि तानि न विन्देल्लोमवस्त्रत्वगवछन्नो वाडवाग्निं प्रविशेत्स एतस्यानुग्रहः । १३ ।

**।। इति यमलजातिशान्तिः ।।**

अथात आश्लेषाविधिँ व्याख्यास्यामः । १ । प्रथमे पादे मातृनाशश्चतुर्थे पितुर्विनाशः । २ । तत्र मूलविधानोक्तौषधिशतं गृहीत्वा ताम्रपात्रे परिवँशपात्रे निधाय तण्डुलान्परिष्ठाप्य तस्योपरि हेम निष्कप्रमाणँ सर्पमधोमुखं प्रतिष्ठाप्य पञ्चगव्येन स्नपनं कृत्वा वस्त्रयुग्मेन वेष्टयेद्यज्ञोपवीतेन सुगन्धैः पञ्चवर्णपुष्पैर्धूपदीपैर्नानाभक्षभोज्योपहारैस्ताम्बूलादिभिर्नानाविधफलैश्च । ३ ।। नमो अस्तु सर्पेभ्य इति सुवर्णसर्पं पूजयेत् । ४ । ततश्चतुरः कुम्भान्प्रतिष्ठाप्य प्रथमं निर्झरोदकेनेतरानपि संपूर्य तत्र प्रथमे सप्त मृत्तिका द्वितीये देवदारु मुस्तां च सिद्धार्थोत्पलहरिद्रागुडूचीचन्दनं तृतीये सर्वौषध्यश्चतुर्थे सर्वमिदं कृत्वा " समुद्रं गछेति चतुर्भिर्मन्त्रैरभिमन्त्र्य गन्धपुष्पादिभिरर्चयित्वा शुभे ऽह्नि शुभनक्षत्रे शुभलग्ने शुभवेलायाँ यजमानः शुचिर्भूत्वाहते वाससी परिधाय गन्धाद्यैरलंकृतमाचार्यं नमस्कृत्यर्त्विग्भिः सह पुण्याहवाचनं कृत्वा कलशेषु मध्ये स्थण्डिलं कृत्वाग्निं प्रतिष्ठाप्य स्थालीपाकँ श्रपयित्वाघारावाज्यभागाभ्यां हुत्वा ततः सावित्र्या सवित्रे " वयँ सोमेति सोमाया"सुन्वन्तमयजमानमिति निर्ऋतये " सहस्रशीर्षेति विष्णवे

---

**3** 2 mss. वायेया°.

3) mss. °वत्सरो वा; cf. 3.8 सप्त कर्षून्.

4) mss. वैजलँ; cf. 3.8.3; 6.1.3.3; MS II.13.1:151.

7) mss. गा.

8) cf. MS.II.13.23; mss. °चमिति-क्रामे°.

9) mss. °ताग्निश्चो°.

11) mss. तस्या.

12) not M2; N S तानि, °त्सुजेत्रँ. यचक्षेत्रं.

13) mss. वादावाग्नि.

**4** 1) S N अश्लेषा°.

3) mss. °पात्रो, °पात्रं, तंडुलोपरि°, निष्क°, °पहरै°.

4) cf. 3.5.18.

5) mss. परिधाया; cf. 1.8.6.6; RV. 10.57.6; 90.1.

पृथगष्टोत्तरशतं जुहुयात् । ५ ।। नमो अस्तु सर्पेभ्य इति समिच्चरुतिलाज्यैर्जुहुयात् । ६ । स्विष्टकृतं प्रायश्चित्ताहुतीर्हुत्वा पूर्णाहुतिँ हुत्वाचार्यः शिशुं मातरं पितरँ सर्वौषधितिलसर्षपसँयुक्तमुदकं कलशादुद्धृत्यर्त्विग्भिः सह चतुर्भिः कलशैरभिषिञ्चेत् । ७ । पूर्ववद्दक्षिणेति शेषो व्याख्यातः । ८ ।

**।। इति मानवसूत्रे आश्लेषाविधिः ।।**

शंकर उवाच

दन्तजन्मनि बालानां लक्षणं तन्निबोधये ।
उपरि प्रथमँ यस्य जायन्ते च शिशोर्द्विजाः ।
दन्तैर्वा सह यस्य स्याज्जन्म भार्गव सत्तम ।
मातरं पितरं चाथ खादेदात्मानमेव वा । १ ।
तत्र शान्तिं प्रवक्ष्यामि तां मे निगदतः शृणु ।
गजपृष्ठगतं बालं नौस्थँ वा स्थापयेद्द्विजः ।
तदभावेन धर्मज्ञः काञ्चने च वरासने । २ ।
सर्वौषधैः सर्वगन्धैः बीजैः पुष्पैः फलैस्तथा ।
पञ्चगव्येन रत्नैश्च पताकाभिश्च भार्गव ।
स्थालीपाकेन धातारं पूजयेत्तदनन्तरम् । ३ ।
सप्ताहं चात्र कर्तव्यं तथा ब्राह्मणभोजनम् ।
अष्टमे ऽहनि विप्राणां तथा देया च दक्षिणा ।
काञ्चनँ रजतं चात्र भुवमात्मानमेव च । ४ ।
दन्तजन्मनि सामान्ये शृणु स्नानमतः परम् । ५ ।
भद्रासने निवेश्यैनं मृद्भिर्मूलैः फलैस्तथा ।
सर्वौषधैः सबीजैश्च सर्वगन्धैस्तथैव च ।
स्नापयेत्पूजयँश्चात्र वह्निसोमँ समीरणम् ।
प्रथमँ स्थापयेत्तत्र देवदेवं च केशवम् । ६ ।
तेषामेव तु जुहुयाद्घृतमग्नौ यथाविधि ।
ब्राह्मणानां च दातव्या ततः पूजा च दक्षिणा । ७ ।
भासन्तं छत्रमूर्धानं बीजैः सुस्नापयेत्ततः ।

9) mss. °सूत्रे अश्लेषा°. 5 3) mss. भार्गवे.

सुस्निग्धैर्बालकानां च तैश्च कार्यं प्रपूजनम् । ८ ।
पूज्याश्चाविधवा नार्यो ब्राह्मणाः सुहृदस्तथा । ९ ।

**।। इति विष्णुधर्मोक्ता दन्तात्ययतिशान्तिः ।।**

अकालप्रसवा नार्यः कालातीतप्रजास्तथा ।
अमानुषा अभण्डाश्च अजातव्यंजनास्तथा ।
हीनाङ्गा अधिकाङ्गाश्च जायन्ते यदि वा स्त्रियः ।
पशवः पक्षिणश्चैव तथैव च सरीसृपाः ।
विनाशं तस्य देशस्य कुलस्य च विनिर्दिशेत् । १ ।
निर्वासयेत्तान्नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेन्द्राः । २ ।
फलादिकैर्ब्राह्मणतर्पणं च लोके ततः शान्तिमुपैति प्राप्तः । ३ ।

**।। इति प्रसवेकृतशान्तिः ।।**

अथातो रुद्रजपस्य विधानकल्पँ व्याख्यास्यामः । १ । उत्तरतो ग्रामस्य पुरस्ताद्वा शुचौ देशे नदीषु देवखातेषु तडागे वा मलापकर्षणं कृत्वा प्राणायामत्रयं कुर्यात् । २ । रुद्रस्नानं कुर्वीत । ३ ।। नमः शंभवे चेति स्नात्वा"संख्याता सहस्राणीति दशभिर्मार्जनमुत्तीर्य वस्त्रे च परिधायाचम्य रुद्रं न्यसे"द्या ते रुद्रेति शिखायाँ " ये अस्मिन्महत्यर्णव इति शिरस्य"संख्याता इति ललाटे " नमो नीलकपर्दायेति चक्षुषो"र्नमः श्रुताय च श्रुतसेनाय चेति कर्णयोरँवतत्य धनुष्ट्वमिति मुखे " नमो नीलग्रीवायेति कण्ठे " नमस्ता आयुधायानाततायेति बाह्वो"र्नमो गिरिकेभ्य इति हृदये " हिरण्यगर्भ इति नाभ्यां " नमो गणेभ्य इति पृष्टौ " नमो मीढुष्टराय चेति कट्यामि"मा रुद्राय तवस इति गुह्ये " मा नो महान्तमित्यूर्वो"र्ये पथां पथिरक्षय इति पादयोर"ध्यवोचदिति कवचं " नमो बिल्मिने चेत्युपकवचं " प्रमुञ्च धन्वन इत्यस्त्रम् । ४ ।। य एतावन्त इति दिग्बन्धः । ५ ।। ओं नमो भगवते रुद्रायेति विन्यसेत् ।

ओंकारं मूर्ध्नि विन्यस्य नकारं नासिके तथा ।
मोकारं तु ललाटे वै भकारं मुखमध्यतः ।
गकारं कण्ठदेशे तु वकारँ हृदये न्यसेत् ।
तेकारं दक्षिणे हस्ते रुकारँ वामतो न्यसेत् ।

---

10) N S सदंतोप्त्य°.
6 2) mss. पूजयाश्च.
3) N S प्रापं M2 पापं, r. प्राप्ताम् ?
4) mss. प्रववेकृत°.
1 4) cf. MS.II.9.2-9; Mān. 3.1.28.

द्राकारं नाभिमध्ये तु यकारं पादयोस्तथा । ६ ॥

त्रातारमिन्द्रं '' प्राचीदिगधिपतय इन्द्राय नमः ॥ त्वं नो अग्न '' आग्नेयदिगधिपतये ऽग्नये नमः ॥ सुगं नु पन्थां '' दक्षिणादिगधिपतये यमाय नमः ॥ असुन्वन्तमयजमानं '' नैर्ऋत्यदिगधिपतये निर्ऋतये नमः ॥ तत्त्वा यामि '' पश्चिमदिगधिपतये वरुणाय नमः ॥ आ नो नियुद्भि''र्वायव्यदिगधिपतये वायवे नमः ॥ त्वँ सोम क्रतुभिरुँदग्दिगधिपतये कुबेराय नमः ॥ तमीशानमी''शानदिगधिपतय ईशानाय नमः ॥ इमा रुद्राय तवस '' ऊर्ध्वादिगधिपतये ब्रह्मणे नमः ॥ स्योना पृथिव्य''धोदिगधिपतये ऽनन्ताय नम इत्येतद्दिक्संपुटम् । ७ । एवमेवात्मनि रौद्रीकरणं कृत्वा त्वगस्थिगतैः पापैः प्रमुच्यते । ८ । अनेन विधिना न ग्रामे न स्त्रीस्रवणे न श्राद्ध आमन्त्रिते न पशुसंनिधौ यक्षराक्षसभूतप्रेतपिशाचयमदूतशाकिनीतस्कराद्युपघाताः । ९ । सर्वे ते ज्वलन्तं पश्यन्ति । १० । आत्मानँ रुद्ररूपं ध्यायेत् । ११ । त्रिनेत्रं पञ्चवक्त्रं दशभुजँ सौम्यँ सर्वाभरणभूपितं नीलग्रीवँ शशाङ्कचिह्नँ शुद्धस्फटिकसंकाशं नागयज्ञोपवीतिनँ व्याघ्रचर्मोत्तरीयकं कमण्डल्वक्षसूत्रहस्तमभयप्रदं त्रिशूलहस्तं पिनाकपाणिनँ वृषभस्कन्धममारूढमुमादेहार्धधारिणं ज्वलन्तं कपिलजटं जटामुकुटसँयुक्तँ शिखामुद्द्योतकारिणममृतेनाप्लुतँ हृष्टँ सुरासुरैर्नमस्कृतं दिग्देवतैः समायुक्तं नित्यं च शाश्वतँ शिवं ध्रुवमक्षयमव्ययँ सर्वव्यापिनिरञ्जनमीशानँ रुद्रँ विश्वरूपिणमेवं ध्यात्वा द्विजः सम्यक्ततो जपमारभेत् । १२ । सुगुप्तदेशे गोचर्ममात्रे ऽस्थन्स्वनुलिप्ते वा लिङ्गपद्माकृतिं प्रकल्प्य प्रोक्ष्य '' मा नो महान्तमिति स्थापयेद्''नमः शंभवे चेत्यर्चयेत् । १३ ॥ सद्यवामाघोरतत्पुरुषेशानेति रुद्रस्यावाहनँ ॥ सद्यो जात इत्यस्य सद्योजात ऋषिर्ब्रह्मा देवता त्रिष्टुप्छन्दः हँसवाहनः पश्चिमवक्त्रः पृथिवीतत्त्वः ब्रह्मरूपाय ह्रां पश्चिमवक्त्रावाहने विनियोगः '' सद्यो जातः '' पश्चिमवक्त्राय नम '' आ वाहयामि ॥ वाममद्य सवितरित्यस्य वामदेव ऋषिः विष्णुर्देवता त्रिष्टुप्छन्दो गरुडवाहन उत्तरवक्त्र आपस्तत्त्वो विष्णुरूपाय ह्रीमुत्तरवक्त्रावाहने विनियोगो '' वाममद्य सवितरु''त्तरवक्त्राय नम '' आ वाहयामि ॥ अघोरेभ्य इत्यस्याघोर ऋषी रुद्रो देवता बृहतीछन्दो वृषभवाहनो दक्षिणवक्त्रस्तेजस्तत्त्वो रुद्ररूपाय ह्रूं दक्षिणवक्त्रावाहने विनियोगो '' अघोरेभ्यो '' दक्षिणवक्त्राय नम '' आ वाहयामि ॥ तत्पुरुषायेत्यस्य तत्पुरुष ऋषिः सूर्यो देवता गायत्रीछन्दो ऽश्ववाहनः पूर्ववक्त्रो वायुस्तत्त्वः सूर्यरूपाय ह्रैं पूर्ववक्त्रावाहने विनियोगस्त''त्पुरुषाय '' पूर्ववक्त्राय नम '' अ वाहयामि ॥ तमीशानमित्यस्येशान ऋषिः शब्दो देवता बृहतीछन्दः कूर्मवाहन ऊर्ध्ववक्त्र आकाशतत्त्वः श्वेतरूपाय ह्रौमूर्ध्ववक्त्रावाहने विनियोगस्त''मीशान''मूर्ध्ववक्त्राय नम '' आ वाहयामि ॥ आ त्वा वहन्त्विति रुद्र-

---

7) MS.IV.9.27:139.17; 10.4:153.12; 14.14:239.12; 17:246.3; 2:217.5; 1:214.6; RV. 1.89.5; MS.IV.12.2:180.16; mss. the first seven times °दिशाधि°; नमः given without sandhi as the mss.

9) mss. °मंत्रितौ न पशु°.

12) mss. सर्वव्यापी°.

13) mss. स्थंष्वनुलिप्ते.

14) the endings had to be redressed; वाहयामि without sandhi; mss. तत्पुरुषे इत्यस्य for तत्पुरुषायेत्यस्य; after ह्रैं the mss. omit पूर्व° unto °त्पुरुषाय; cf. MS. IV.13.5:205.5; 12.2:180.13; II.9.10:130.1; 9.1:119.7. (this is meant, not 13:14: 163.13); RV.1.89.5; MS.II.9.1:119.3.

गायत्रीमष्टौ कृत्वः प्रयुञ्जीत । १४ । रुद्रं ध्यायेत् । १५ । नीलकण्ठं महादेवं कैलासस्थँ सहोमया त्रिनेत्र-
मीश्वरं चैव ध्यात्वा सिद्धिमवाप्नुयात् । १६ । ततो जपमारभेद्"नमस्ते रुद्र मन्यव इति प्रभृतिभिरष्टाभि-
रनुवाकैः । १७ । प्रथमानुवाके गायत्री छन्दस्तिस्रस्त्रिष्टुभस्तिस्रः पङ्क्तयः सप्तानुष्टुभो ऽन्त्यानुवाके
प्रथमा बृहती द्वे त्रिष्टुभौ द्वादशानुष्टुभो द्वे जगत्यौ । १८ ॥ शेषानां नानाछन्दसाँ रुद्रानाँ रुद्रो देवता-
घोर ऋषिः । १९ । शतरुद्रियायाँ सँहितायाँ सर्वपापक्षयार्थे जपे विनियोगः । २० ॥ नमस्ते रुद्र मन्यव
इत्यादिरष्टानुवाकाः । २१ ॥ असंख्याता सहस्राणीति यथालिङ्गँ स्थापनं ध्यात्वा " नमो अस्तु रुद्रेभ्यो
ये दिवीत्यँसदघ्ने ध्यायेद्"नमो अस्तु रुद्रेभ्यो ये अन्तरिक्ष इति नाभिदघ्ने " नमो अस्तु रुद्रेभ्यो ये पृथिव्या-
मिति जानुदघ्ने ध्यायेत् । २२ ॥ अघोरेभ्य इति जपित्वा " यः पथ इति विसर्जयेत् । २३ । अप्रतिरथं
जपन्गृहमाव्रजेत् । २४ । तेनोदकेनात्मानमभिषिञ्चेत् । २५ । द्विपदश्चतुष्पदश्चेतन्नित्यजपस्य विधानम्
। २६ ।

## ॥ इति मानवगृह्यपरिशिष्टे नित्यजपविधानम् ॥१॥

नैमित्तिकस्य पुनर्वक्ष्यामि । १ । पूर्वोक्तेन विधिना स्नात्वा न्यासं कृत्वा शङ्खे उदकं गृहीत्वा यथालाभे
पात्रे वा दूर्वापुष्पा एकोदकमक्षतमीशानाभिमुखं प्रक्षिपेत् । २ । यमुद्दिश्य जपेत्तस्य चैवमेव धीरेकावर्तं
द्विरावर्तं त्रिरावर्तं॰ सप्तावर्तं॰ यद्यारोग्यार्थमष्टावर्तमेकत्रस्थे त्रिरावर्तं नित्ये नैमित्तिके ऽपरिमितम् । ३ ।
यदि रुद्रः प्रजा अभिशामयेतोत्तरपूर्वस्यां दिशि शतरुद्रियं जपँश्चङ्क्रममाणो जपेत् । ४ । एकाहे जप्ते
रोगपापैः प्रमुच्येत । ५ । त्र्यहजप्तेन ब्रह्महत्यादिपापैः कुष्ठादिभ्यः प्रमुच्येत । ६ । अनेन विधिना
न ग्रामे न स्त्रीस्रवणे न श्राद्ध आमन्त्रितो न पशुसंनिधौ न पूर्वापरौ रात्रीं ब्रह्मचारी नान्त्यजदर्शने न
रजस्वलादर्शने न व्यायामं कुर्वीत । ७ । समाप्तेषु यथाकामं प्रार्थयित्वा"घोरेभ्य इति जपित्वा " यः
पथ इति विसर्जयेत् । ८ । तेनोदकेन यजमानमभिषिञ्चेत् । ९ । अप्रतिरथं जपन्गृहमावर्तयेत् । १० ।
ब्राह्मणे यो जपेत्स सर्वान्कामानवाप्नुयात् । ११ । विधिहीने विपरीतँ स्याद्ब्राह्मणस्य यजमानस्य च । १२ ।
॥२॥

शुचिस्नातो जितेन्द्रियो लब्धाशीर्ऋषिछन्दोदेवताविनियोगो न्यासपूर्वकँ रुद्रं जपेत् । १ । अघोर ऋषी
रुद्रो देवता बृहती छन्दः सर्वकर्मणि न्यासे ' विनियोग " आखुं ते रुद्र पशुं करोमीत्यान्तादनुवाकस्येति

17-22) MS.II.9.2-9.

18) mss. °स्त्रिष्टुप् तिस्रः, °नुष्टुप् श्रंत्या°, द्वाभ्यां त्रिष्टुप्, °नुष्टुप् द्वे.

23) MS.II.9.10.

**2** mss. एकदक°.

3) S M2 तमु°; mss. °मेव धिः ॥ एका° (M2 धि), °वर्तं six times, °मेकत्रिस्थ, अपरिमितां.

4) mss. प्रजाभिशा°, °श्चक्रम°.

**3** 2) mss. °त्यंताद° twice, शिखा ॥ अप्रति° (M2 शिखाः), द्वौ, व्यमवस्त्र (corr. uncertain); cf. MS.I.10.4; I.2.9:18.17-19.13; IV.12.1:178.7-15; II.7.15:96.11; IV.12.6:196.12; 14.14:238.12-239.18.

हृदयमि"दं विष्णुर्विचक्रम इत्यान्तादनुवाकस्येति शिरो " ब्रह्मणस्पत इति षड्चं " ब्रह्म जज्ञानं " ब्रह्मा देवानामिति शिखामंप्रतिरथमिति कवचम"ादित्यानामवसा नूतनेनेति द्वे षड्चौ चक्षुषी ' शतरुद्रियमित्यस्त्रम् । २ । एवं न्यासमावाहनविसर्जनान्तम् । ३ । प्रणम्य जपं निवेदयेत् । ४ । पालाशसमिध आज्यप्लुतास्तिलाहुतिभि"र्नमः शंभवे चेति तिसृभिः षड्द्वादश वा जुहुयात् । ५ । स्नानतर्पणजपहोमार्चनरतो यः सँवत्सरे जपेत्

स दशाफलमाप्नोति ब्रह्मघ्नो ऽतिविशुध्यति ।
सुरापः सुवर्णहर्ता गोघ्नो वा वृषलीपतिः ।
मुच्यते सर्वपापेभ्यो रुद्रलोकं स गच्छति । ६ ।

रुद्रजापीहुतं दत्तमनन्त्याय कल्पते । ७ । ॥३॥

**॥ इति मानवगृह्यपरिशिष्टे रुद्रजपविधानँ समाप्तम् ॥**

अथातः प्रवराध्यायँ व्याख्यास्यामः । १ । तदेतद्ब्राह्मणं भवत्यार्षेयँ वृणीते ' बन्धोरेव नैत्यथो संतत्या इति । २ । एकँ वृणीते द्वौ वृणीते त्रीन्वृणीते न चतुरो वृणीते न पञ्चातिप्रवृणीते वा । ३ । इहैके मनुवदित्येवैकार्षेयँ सार्ववर्णिकं प्रदिशन्ति । कस्यो हेतोरिति । मानव्यो हि प्रजा इति । ४ । न देवैर्न मनुष्यैरार्षेयँ वृणीत । ऋषिभिरेवार्षेयँ वृणीते । ५ । यः परार्षेयँ वृणीते परँ यज्ञस्याशीर्गछेदिति श्रुतिरावृश्च्यते वा एष ओषधीभ्यः पशुभ्यः पितृभ्यो यश्च परप्रवरान्प्रवृणीते । ६ । तदेतदन्यत्र ब्राह्मणक्षत्रियाभ्यामितरासां प्रजानामुक्तं भवति । ७ । इत एवोर्ध्वानध्वर्युर्वृणीते पूर्वंवदमुतश्चामुतो ऽर्वाचो होता द्वितवदामन्त्रितवच्च । ८ । भृगूनेवाग्रे व्याख्यास्यामः । ९ । जामदग्न्या वात्स्याः । १० । आनुशातकि वैहृति पैल शौनकायनि जीवन्ति काम्बलोदरि वैहीनरि वैरोहित्य ळेख्यायनि वैशाकि वैश्वानर

3) N S °सर्जनांतान् M2 °सर्जनात्.
5) mss. आज्यप्लुतोस्तिला° (M2 °प्लु°).
6) mss. स्वर्ण°.
For the pravara cf. that of Kātyāyana ed. by *A. Weber*, Verzeichnis der Sanskrit-Handschriften Kön. Bibl. Berlin 1853, pp. 54-60.
1 Cf. Āp.Śr.24.5.
1-8) cf. also Kātyāyana-Laugākṣi (*P. Chentsalrao*, The principles of pravara and gotra 1900, p.21-22).
3-4) N वेहैके M2 S B2 विहैके (r. अपि हैके ?); mss. °त्यवैकार्षेयं, होतोरिति.
6) mss. °रावृश्चते.
7-8) mss. °ति ॥ त.
8) mss. °वोर्ध्वम°.
9) for the lists of names *J. Brough*, The early brahmanical system of gotra and pravara 1953, was helpful; his emendations of the Mānava text from N are often taken over.
10) mss. वत्स्या.
11) for the sake of clearness in 11.8.1-9 the names are mostly printed separately, connected by sandhi only where the mss. do so; the endings are given as in the mss.;

वैरूपाक्षि पौकाशेरळानां (a) पार्णिलि (b) वृकाश्वकाना मुच्चैर्मन्यु सावर्णि वाल्मीकिशेरलानां (c) वैष्टपुरेय पालाक्षि तौलकेशिनाम समृतभागार्तभाग (d) मार्कण्डेय मण्डु माण्डव्य विभाण्डक माण्डूकेयार्वनानां (e) स्फेनमद्भूती स्थौलपिण्डि शैषापत्य शार्कराक्ष (f) देवमतीना मायणाचार्यनाह्वायन गाङ्गायन वैशम्पायन वायव्यायनौदुन्त्यायन सौरयी दार्भि मालायन शार्ङ्गरव गालव चाणूकेय वैकर्णिः शौनकर्णिः शौण्डकर्णिः सांकृत्यैतिशायनानाँ (g) याज्ञेय भ्राष्ट्रेय क्ष्माला अण्ड पारिमण्डलायनालुन्धिः क्रौष्टि सौधकीनां (h) पैङ्गलायन सात्यकायन कौचहस्ति कौवह्लण्डि सांख्यमित्र चान्द्रमित्र चान्द्रमस्यानुलोमि कौटिल्य शौनकायनि कांस्य शारद्वत मौद्गल्यो वाद्याळेह्लेयि निमिथि शाकल्योष्ट्राक्षि वाकायन्यनुमति जैह्मचाशम शोकजिह्वात्मदमनि वाटार किराणि माजानाति काशकृत्स्नौषु स्रुचतो त्रान वैहीकारि शौक्रायणाः (i) शाकृणिः शाकटायना गोष्ठायना गोलायना डाकव्यायना इत्येतेषामविवाहः । ११ । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानौर्व जामदग्न्येति होता जमदग्निवदूर्ववदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । १२ । वैदा निमथिता स्तेषां पञ्चार्षेः प्रवरो भवति । भार्गव च्यावनाप्नवान वैद नैमथितेति होता निमथितवद्विदवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । १३ । आवध्यायना मौञ्जायना स्तेषाँ त्र्यार्षेयः प्रवरो भवति । भार्गव च्यावनावध्येति होतावध्यवच्च्यवनवद्भृगुवदित्यध्वर्युः । १४ । ॥१॥

अथ जमदग्नीनाँ विदाः । १ । प्राचीनयोग्याः पुलस्त्या त्रैदभृताः क्रौञ्चायनाभयजातास्तौगायना आवटाः शार्कणिना भाल्वशयो भार्गवा इत्येतेषामविवाहः । २ । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानेति होताप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । ३ । ब्रौधेया मार्गपथा ग्राम्यायणिरथ नैकसी आपस्तम्बिर्विभीलि कार्णि कार्दमिरार्ष्टिषेण गर्दभ शातपथि इत्येतेषामविवाहः । ४ । तेषां पञ्चार्षेयः प्रवरो भवति । भार्गव च्यावनाप्नवानार्ष्टिषेणानूपेति होतानूपवदृष्टिषेणवदप्नवानवच्च्यवनवद्भृगुवदित्यध्वर्युः । ५ । आपिशायनाः कापिशायनाः द्रौणायनाः खालायनाः अविचक्षा मैत्रेया अथ इय आमोदायना आपि॰ला इत्येतेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव वाध्र्यश्व दैवोदासेति होता दिवोदासवद्वध्र्यश्ववद्भृगुवदित्यध्वर्युः । ७ । वैतहव्य यास्क माथून मौक जीवन्त्यायनो अथ भागलेय

a) mss. पैलु, जैमंतिः S N B2 कार्ष्णोदरि त्रैहीत्राहिमति M2 कृष्णयोदरि त्रैहीग्राहीत्र हीमति; mss. वैरोहे, वैश्वामर वैरुपाक्षि; b) mss. पार्णालि; c) mss. °मुञ्चितमना; d) mss. तैलककेशिनाम°; f) mss. स्थोलपिंड, शार्कराक्षं; g) M2 °णाचार्यना°; mss. दाल्भी, शांकरव काळत्र; N चालूकापो S चालूकपो M2 चालुकपो B2 चालूकपौ; mss. सांगित्वात्वागिशायनानाँ (M2 °त्वावा° B2 °त्वामिशा°); h) mss. याग्नेय; i) mss. कौटली, शारद्रात, शाकल्याष्ट्राक्षो; S M2 B2 किसराणि; S N B2 काश्यकृत्स्नौषु M2 कास्यकृष्णौषु; M2 स्रुवतो S स्रुन्वतो.

12) °दप्नवानव° not in the mss.

2 Cf. Āp.Śr.24.5, 6.

3) च्यवनवत् only B2.

4) mss. माद्रपथा ग्राम्याणी, अपस्तंबी, गर्भ.

5) mss. दार्ष्टिषेणवत् ; °च्च्यवनव° not in the mss.

6) mss. द्रोणायना: खळायनाः, आपिशाळा.

8) mss. मौद्र त्वीवतायनो अथ लेभागली भागविते कौशातीपि वृत्ताशकि, कौरिचि दौर्गवितं.

भागविज्ञेय कौशाम्बेय वृकाश्वकि मादाहि गौरिक्षित दैर्घ्यचित वालेय पाञ्चधना पौष्णावता इत्येतेषामविवाहः । ८ । तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव वैतहव्य सावेदसेति होता सवेदोवद्वीतहव्यवद्भृगुवदित्यध्वर्युः । ९ । वत्सपुरोधसानां त्र्यार्षेयः प्रवरो भवति । भार्गव वात्स पौरोधसेति होता पुरोधसवद्वत्सवद्भृगुवदित्यध्वर्युः । १० । वेदविश्वज्योतिषास्तेषां त्र्यार्षेयः प्रवरो भवति । भार्गव वेद विश्वज्योतिषेति होता विश्वज्योतिषवद्वेदवद्भृगुवदित्यध्वर्युः । ११ । पार्थवैन्यानां त्र्यार्षेयः प्रवरो भवति । भार्गव वैन्य पार्थेति होता पृथुवद्वेनवद्भृगुवदित्यध्वर्युः । १२ । गार्त्समदाः शुनकाः । १३ । यज्ञवचा सौकरिः कार्दमायना राजबाधव्याश्चौक्षाश्चोराः श्रोत्रियाः प्रत्यरा शुनका इत्येतेषामविवाहः । १४ । तेषामेकार्षेयः प्रवरो भवति । गार्त्समदेति होता गृत्समदवदित्यध्वर्युर्यदि वा द्व्यार्षेयो भार्गव गार्त्समदेति होता गृत्समदवद्भृगुवदित्यध्वर्युः । १५ । ॥२॥

अङ्गिरसो व्याख्यास्यामः । १ । औचथ्या गौतमाः । २ । तौडेया अभिजित वोघाय नैकाक्ष राहूगण्याः क्षैरकटैकस्तमराणां कैराति सारलोपानां करोति काशपारीणां पौष्पिण्ड भागल वडौडवानामुपबिन्दु मान्थरेषाणां रौहिणायना अमलका क्रोलयिमाः क्रौंचाः क्रोष्टा आरुणयः पार्थिवा सौदामिनि काचाक्ष कौरल्या अक्ष अपादपक्ष वासमूलि वैंशमुल्मिँ शपितृ वामपुष्पिः सौष्य सौक्ष्मायण कौडल्या इत्येतेषामविवाहः । ३ । तेषां पञ्चार्षेयः प्रवरो भवत्याङ्गिरसौचथ्य गौतमौशिज काक्षीवतेति होता कक्षीवद्वदुशिजवद्गोतमवदुचथ्यवदङ्गिरोवदित्यध्वर्युः । ४ । आयास्यानां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसायास्य गौतमेति होता गोतमवदयास्यवदङ्गिरोवदित्यध्वर्युः । ५ । अथात्रेयायणि माधूर्कणि वाल्कलि मौपिष्टचाग्निवेश्यानां शालाथल वाराह शौङ्ग कृपणपर्ण प्रावाहणेयानां माश्लाय व्यायोगिछंदात खारिग्रीवीणामैषुमति शाद्य कावकिकाविकायननानां नैतुन्दि लिर वैधंकीनां वैधकीकया चरातकि मनहालानां सौवस्तम्बि तौल्वलि पौपुयावद्दिशीनां शाल वाळौह देवमत हरिकर्ण द्राङ्गय चौचेय कौमुदगन्धि खारिणादि राजस्तम्बि मामस्तम्बि सोमस्तम्बि औदमेघि गाण्डकि लौहितकि काण्डक धाना कुलक सात्यमुग्रि शैवयथ भारद्वाज इत्येतेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाजेति होता भरद्वाज-

9) mss. सावेधसेति. सावेधसवत् वीतहव्य°.

10) वत्सपुरो° unto भार्गव not in the mss.: mss. वत्स पुरोधसेति.

12) mss. प्रार्थश्वेतानां, वैण्य पार्थिवेति. °द्वेणुवत्.

13) mss. गार्त्समदाः.

14) mss. सुकरी कादमायना. °श्चोत्राः°, श्रोत्र्या प्रत्यराप् तेनुशका.

15) mss. गार्त्स°, गृत्स°. गार्त्स°, गृत्स°.

3 Cf. Āp.Śr.24 6, 7.

2) mss औतथ्या.

3) mss. तौदेया, राहूकण्या, °मुपविंदु मांथरेयानां यना (only), अरुणयः पाथिवा, वँशमूलि; M2 S °गुल्मिँ; mss. षँशुपष्पिः; सौष्य not B2.

4) S N B2 त्र्यार्षेयः M2 °मार्षेयः; M2 N B2 औतथ्य S औत; mss. कक्षीवनवद्°; S N B2 गौतमवत् उदगिरोवदित्य° M2 गौतमवदंगिरोवदित्य°.

5) mss. आयस्यायनानां.

6) mss. अथयात्रेयपाणि, शालाल, शौंगं; खारि° not in the mss.; mss. °मैषुमद्द, नैवंदि, तोल्वलि, राजस्तनी; S N B2 सात्यमुमु (M2 °ग्र).

वद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । ७ । काणायणाः कैवलयो ऽथ वत्सतरायणाः क्रौण्डायना वार्द्धनयो ऽथो वाँशायनाश्च ये भ्राष्ट्रकृद्भ्राष्ट्रबिन्दुश्चैन्द्रालि सायकायनः कोली च क्रीका नीसांत्वकृत्स्नापुरावट लावकि भालूविरुपमर्कटि प्रोत्सङ्गिः श्यामायन पैङ्गलायन सांभरभामत्...इत्येतेषामविवाहः । ८ । तेषां पञ्चार्षेयः प्रवरो भवत्याङ्गिरस बार्हस्पत्य भारद्वाज शैन्य गार्ग्येति होता गर्गवच्छिनिवद्भरद्वाजवद्बृहस्पति-वदङ्गिरोवदित्यध्वर्युः । ९ । तेतिररि कविभूमो गर्गा इत्येतेषामविवाहः । १० । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस शैन्य गार्ग्येति होता गर्गवच्छिनिवदङ्गिरोवदित्यध्वर्युः । ११ । ॥३॥

कपिस्तरः स्वस्तितरो बिन्दुर्दण्डिः शक्तिः पतञ्जलिर्भोजव ऽरुधश्चैवद्विशाली शीतकिः अर्द्धं राज-केशो चौच्चुटी शांशापि कलशीकण्ठः कारीरयो वान्यायना वामध्यायनाः काप्याः कवय इत्येतेषाम-विवाहः । १ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसामहीयौरुक्षयेति होतोरुक्षयवदमहीयवदङ्गिरोवदित्य-ध्वर्युः । २ । संकृति पौतिमाषि तण्डि शम्भुः शैवपायनानां जानकि तेतैल्वकाद्व्यलातव्यार्षभि लांगंधि चारायणी इत्येतेषामविवाहः । ३ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस सांकृत्य गौरिवीतेति होता गौरि-वीतिवत्संकृतिवदङ्गिरोवदित्यध्वर्युः । ४ । हरितः कौत्स शङ्ख दर्भ पैङ्ग भैमगव माद्रकारि गाणकारि हास्तिदासि लावेरणि कालशीते इत्येतेषामविवाहः । ५ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसाम्बरीष यौवनाश्वेति होता युवनाश्ववदम्बरीषवदङ्गिरोवदित्यध्वर्युः । ६ । रुरुंगाक्यायना डश्च तृतीयः शाकटा-यनः चतुर्थो गर्दभो नारी ततः प्राकार सौवार मर्कटो रमणः शणः कण्वा मार्कटयो रामणेयाः शाणायना इत्येतेषामविवाहः । ७ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरसाजमीढ काण्वेति होता कण्ववदजमीढव-दङ्गिरोवदित्यध्वर्युः । ८ । अथ वैष्णुवृद्धि शठमर्षण छतृण पोतृण गोतृण बादरायणा इत्येतेषामविवाहः । ९ । तेषां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस पौरुकुत्स त्रासदस्यवेति होता त्रसदस्युवत्पुरुकुत्सवदङ्गिरोवदि-त्यध्वर्युः । १० । रथीतराणां त्र्यार्षेयः प्रवरो भवत्याङ्गिरस वैरूप पार्षदश्वेति होता पृषदश्ववद्विरूपव-

8) mss. कावलयो, वँशायना°, भ्राष्ट्रुक-कद्भ्रवृधी (N °कभ्रद्रदी) चेंद्राधिः, °रूपमर्कटि; M2 पैलुकायन N B2 यैलुकायन S यैकुलायन.

8-9) इत्येतेषाम° unto भारद्वाज not in the mss.; mss. शेन्य.

10) mss. गर्ग.

4 Cf. Āp.Śr.24.6-8.

1) M2 S °वंडी N B2 °दंडी; N B2 °द्शिली; S जर्द्धं; mss. पादकेशी, कलशीकटं.

2) mss. °सामह्यवोरुक्षयमेति वदमह्यवदं-गिरसवदित्य°; Kāty. (A. Weber) सामहीयव°.

3) mss. पौतिपौतिमाखि (B2 पौतिमाखि), जानुकी, °व्यार्षिभि.

4) mss. सांकृति गौरीवितेति, गौरीवित-वत्: mss. here and sū.6-17 अंगिरसवदि°.

5) S N B2 पौंगं M2 पोगं; mss. गानकारि; N हादायि S B2 हा-दायि M2 हा दित्या.

7) mss. तृतीयः शायनश्च°; N प्राकीर; mss. मर्कडो रामणः; S N B2 मार्कटायो M2 मार्कंडायो.

9) mss. वैष्ण°; S B2 शठमद्रण N शटद्रुण M2 शटश्चद्रुण; mss. वदोतृणा for बादरायणा.

10) mss. त्रासादस्येति, त्रसदस्यव°.

11) mss. रथे°.

दङ्गिरोवदित्यध्वर्युः । ११ । रषाभगानां त्र्यार्षेयः प्रवरो भवत्यांङ्गिरस वामदेव्य गौतमेति होता गोतमवद्वामदेववदङ्गिरोवदित्यध्वर्युः । १२ । हिरण्यगर्भ छत्रकयो मुद्गला इत्येतेषामविवाहः । १३ । तेषां त्र्यार्षेयः प्रवरो भवत्यांङ्गिरस भार्म्यश्व मौद्गल्येति होता मुद्गऽवद्भृम्यश्ववदङ्गिरोवदित्यध्वर्युः । १४ । ऋक्षभरद्वाजानां पञ्चार्षेयः प्रवरो भवत्यांङ्गिरस बार्हस्पत्य भारद्वाज वान्दन मातवचसेति होता मतवचोवद्वन्दवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । १५ । अथ यान्येतानि द्व्यामुष्यायणानि कुलानि भवन्ति यथैतच्छौङ्गशैशिरयोर्भरद्वाजाः शौङ्गाः कताः शैशिरय इत्येतेषामविवाहः । १६ । तेषां पञ्चार्षेयः प्रवरो भवत्यांङ्गिरस बार्हस्पत्य भारद्वाज शौङ्ग शैशिरेति होता शिशिरवच्छुङ्गवद्भरद्वाजवद्बृहस्पतिवदङ्गिरोवदित्यध्वर्युः । १७ । ॥४॥

विश्वामित्रान्व्याख्यास्यामः । १ । वैश्वामित्रा देवराताश्चैकित गालव वारतन्तवाः कुशिका वातण्डश्च शलङ्का आश्वावतायनाः श्यामायना याज्ञवल्क्या जाबालाः सैन्धवायना बाभ्रव्या यश्च वार्षीय मासित्या अथ सौश्रुता औधेप्राः सौरथायः काजालियाजय आर्जुनाक्षि पार्योदरि सुमन्तु जैमिनि खरवाखलि इत्येतेषामविवाहः । २ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र दैवरातौदलेति होतोदलवद्देवरातवद्विश्वामित्रवदित्यध्वर्युः । ३ । देवश्रवसा देवतरसा श्रौमत कामकायना इत्येतेषामविवाहः । ४ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र दैवश्रवस दैवतरसेति होता देवतरोवद्देवश्रवोवद्विश्वामित्रवदित्यध्वर्युः । ५ । त्रीण्येतानि रैणवानि कुलानि भवन्ति कथ्यका श्वोदूरण श्वोदूहयश्चेयेत्तेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र काथक काथ्यकेति होता कथ्यकवत्काथवद्विश्वामित्रवदित्यध्वर्युः । ७ । अथ कमन्दक धनंजय पिळकट पार्थिव बन्धल पाणिनानामित्येतेषामविवाहः । ८ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र माधुछन्दसाघमर्षणेति होताघमर्षणवन्मधुछन्दोवद्विश्वामित्रवदित्यध्वर्युः । ९ । अजा माधुछन्दसा मार्गमित्रा इत्येतेषामविवाहः । १० । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र माधुछन्दसाज्येति होताजवन्मधुछन्दोवद्विश्वामित्रवदित्यध्वर्युः । ११ । आश्मरथ्याः कामलायतिनो बन्धुल कौशिकेतिहोता इत्येतेषामविवाहः । १२ । तेषां द्व्यार्षेयः प्रवरो भवति । वैश्वामित्राष्टकेति होताष्टकवाद्विश्वामित्रवदित्यध्वर्युः । १३ । पूरणा वारिधापयन्ता इत्येतेषामविवाहः । १४ । तेषां द्व्यार्षेयः प्रवरो भवति ।

---

12) Kāty. आर्षभागीनां; वामदेववत् not in the mss.

15) mss. रुक्ष°, मातृ°, मातृ°.

16) S N B2 °शैशरीयो M2 °शैशरीयां; mss. शौंगिः.

17) mss. शौंगवत्.

5 Cf. Āp.Śr.24.9.

2) mss. °श्चैगित, ह्वतडश्च षलकुवाचो आश्वातायनाः शामायना, वाभ्रव्या, स्यैश्रुता, पार्यादरि; N खखाखलि.

4) mss. श्रौमत unto °दित्य° in sū. 19 not in M2; mss. सौमुक कामुककामुकायना.

5) mss. देव°, देव°.

6) mss. रौरवाणि.

7) thus the mss.

8) N B2 पार्थिर्थव S पा...व.

10) mss. आज.

11) mss. °साजितेति होता अजिवत्.

12-13) °होता cf. Kāty. घोट°; probably there is a hiatus, cf. Kāty. the अष्टकालीहितानां.

14) mss. पौरिणीः परिधावयंता.

15) mss. पौरिणेति, पौरिणव°.

वैश्वामित्र पौरणेति होता पूरणवद्विश्वामित्रवदित्यध्वर्युः । १५ । गाथिनो रैणवास्तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र गाथिन रैणवेति होता रेणुवद्गाथिवद्विश्वामित्रवदित्यध्वर्युः । १६ । हिरण्यरेतसानां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र हिरण्य रेतसेति होता रेतसवद्धिरण्यवद्विश्वामित्रवदित्यध्वर्युः । १७ । सुवर्णरेतसानां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र सौवर्ण रेतसेति होता रेतसवत्सुवर्णवद्विश्वामित्रवदित्यध्वर्युः । १८ । कपोतरेतसानां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र कापोत रेतसेति होता रेतसवत्कपोतवद्विश्वामित्रवदित्यध्वर्युः । १९ । घृतकौशिकानां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र घार्त कौशिकेति होता कुशिकवद्घृतवद्विश्वामित्रवदित्यध्वर्युः । २० । शाठरमाठराणां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र शाठर माठरेति होता मठरवच्छठरवद्विश्वामित्रवदित्यध्वर्युः । २१ । अथ साहुल माहुल उहल कोहल जंविल शाविल शातिल फाहुल यामिल यादधि शारधि इत्येतेषामविवाहः । २२ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र साहुल माहुलेति होता माहुलवत्साहुलवद्विश्वामित्रवदित्यध्वर्युः । २३ । अथोदुम्बरायणिः शैशिर तैकायन्ति तारुक्ष्यायणि वेलायन वेदायन मौदायन चौदायन गङ्गायन कात्यायन कात्यात्कील कारी लाचकीत्येतेषामविवाहः । २४ । तेषां त्र्यार्षेयः प्रवरो भवति । वैश्वामित्र कात्यात्कीलेति होतात्कीलवत्कतवद्विश्वामित्रवदित्यध्वर्युः । २५ । ।।५।।

वसिष्ठान्व्याख्यास्यामः । १ । वसिष्ठानामेकार्षेयः प्रवरो भवति येऽन्य उपमन्युपराशरेभ्यः कुण्डिनेभ्यश्च । २ । वैद्याघ्रपद्या औपगवा वैग्रयः सासामलायनाः कपिष्ठला औड्लोमाश्वलायना वैटारका गोपायना बौधायनाश्चूडाकव्यायना अथ वाह्याकी जातूकर्ण्या हरितयोऽथो वाकुरयश्च ये आयःस्थूणाः शुचिवृक्षा लौमायन्य बह्मवादि बह्मकृदेय बह्मविदेय बह्मविलेयः स्वस्तिकरः काण्ठेविद्धि मण्डि चौलि चौलिका कालोहली सौमनसायणिरावणि चौलि गौरिश्रवसार्जुनाक्षा इत्येतेषामविवाहः । ३ । तेषामेकार्षेयः प्रवरो भवति । वासिष्ठेति होता वसिष्ठवदित्यध्वर्युः । ४ । उपमन्यून्व्याख्यास्यामः । ५ । शैलालयो महाकर्णाः कौरव्या अथ त्रैवर्णाः कपिञ्जला दावलशिखी भागवित्तायनाश्च ये डोकव्यायना औपालखी

---

16) mss. रेणेवा°, रेणवत् गाथिनवत् .

17-20) Mānava forms three-ṛṣi pravaras with the aid of *retas* and *ghṛta*, whereas Kāty. has two-ṛṣi pravaras.

18) mss. सुवर्ण.

19) mss. कपोरेतसानां, कपोत.

20) mss. °कौशिनां; S N B2 कोशिकवत् M2 कौशिकवत् .

21) mss. mostly °ट° for °ठ°, माटरवत् शाटरवत् .

22) शातिल not S.

24) mss. शशिर तैगायन तारुक्षायन, कात्याच्चैल.

25) mss. कात्याच्चैलेति होतातात्चिलवत् कात्यवत् .

6 Cf. Āp.Śr.24.10.

2) thus also Hir.Śr.

3) N B2 वैघाघ्र°; mss. श्रोपगवा, श्रौँटलोमाश्वायन (M2 श्रोट°), गोगेयना, पांकरयःश्व ये (N B2 यां°) ; S N B2 अयस्थूणाः M2 अयःस्थुणाः ; mss. शुचिःवृक्षो क्लोमा°, कंटे°, कौरस्रवसा°.

5) mss. उपमन्यु.

6) mss. त्रैपर्णाः N B2 °शीखी; mss. भागवीतायेना°; M2 कार्षुरि° ; mss. कौनारायणा, °रौद्राहिमानिपा.

वावाल्कलयः शान्तातपाः कार्डुरिराकत्मावेया अथो लवयश्च ये योर्थ अथ सछाग्यायन आलव्यायना कौमारायणाः कौलोदकिरौद्गाहमानयः एवाकरि लाक्ष्मणेयाः गाण्डूलवोद्धकि सांख्यायना औपमन्यवाः कौण्डोदरि कैर्दभि नाहकि बाहवि धौमावत मौञ्जायन शशकायना इत्येतेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठाभरद्वसवैन्द्रप्रमदेति होतेन्द्रप्रमदवदाभरद्वसुवद्वसिष्ठवदित्यध्वर्युः । ७ ।

प्रारोह्यो वैकलयः प्लाक्षयः कौमुदादयः ।
हार्यश्विरेषां पञ्चम एते रक्ताः पराशराः ॥
काण्डूशयो वाहतया जांजयो मैमनायनाः ।
गोपालिरेषां पञ्चम एते नीलाः पराशराः ॥
कार्ष्णाजिनाः कपिश्रोढाः कार्कयः शान्तातपाः ।
पुष्करमादिरेषां पञ्चम एते कृष्णाः पराशराः ॥
आविष्टायना वार्ष्णायिना श्मामेय लोकायश्च ।
वैक्षिरेषां पञ्चम एते गौराः पराशराः ॥
खाल्लायना वार्षायणि पूर्णयो बिल्वयूपयः ।
नार्णिरेषां पञ्चम एते शुक्लाः पराशराः ॥

एते त्रिंशत्पराशरा इत्येतेषामविवाहः । ८ । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठ शाक्त्य पाराशर्येति होता पराशरवच्छक्तिवद्वसिष्ठवदित्यध्वर्युः । ९ । औपस्वस्तिः स्वस्तयश्चालोह्यायनाश्च ये माध्यंदिना आक्षितयः पैप्पलादि दिवंकर्षी कुण्डिनो मित्रावरुणा इत्येतेषामविवाहः । १० । तेषां त्र्यार्षेयः प्रवरो भवति । वासिष्ठ कौण्डिन्य मैत्रावरुणेति होता मित्रावरुणवत्कुण्डिनवद्वसिष्ठवदित्यध्वर्युः । ११ । ॥६॥

कश्यपान्व्याख्यास्यामः । १ । आग्रायणाश्चाग्रायणा ग्रैवायणा वृषगणा सोमभूता शोनव्या मौषकिरिटिकायना औदव्रजिर्माठरश्च कैजालि अथ लाक्ष्मणयो वैधकयः श्लोकत्या यश्च भौमनि देवतया गोमेयादा अथोत्थास्वयंस्वाप धूम्रायणाः सुबभ्रुश्चाथोष्र्यायणा काष्यायणा स्वारोयणा डाकदायणाः शत्रुभयो भिर्योगादिः शरकाः काष्टायणाः शाकादः शालिहोत्राश्चायमाजाननाथाः कुवमिमाः चक्रिदाः दाक्षपाणयो मारीत्रयो माषशराविरग्निशर्मायणाश्च ये हास्तिदामि यैल्मैलितान्यकृति कौषीनकी मौमिश्री काण्डा

1 a) mss. प्लाहाह्यो (M2 °यो) वैधुकयः, हरिश्चरे°; b) mss. कांडुश्यो; S N B2 वाहतयां; mss. नालाः; c) S N B2 शातातपाः; d) M2 कार्ष्णायना; e) N B2 खाखाल्लायना; for the sixth group cf. Baudh.Śr. pravara 48.

9) mss. शक्ति.

10) mss. पिप्पलादि; S दिवंकष.

7 Cf. Āp.Śr.24.9, 10.

1) N S M2 काश्य°.

2) N S M2 °ग्रगणा°; N S B2 °श्वाग्रायणा; S सौमभूत; mss. मौषिकियेटिकायना (M2 °कीये°) औदवज्री (M2 औद°) माटर°, लाक्ष्मणीयो (M2 °णियो); N सुवङ्ग°; S N B2 शत्रुभयो; mss. पद्मपाणयः, माषससरा अग्नि°, हास्तिदायि; M2 यैलि°; mss. कैषीतकी; S N B2 कांडाडा, हास्ति°; mss. पैठानस (N पैढा°); M2 सौत्स° M2 S °मोथ; S सर्थाग्रा; M2 कडुक.

वायनि वारुणि वैवरी शैवरयो जिघान हस्तिकाश्यप पैठीनम कैंकसेय प्रतिषेय सौश्यवसमोय सर्यागना वसमोप दार्भः पालशायिनः कदुक भैक्षि इत्येतेषामविवाहः । २ । तेषां त्र्यार्षेयः प्रवरो भवति । काश्यपावत्सार नैध्रुवेति होता निध्रुववदवत्सारवत्कश्यपवदित्यध्वर्युः । ३ । आनष्टयो भागुरयः श्येनपो ऽथाजापालयः शैरी षिरौदवाही च शैरंघ्रि औपशवीयः सौम्यकृकोयुषी कालाशि लौकाक्ष इदंध इत्येतेषामविवाहः । ४ । तेषां त्र्यार्षेयः प्रवरो भवति । काश्यपावत्सार वासिष्ठेति होता वसिष्ठवदवत्सारवत्कश्यपवदित्यध्वर्युः । ५ । शंभृजा जलिभ्रश्वोभौ भूपपुरोध जलंधर मुजो मयूरः पर्यगोष्ठो गर्दभीमुखो हिरण्यवाहुरादित्यवर्णः सौदामिलुभो शौशिल गोभिलो कुहलो वृकखण्डश्चेत्येते गुकुरण्टयः उत्तरः शान्तिकेतुश्चेत्येते देवजानयः वेदायन जाङ्गरायण शत्रूहायन औदमेघास्तृणवम्त शण्डिलो महाका भल्लकश्च वायुकीस्तार्कलिस्तेत्रृचोद्बुदि सौप्मिणेया इत्येतेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवति । काश्यपासित दैवलेति होता शाण्डिलासित दैवलेति वा देवलवदसितवत्कश्यपवदित्यध्वर्युर्देवलवदसितवच्छण्डिलवदिति वा । ७ । ॥७॥

अत्रीन्व्याख्यास्यामः । १ । कार्मर्यायणि शंकिलयंश्चाद्यो शाखारथयश्च ये आघ्रायणा वामरथ्या गोपवनास्तार्णबिन्दव औद्दालकी शौनकर्ण्यथो वालूतपयश्च ये गौरग्रीविः कैरन्दिश्च चैत्रायणाश्च ये नाकर्ष्ययंति पौरिद्यथो वत्साथपाश्च ये गलि छागलि भार्गलि वाहुदन्त्येन्द्रेय दौछायात्रेयः सौद्धूतकी वर्षाणकि कृष्ण छन्दोगीत्येतेषामविवाहः । २ । तेषां त्र्यार्षेयः प्रवरो भवत्यात्रेयार्चनानस श्यावाश्वेति होता श्यावाश्ववदर्चनानसवदत्रिवदित्यध्वर्युः । ३ । प्लाक्षिर्दाक्षिर्व्यालिः पौर्णविरौर्णवापि शिलंविनो मौञ्जकेशी भलन्दनो वैजवापि शिरीपश्च मैयण्यो दूतिः सौपुष्पिः सामपुष्पिः सोमपुष्पिः हिरण्यपुष्पिश्चन्द्रिकर्द्रकि काकशीर्षि काकालशीत्येतेषामविवाहः । ४ । तेषां त्र्यार्षेयः प्रवरो भवत्यात्रेय गाविष्ठिर पौर्वातिथेति होता पूर्वातिथिवद्गविष्ठिरवदत्रिवदित्यध्वर्युः । ५ । पुत्रिकापुत्रान्व्याख्यास्यामः । ६ । हालेया वालेया दौभेया शौभ्रेया कौभ्रेया वामरथ्य गोपवन विष्टिर पुत्रिकापुत्रा इत्येतेषामविवाहः । ७ । तेषां त्र्यार्षेयः प्रवरो भवत्यात्रेय गाविष्ठिर पौत्रिकेति होता पुत्रिकावद्गविष्ठिरवदत्रिवदित्यध्वर्युः । ८ । ॥८॥

---

3) mss. निध्रुववत् .

4) mss. भाग्ररयः ; N S B2 सौम्यल-कोयुषी; mss. लोकाक्षस्व.

6) mss. गर्धभिमुखः, कुशलो वृषकंद°; N B2 गुकुरंठयः ; mss. औदमेध्या°, छंडिल्यो; M2 भलुक° S भिल्लक° B2 भल्लुक°.

7) mss. देवलेति, शांदिल्यासित देवलेति, छांदिल्यव°.

8 Cf. Āp.Śr.24.8.

2) mss. गोयावना° (S गौ°, M2 °पा°); mss. गोरग्रीवी कौरिंदाष्यो; N B2 दौत्थायात्रेयः .

3) N S °वाश्येति M2 B2 °वास्येति; mss. °वास्यवत् .

4) mss. शिरीषस्य.

7) mss. हाळोया वलेया (M2 °लोया).

8) mss. पुत्रकवत् .

अगस्तीन्व्याख्यास्यामः । १ । कुकूल उनक बलका लांवकायन शालंकायन धारिणि धौरणी सौधन्वा सौकृत्य कल्माषदण्डिरपौतुरौतुरायणानां शौभ्यायिना गोव्याधिला शिलाद्य शैवपथार्बुदानामैदिलमा एवयायदूता...इत्येतेषामविवाहः । २ । तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य दार्ढच्युतैध्मवाहेति हातेध्मवाहवद्दृढच्युतवदगस्तिवदित्यध्वर्युः । ३ । अक्र शक्र शुक्र जात्ये हैमौदकीत्येतेषामविवाहः । ४ । तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य माहेन्द्र मायोभुवेति होता मयोभुववन्महेन्द्रवदगस्तिवदित्यध्वर्युः । ५ । प्राचीनप्रवणाः कायेयाः अक्र शुक्र शुद्ध हँस चाष भाष हैमवर्च हिमोदकाः इत्येतेषामविवाहः । ६ । तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य हैमवर्च हैमोदकेति होता हिमोदकवद्धिमवर्चवदगस्तिवदित्यध्वर्युः । ७ । अक्रि चक्रि अर्चि चर्चि हिमोदकि पारिणका इत्येतेषामविवाहः । ८ । तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य पिनायक पारिणकेति होता पारिणकवत्पिनायकवदगस्तिवदित्यध्वर्युः । ९ । नंदि विमलि धिमलि मिमीतकि पिनायकि सायकि इत्येतेषामविवाहः । १० । तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य पिनायक सायकेति होता सायकवत्पिनायकवदगस्तिवदित्यध्वर्युः । ११ । मध्यमपूरणास्तेषां त्र्यार्षेयः प्रवरो भवत्यागस्त्य माध्यम पौरणेति होता पूरणवन्मध्यमवदगस्तिवदित्यध्वर्युः । १२ । ॥९॥

व्याख्याताः प्रवराः । वैकृतानि व्याख्यास्यामः । १ । अथ द्वितय्यो ब्राह्मणानां समुत्पत्तयो भवन्ति । तेषां समुत्पत्तिं प्रतिपत्तिं च व्याख्यास्यामः । २ । येषां पुरुषतः प्रजोत्पत्तिरविछिन्ना भवति ते सँहित-

---

**9** Cf. Āp.Śr.24.10. The 5th of the Agastis is given in the mss at the end of the 8th khaṇḍa, but it is repeated afterwards, so it is left out in the text the first time. The 1st and 2d Agastis form the 9th khaṇḍa. The 10th khaṇḍa begins briefly with the *vaikṛtāni*, then follow the 3d until the 6th Agastis, then the greater part of the *vaikṛtāni*. In the text all the Agastis are given in the 9th khaṇḍa, the whole *vaikṛtāni* in the 10th khaṇḍa.

1) not in the mss.

2) mss. धारणी, कल्पासतुंडर° (N B2 कल्या°); S N B2 °नुरायणानाँ; M2 °मैदिष्टमा.

2-3) some names missing in the mss. and इत्ये° unto भवति.

4) according to Kāty. these names belong to the pravara of sū.12; M2 हैमो°.

5) after sū.5 there follows in the mss. the beginning of the *vaikṛtāni* unto द्यामुष्यायणा भवन्ति.

6) M2 कायथा N B2 कापेयाः S कापयाः; N S शुध् हस M2 शुद्ध हस B2 शुधूस; mss. हौभवर्चं (M2 हौम°).

7) mss. आगस्त्यै हैमर्चि हिमोदति होता मोदकवत् हिमवर्चवत् अगस्ति ध्वयुः.

9) N S B2 पारीणकेति; mss पिनायकिवत्; Kāty. पैनाक पारिणकेति, पारीणवत् पैनाकवद्.

10-11) names and pravara occur twice; the 1st time मिमीतकिं is omitted; the 2d time धिमलि is read as M2 कुचीलि N लिचिलि B2 चिलि S लिचिकि; the 2d time पिनायकि unto आगस्त्य is omitted.

11) mss. पिनायकिं, 1) पीनायकीवत् (N पि°) 2) पिनाकवत्; Kāty. पैनाक, पिनाकवद्.

12) mss. पूरिणेति, पूरिणवत्; Kāty. पौरिणेति, पूरणवन्; cf. 5.14-15.

**10** Cf. Kāty.-Laugākṣi in *J. Brough* p.212 seq.

1) व्याख्याताः not in the mss.; mss. प्रवरो.

2) प्रतिपत्तिं not in the mss.

कुलीनाः । ३ । ये सप्त भूयः पञ्चपुरुषँ वा योनिश्रुतिवृत्तशीलसंपन्ना ऋतवतामृतवन्तस्ते पितृमन्तः पैतृमत्यार्षेया भवन्त्यार्त्विजीनाम् । ४ । अथ दत्तकक्रीतककृतिमपुत्रिकापुत्राः परपरिग्रहेण नानार्षेया ये जाता द्व्यामुष्यायणा भवन्ति यथैतच्छौङ्गशैशिरीणां भरद्वाजौदमेघीनाँ लौकाक्षीनां च यानि चान्यान्येवँ समुत्पत्तीनि कुलानि भवन्ति । ५ । तेषां तथैव प्रवराः स्यु र्द्विप्रवरसंनिपाते पूर्वः प्रवर उत्पादयितुरुत्तरः परिग्रहीतुः । ६ । अपि वा त्रयो ऽन्ये त्रयो ऽन्ये । तन्न तथा कुर्या त्तस्मात्त्रीनेव पञ्च वा प्रवृणीते । ७ । अथ यदि पितृव्येण ज्ञातिनैकार्षेयेण ये जाताः सँहितकुलीनाः तेषां परिग्रहीतुरेव भवति । ८ । अथ यद्येषाँ स्वासु भार्यास्वपत्यं न स्याद्रिक्थँ हरेयुः पिण्डं चैभ्यस्त्रिपुरुषं दद्यु र्यदि स्यादुभाभ्यामेव दद्युरित्याचार्यवचनम् । ९ । द्वे कुर्यादेकश्राद्धे कुर्याद्वा पृथगनुदिश्यैकपिण्डे द्वावनुकीर्तयेत्परिग्रहीतारं चोत्पादयितारं चा तृतीयात्पुरुषात् । १० । आर्षेयस्यापरिज्ञानादेतेषामेव प्रवराणामाद्यं प्रवरं प्रवृणीते । परिप्रश्नेन वा यँ यस्योपपन्नं मन्येत तं तस्य कुर्यात् । ११ । पुरोहितप्रवरो वा स्यादाचार्यप्रवरो वा राजन्य । एतेनैव तु प्रवरेण वैश्यप्रवरो व्याख्यातः । १२ । यदि सार्ष्टिं प्रवृणीते मानवैड पौरूरवसेति होता पुरूरवोवदिडावन्मनुवदित्यध्वर्युः । १३ । सार्ष्टिं प्रवृणीयुः ... । १४ । पुरोहितप्रवरावेव राजन्यवैश्यौ स्याताम् । १५ । धनँ यशस्यमायुष्यमृषीणां कीर्तनँ शुभम् । १६ । दिव्यँ वर्षसहस्रमेकैकस्यर्षेरातिथ्यं कृतं भवति यः प्रवराध्यायमधीते । १७ । मैथुनगोत्रालाभ ऋष्यन्तराणामविरोधीति । १८ । एष महाञ्शकुनिः समाप्तो वेदानां मूलं धर्मस्य चाग्रँ रुद्रैः समधिकँ वृद्धँ वृद्धैः । १९ । नापुत्राय नाशिष्याय नासँवत्सरोषिताय दद्यात् । २० । सर्वेषां पङ्क्तिपावनानामुपरिष्टाद्भवति यः प्रवराध्यायमधीते यः प्रवराध्यायमधीत इति । २१ । ॥१०॥

**॥ इति मैत्रायणीशाखायां प्रवराध्यायः समाप्तः ॥**

अथातः श्राद्धकल्पँ व्याख्यास्यामः । १ । अग्निमुपसमाधाय निर्मन्थ्य चासगोत्रानयुग्मानप्रदक्षिणमामन्त्र्य ब्राह्मणान्पूर्वेद्युर्ये मातृतः पितृतश्च दशपुरुषँ समनुस्थिता विद्यातपोभ्यां कल्याणकर्मणः शुचयः

4) mss. सदाः (M2 सदा) for सप्त; mss. पोत्नि° (M2 पोलि°) for योनि°; mss. °सत° (N °त्त°); mss. ऋतवाताँ (M2 ऋत°); S M2 °त्यार्षेयार्षेया.

5) M2 S °क्रीत° N B2 °क्रित° for °क्रीतक°; °कृतिम° not in the mss.; after the first भवन्ति follows 11.8.9.6-12; mss. समुत्पतिनि.

6) mss. परिगृहितु° (S °ही°), also in sū.8 (S M2 °ही°).

7) mss. अपि च; after कुर्यात् r.: न पञ्चातिप्रवृणीत इति.

9) mss. °षशाँ स्वासु; M2 °द्रिस्छँ N °द्रित्छूँ S B2 °द्रिछँ for °द्रिक्थँ; mss. चैषां त्रि°.

10) mss. °द्विश्यै°.

11) mss. °देतेमेव.

12) mss. पुरोहितप्रवरेण प्रवरो स्यादाचार्यप्रावरो (S °शवरो B2 प्रवरो) राजन्य.

13) mss. साष्णर्यं, also sū.14; mss. पोरुरवसेति, पुरुषोवत्.

15) पुरोहित not in the mss.; mss. प्रवरादेव (B2 S °रो°); sc.: इति ह विज्ञायते.

17) M2 अशेरा° N B2 अषेरा° S अवेर° for °र्षेरा°.

18) mss. मैथन°, रुष्यन्त°, °रोभिरि°.

21) S N B2 °पवनामुप° M2 °पवमानावुप°.

1 Cf. *W. Caland*, Altindischer Ahnencult.

2) mss. प्रायुग्मा°, °स्थितान्वि.

शुक्लवाससो ऽपराह्णे प्राचीनाववीतिकृतमण्डलोपरिपच्छौचानाचान्तान्प्राङमुखान्पितॄनुदङमुखान्विश्वेदेवान्भोजयेत् । २ । अर्घ्यपात्राण्युपकल्पयेद्द्वौ दैवे त्रीन्पित्र्य एकैकमुभयत्र वा । ३ ।। समन्या यन्तीत्यप आसिच्य सुमनसश्चोत्पूय यवान्प्रक्षिप्य " विश्वान्देवानावाहयिष्यामीत्युक्त्वा ब्राह्मणैरनुज्ञातो " विश्वे देवा ऋतावृधो " विश्वे देवासो अस्रिध इति यवान्प्रदक्षिणं प्रकिरेत् । ४ । पवित्रे पाणौ प्रदाय " हिरण्यवर्णाः शुचय इत्युक्त्वा " विश्वे देवा एष वो अर्घ्यः ।। पितॄन्पितामहान्प्रपितामहानावाहयिष्यामीत्युक्त्व ब्राह्मणैरनुज्ञात " उशन्तस्त्वा हवामहे " परेतन पितरः सोम्यास इति तिलान्प्रदक्षिणं प्रकिरेत् । ५ । पवित्रे पाणौ प्रदाय नामगोत्रे समुच्चार्य " मम पितरेष ते ऽर्घ्यः पितामह प्रपितामहेति । गन्धपुष्पधूपदीपाच्छादनान्तैरर्चयित्वा घृताक्तमन्नमादाय मेक्षणपाणिर"ग्नौकरणं करिष्यामीत्युक्त्वा ब्राह्मणैरनुज्ञातः " सोमाय पितृमते स्वधा नम इति जुहोति । ६ ।। यमायाङ्गिरस्वते पितृमते स्वधा नम इति द्वितीयाम"ग्नये कव्यवाहनाय स्वधा नम इत्यसँसक्तान्दक्षिणार्धपूर्वार्धे तृतीयाँ हुत्वोच्छिष्टं ब्राह्मणेभ्यः प्रदाय शेषं पिण्डपितृयज्ञवन्निदध्यात् । ७ । ।।१।।

अपि नः स्वकुले भूयाद्यो नो दद्यात्त्रयोदशीम् ।
पायसं मधुसर्पिर्भ्यां वर्षासु च मघासु च । १ ।
सौवर्णेषु च पात्रेषु राजतौदुम्बरेषु च ।
दत्तमक्षय्यतां याति खड्गेनार्यकृतेन च । २ ।

"पयः पृथिव्यामिति पायसं दद्यान्"मधु वाता ऋतायत इति मध्वाँयुर्देति घृतं दद्यात् । ३ ।। सत्यं त्वर्तेन परिषिञ्चामीति परिषिच्य तूष्णीँ वा " पृथिवी ते पात्रमिति पात्राभिमन्त्रणम् । ४ । ब्राह्मणाङ्गुष्ठमादाय " विष्णो हव्यँ रक्षस्वेति विश्वेदेवान्"विष्णो कव्यँ रक्षस्वेति पितॄनुदकं पाणौ प्रदाय " ओं भूर्भुवः स्वरिति त्रिरुक्त्वा " मधु वाता ऋतायत इति त्र्यृचं " प्रीयन्तां पितरः प्रीयन्तां पितामहाः प्रीयन्तां प्रपितामहा इति वाग्यतस्"तृप्यन्त्वितीष्टतमान्यन्नानि दद्यात् । ५ । त्रिः सावित्रीमधीते त्रीँश्चादितो ऽनुवाकान् । ६ ।। अत्र पितरो मादयध्वं " प्रजाः सृष्ट्वाँहो ऽवयज्यो शन्तस्त्वा हवामहे " ऽत्र पितरो मादयध्वमित्युक्त्वा परायन्ति । ७ ।। कृणुष्व पाजा इति पञ्च " स ते जानात्याँ नो अग्ने " पुनन्तु मा पितर इति पितॄनश्नत्सु जपेत् । ८ ।। तृप्ताः स्थ इति पृष्ठे"तृप्ताः स्म इति प्रत्याहुः । ९ । सकृदाचान्तेष्व"ग्निदग्धा इति भूमौ

4) mss. °त्यपसिच्य ; cf. 6.1.3.3 ; mss. असुधा; cf. 5.2.7.5.
5) cf. 11.3.4; 1.1.2 14; MS.I.10. 18:157.18.
6) mss. °गोत्रमुच्चार्य, मेक्षणेनपाणिनाग्नौ°.
7) B2 only दक्षिणार्धे.
**2** 2) N S खड्गेनार्ध° B2 °नार्ध°.
3) cf. 6.1.7.22; 5.2.2.14; MS.II. 12.1:144.14.
5) mss. हव्यँ for कव्यँ: N B2 इत्यृचं S इतित्यचं; mss. प्रियंतां thrice, वाग्यतास्तृ°, °तीष्टमान्य°; cf. MS.I. 1.3:2.11.
7) cf. 1.7.6.48; MS.I.10 17:156.8.
8) cf. 5.1.7.40; 5.1.4.16; 5.2.11. 29.
9) mss. प्रत्याह.

विकिरं निनयेत् । १० ।

अग्निदग्धास्तु ये जीवा ये ऽप्यदग्धाः कुले मम ।
भूमौ दत्तेन तोयेन तृप्ता यान्तु परां गतिम् ॥

इत्युदकं निनीय पिण्डपितृयज्ञवत्पिण्डान्निदध्यात् । ११ । अथाग्रभूमिमासिच्य " सुप्रोक्षितमस्त्वित्य"क्षय्य-मु"त्तिष्ठेत्युपोत्थाप्य " वाजे वाज इत्यभिप्रव्रज्याँ मा वाजस्येति प्रदक्षिणं कुर्याद्रजतं दद्यात्पूर्णपात्रं वा । १२ ।

दश पूर्वान्दशापरानात्मानं चैकविँशकम् ।
श्राद्धकृन्मोचयेत्पापान्महतो ऽप्येनसः पितॄन् । १३ ।
श्राद्धं च यो न दद्यात्पितृभ्यश्च कदाचन ।
षष्टिवर्षसहस्राणि विष्ठायां जायते कृमिः । १४ ।
यदेव तर्पयत्यद्भिः पितॄञ्श्राद्धे समाहितः ।
तेनैव सर्वमाप्नोति पितृयज्ञक्रियाफलम् ॥

पितृयज्ञक्रियाफलमिति । १५ । ॥२॥

**॥ इति मानवश्राद्धकल्पः समाप्तः ॥**

अथ वृद्धिश्राद्धकल्पँ व्याख्यास्यामः । १ ।

अथ चाभ्युदये प्राप्ते देवतास्थापनँ स्मृतम् ।
जातिधर्मकुलाम्नातँ लोकानाँ वृद्धिकारणम् । २ ।
कर्मादिषु च सर्वेषु मातरः सगणाधिपाः ।
पूजनीयाः प्रयत्नेन पूजिताः पूजयन्ति ताः । ३ ।
ब्रह्माण्याद्याः स्मृताः सप्त दुर्गाक्षेत्राधिपस्तथा ।
वृद्धौवृद्धौ सदा पूज्याः पश्चान्नान्दीमुखान्पितॄन् । ४ ।
तिस्रः पूज्याः पितुः पक्षे तिस्रो मातामहे तथा ।
इत्येता मातरः प्रोक्ता षितृमातृष्वसाष्टमी । ५ ।
प्रतिमासु च शुभ्रासु लिखित्वा वा पटादिषु ।

11) mss. °दद्यात् .
12) mss. °पोथ्थाय, °भिप्रवृज्या; cf. 5.1.3.11; 7.1.3.9.
13) mss. °विँशति.

**3** 2) mss. °कुलस्थानं; cf. Hemādri p.1537: आभ्युदयिके; Manu 9.84.
4) cf. Hemādri p.1538: °क्षेत्रगणाधिपाः, आदौ वृद्धौ.
5) mss. पञ्च.
6) mss. नैवेद्यश्च.

अपि वाक्षतपुञ्जेषु नैवेद्यैश्च पृथक्पृथक् ।
कुड्यलग्नां वसोर्धारां घृतेनैव तु कारयेत् ।
कारयेत्सप्त वा पञ्च नातिनीचां च नोच्छ्रिताम् । ६ ।
आयुष्याणि च शान्त्यर्थं जपेतत्र समाहितः ।
माङ्गल्यैर्गीतवादित्रैर्मातृणां पूजनं स्मृतम् । ७ ।
असकृद्यानि कर्माणि क्रियेरन्कर्मकारिभिः ।
प्रतिप्रयोगं नैताः स्युर्मातरः श्राद्धमेव च । ८ ।
गणशः क्रियमाणेषु मातृभ्यः पूजनं सकृत् ।
सकृदेव भवेच्छ्राद्धं होममन्त्राः पृथक्पृथक् । ९ ।
अतः परं प्रवक्ष्यामि विशेष इह यो भवेत् । १० ।
प्रातरामन्त्रितान्विप्रान्युग्मानुभयतस्तथा ।
उपवेश्य कुशान्दद्यादृजुनैव हि पाणिना । ११ ।
हरिता यज्ञिया दर्भाः पीतकाः पाकयज्ञिकाः ।
समूलाः पितृदैवत्याः कल्माषा वैश्वदेविकाः ।
द्वादशाङ्गुलप्रमाणेन पितृतीर्थेन संस्कृताः । १२ ।
सदा परिचरेद्भक्त्या पितृनप्यत्र देववत् । १३ ।
" पितृभ्य इति दत्तेषु उपवेश्य कुशेषु तान् ।
गोत्रनामानि वर्जन्ति पितृभ्यो ऽर्घ्यं प्रदापयेत् । १४ ।
नात्रापसव्यकरणं न पित्र्यं तीर्थमिष्यते ।
पात्राणां पूरणादीनि देवतीर्थेन कारयेत् । १५ ।
ज्येष्ठोत्तरकरान्युग्मान्कराग्राग्रपवित्रकान् ।
कृत्वार्घ्यं संप्रदातव्यं नैकैकस्यात्र दीयते । १६ ।
" मधु मध्विति यस्तत्र त्रिर्जपो ऽशितुमिच्छताम् ।
गायत्र्यनन्तरं सो ऽत्र मधुमन्त्रविवर्जितः । १७ ।
न चाश्नत्सु जपेदत्र कदाचित्पितृसंहिताम् ।
अन्य एव जपः कार्यो राक्षोघ्नः सुरदेववत् । १८ ।
" संपन्नमिति " तृप्ताः स्थ प्रश्नस्थाने विधीयते ।

11) mss. कुशो; cf. Hemādri p.1549 °दृजूनेव हि पतितान् .
12) mss. संस्यताः .
14) mss. इव; B2 वर्जति; cf. Karmapradīpa 1.2.7. b : गोत्रनामभिरामन्त्र्य पितृनर्घ्यं.
17) mss. शितिमि°, सोम for सो ऽत्र.

" सुसंपन्नमिति प्रोक्ते शेषमन्नं निवेदयेत् । १९ ।
ब्रूयात्तृप्तेषु " संपन्नमिति " तृप्ताः स्थ पार्वणे ।
विकिरं च तथा दद्याज्जुहुयाच्च ऋचाँ विना । २० ।
असोमपाश्च ये देवा यज्ञभागबहिष्कृताः ।
तेषामन्नं प्रदातव्यँ विकिरँ वैश्वदेविकम् । २१ ।

नवावरान्भोजयेद्युग्मान् वृद्धिषु प्रदक्षिणमुपचारो ' यवैस्तिलार्थान्कुर्वन्ति । २२ । दध्यक्षतबदरमिश्रान्पिण्डान्निदध्यात् । २३ । नान्दीमुखान्पितॄन्प्रीणन्ति । २४ ।

" नान्दीमुखाः पितर इति कुर्यादावाहनादिकम् ।
" प्रीयन्तामिनि च ब्रूयुः पिण्डान्स्वाहेति निक्षिपेत् । २५ ।
मातृपूर्वान्पितॄन्पूज्य ततो मातामहाँस्तथा ।
मातामहीस्तथा केचिद्युग्माँश्च भोजयेद्द्विजान् । २६ ।
द्वौद्वावभ्युदये पिण्डावेकैकस्य पितुःपितुः ।
पार्वणे पिण्डमेकैकं त्रयाणां च पृथक्पृथक् । २७ ।
त्रयाणामुदकं कार्यं त्रिषु पिण्डः प्रवर्तते ।
ऊर्ध्वं नान्दीमुखं प्रोक्तं नामगोत्रापहरकम् । २८ ।
स्वपितृभ्यः पिता दद्यात्सुतसँस्कारकर्मसु ।
विवाहादौ स्वपितृभ्यः पुत्रो दद्यात्सदैव हि । २९ ।
नानिष्ट्वा तु पितॄञ्श्राद्धे वैदिकं कर्म आरभेत् ।
तेभ्यो ऽपि पूर्वेद्युः पूर्वं पश्चान्नान्दीमुखान्पितॄन् । ३० ।
आधाने होमयोश्चैव वैश्वदेवे तथैव च ।
बलिकर्मणि दर्शे च पौर्णमासे तथैव च ।
आग्रायण्यां पाकयज्ञे वदन्त्येवं मनीषिणः ।
एकमेव भवेच्छ्राद्धमेतेषु न पृथक्पृथक् । ३१ ।

अथाप्रभूमिमासिच्य " सुप्रोक्षितमस्त्विवति " शिवा आपः सन्त्विवति युग्मानेवोदकेन च " सौमनस्यमस्त्विवति च पुष्पमक्षतं चारिष्टं चास्त्विवत्यक्षतान्प्रतिपादयेत् । ३२ ।

अक्षयोदकदानं च त्वर्घ्यदानवदिष्यते ।
षष्ठ्यैव नित्यं तत्कुर्यान्न चतुर्थ्या कदाचन । ३३ ।

---

26) cf. Hemādri p.1542: मातामहीस्तत: केचिद्युग्मा भोज्या द्विजातयः.
28) mss. उर्द्ध नान्दि°, °पहारकं.
31) mss. आधान, वैश्वदेवं, एकमेक.
32) mss. पुष्पम अक्ष°; cf. 11.9.2.12.
32-34) cf. Karmapradipa I.4.5-10.
33) N B2 षष्ट्यैव S षष्टीव; mss. तत.

प्रार्थनासु प्रतिप्रोक्ते सर्वास्वेव द्विजोत्तमैः
युग्मानेव स्वस्तिवाच्य अङ्गुष्ठाग्रग्रहं सदा ।
कृत्वा धुर्यस्य विप्रस्य प्रणम्यानुव्रजेत्ततः । ३४ । ॥३॥

**॥ इति मानवसूत्र आभ्युदयिकश्राद्धम् ॥**

अथ परिशिष्टम् । १ । सँवत्सरः प्रजापतिस्त'स्य यदुदगयनँ शुक्लो ऽहः ' पूर्वाह्णस्तद्देवानां मध्यंदिनो मनुष्याणामपराह्णस्तत्पितृणाम'थ यथोभयत इज्यते । २ ।

कुर्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरेत् । ३ ।
अष्टकापार्वणश्राद्धं कृष्णपक्षो ऽयनद्वयम् ।
द्रव्यब्राह्मणसंपत्तिः श्राद्धकालाः प्रकीर्तिताः । ४ ।
उद्वाहे पुत्रजनने पित्र्येष्ट्याँ सौमिके मखे ।
तीर्थे ब्राह्मण आयाते षडेते जीवतः पितुः । ५ ।
अन्वष्टक्यं गयाप्राप्तौ सत्याँ यच्च मृते ऽहनि ।
मातुः श्राद्धँ सुतः कुर्यात्पितर्यपि च जीवति । ६ ।
कन्यागते सवितरि यान्यहानि च षोडश ।
क्रतुभिस्तानि तुल्यानि । पितृणां दत्तमक्षयम् । ७ ।

पञ्चमीप्रभृत्यपरपक्षस्य । पञ्चमीं पुत्रकामः षष्ठीं धनकामः सप्तमीं पशुकामो ऽष्टमीमारोग्यकामो नवमीं तेजस्कामो दशमीमन्नाद्यकाम एकादशीमृद्धिकामो द्वादशीँ वृद्धिकामस्त्रयोदशीँ यशस्कामश्चतुर्दशीँ शस्त्रहतस्यारोग्यकामो ऽमावास्यायाँ सर्वकामः । ८ । तिलैः श्राद्धं पुष्टिकामः कुर्यादपूपैरृद्धिकामो घृतगुडतिलैस्तेजस्कामः स्वस्तिकामः सौभाग्यकाम आरोग्यकामो वा परमान्नकृसरान्नमाषदधियवागूभिः सर्वकामः । ९ ।

पूर्वेद्युरामन्त्रितैर्विप्रैः पितरः सँविशन्ति वै ।
यजमानश्च ताँ रात्रिँ वसेयुर्ब्रह्मचारिणः । १० ।
श्राद्धं दत्त्वा च भुक्त्वा च अध्वानँ यो ऽधिगच्छति ।
तं मासं तस्य पितरो भुञ्जते पाँशुभोजनाः । ११ ।

34) mss. प्रथमासु प्रतिप्रोक्त, °वाच्यांगुष्टमादाय प्रग्रहः .
mss. अभ्युदक°, r. अभ्युदय° ?— The mss. do not give a number to the 3d and the 4th khaṇḍa, but give ॥ १ ॥ after 11.9.3.24, N S ॥ २ ॥ after 11.9.4.4.

4 10) mss. °मंत्रितो, संवसंति ; cf. Hemādri p.1016.
11) N S चमध्वानं B2 चमनध्वानं.

श्राद्धं दत्त्वा च भुक्त्वा च मैथुनं यो ऽधिगच्छति ।
तं मासं तस्य पितरो भुञ्जते रेतभोजनाः । १२ ।
श्राद्धमध्वा भवेदश्वः पुनर्भुङ्क्ते तु वायसः ।
कर्मकृज्जायते दासः स्त्रीगम्यो ग्रामशूकरः । १३ ।
द्वौ दैवे त्रीन्पित्र्य एकैकमुभयत्र वा ।
भोजयेत्सुसमृद्धो ऽपि न प्रसज्जेत विस्तरम् । १४ ।
सत्क्रियां देशकालौ च द्रव्यं ब्राह्मणसंपदः ।
पञ्चैतान्विस्तरो हन्ति तस्यान्नेहतु विस्तरम् । १५ ।
यत्नेन भोजयेच्छ्राद्धे बह्वृचं वेदपारगम् ।
शाखान्तगमथाध्वर्युं छन्दोगं वा समाप्तिगम् । १६ ।
पञ्चाग्निस्त्रिसुपर्णश्च त्रिणाचिकेतः षडङ्गवित् ।
ब्रह्मदेयानुसंतानो ज्येष्ठसामग एव च । १७ ।
मातामहं मातुलं च स्वस्रीयं श्वशुरं गुरुम् ।
दौहित्रं विट्पतिं बन्धुमृत्विग्याज्यौ च भोजयेत् । १८ ।
यस्य श्राद्धे न भुञ्जन्ति ब्रह्मणा वेदपारगाः ।
अकृतं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति । १९ ।
यस्य श्राद्धे न भुञ्जन्ते ब्राह्मणाः स्वशाखिनः ।
आसुरं तद्भवेच्छ्राद्धं पितॄणां नोपतिष्ठति । २० ।
वेदार्थवित्प्रवक्ता च ब्रह्मचारी सदा स्थितः ।
शतायुश्चैव विज्ञेया ब्राह्मणाः पङ्क्तिपावनाः । २१ ।
एषामन्यतमो यस्य भुञ्जीत श्राद्धमर्चितः ।
पितॄणां तस्य तृप्तिः स्याच्छाश्वती साप्तपौरुषी । २२ ।
तिला रक्षन्तु दैतेयान्दर्भा रक्षन्तु राक्षसान् ।
तस्माद्दानेषु दातव्या आत्मनो भूतिमिच्छता । २३ । ।।४।।

**।। इति श्राद्धपरिशिष्टं समाप्तम् ।।**

---

13) r. probably with Hārita (India Office 2489) 72: अध्वनि तु भवेदश्वः.

14) mss. प्रसेज्जेति.

15) mss. नैहतु.

17) mss. पंचाग्नि त्रिसुपर्ण च.

20) mss. असुरं.

21) mss. वेदार्थीविप्रवक्ता (B2 °र्थि°).

22) mss. शाखतां सप्त°.

23) mss. वैदेहान्, आसनो. — mss. श्राद्धमध्शिष्टः समाप्तः.